



# सूर्योदयः

( श्रीभारतधर्ममहामण्डलस्य त्रैभाषिकं त्रैमासिकञ्च मुखपत्रम् )

( वार्षिकं मूल्यम् अग्रिमं मुद्रात्रयम् )

## सदुपदेशाः

कान्तारं न यथेतरो ज्वलयितुं दक्षो दवाग्निं विना
दावाग्निं न यथाऽपरः शमयितुं शक्तो विनाऽम्भोधरम् ।
निष्णातः पवनं विना विसरितुं नान्यो यथाऽम्भोधरं
कर्मौघं तपसा विना किमपरं हन्तुं समर्थस्तथा ॥

नो भूयाज्ज्वलनैर्विना रसवती पाको यथा कर्हिचित्,
संजायेत यथा विना मृदुमृदां पिण्डं न कुंभः क्वचित् ।
तन्तूनां निचयाद् विना सुवसनं न स्याद्यथा जातुचि-
न्नोत्पद्येत विनोत्कटेन तपसा नाशस्तथा कर्मणाम् ।

यावद्व्याधिविबाधया विधुरतामङ्गं न संसेवते,
यावच्चेन्द्रियपाटवं न हरति क्रूरा जरा राक्षसी ।
तावन्निष्कलनिश्चलामलपदं कर्मक्षयायाधुना,
ध्येयं ध्यानविचक्षणैः स्फुटतरं हृत्पद्मसद्मोदरे ।

पठकः पाठकश्चैव ये चान्ये शास्त्रचिन्तकाः ।
सर्वे व्यसनिनो ज्ञेया यः क्रियावान् स पण्डितः ॥

# ❋ उद्बोधनम् ❋

ले०—रामस्वरूप शास्त्री, 'अमरः' तालबेहटस्थः।



शृण्वन्तु संस्कृतज्ञाः!
निद्रां त्यजन्तु विज्ञाः! ॥

न हि वार्ता नवीना,
सुरभारती नु दीना?
परिदृश्यतेऽत्र लीना;
निन्दन्ति निन्दितज्ञाः।
निद्रां त्यजन्तु सुज्ञाः! ॥ १ ॥

निजसंस्कृतिर्मलीना;
परपद्धतिस्तु पीना।
विज्ञाः परन्तु दीनाः,
जानन्ति तत्त्वतज्ञाः।
निद्रां त्यजन्तु सुज्ञाः ॥ २ ॥

अधुना स्वतन्त्रदेशः,
इह विस्मृतो महेशः।
क्लेशस्तथाऽवशेषः,
विलसन्ति सौम्यप्रज्ञाः!
निद्रां त्यजन्तु सुज्ञाः! ॥ ३ ॥

राम-स्वरूप-ध्यानम्,
क्रियतामुदार-ज्ञानम्।
सङ्घे बलं निधानम्,
जानन्ति स्वल्पप्रज्ञाः।
निद्रां त्यजन्तु सुज्ञाः ॥ ४ ॥

---

## शोकप्रस्तावः।

बिहारप्रान्तीय-मुख्यमन्त्रिणः श्रीकृष्णसिंहमहोदयस्य निधनसमाचारमुपलभ्य शोकसंतप्तहृदयाः पण्डित सभासदस्या वयम् जगन्नियन्तारं परमेश्वरं प्रार्थयामहे यत् दिवंगताय मुख्यमन्त्रिणे अक्षय्यां गतिं देयात्। तथा शोकसमुद्विग्नमानसेभ्यस्तत्परिवारेभ्यश्च धैर्यं शान्तिञ्च प्रदेयादिति।

प्रधानमन्त्री—**श्रीरामसकल उपाध्यायः,**
शाहाबाद पण्डितसभायाः,
भूतपूर्व प्रिंसिपल सं० महाविद्यालयकालेज, आरा।

---

## केन्द्राध्यक्षमहाशयोंसे निवेदन

प्रायः देखा जाता है कि परीक्षावेदनपत्र भरते समय परीक्षार्थी अपने नाम-ग्राम अध्यापकनाम पितृनाम आदि लिखनेमें भूल कर जाते हैं। परीक्षाफल प्रकाशित हो जानेपर किसीकी दृष्टि इस भूलपर पड़ती है अथवा आवेदनपत्रके अनुसार ही प्रमाणपत्र तैयार होनेपर जब उनके पास भेजा जाता है, तब उसका संशोधन करानेका वे प्रयास करते हैं। इसके लिये—केन्द्राध्यक्ष महाशयोंसे अनुरोध है कि आवेदनपत्रके भेजनेसे पहले उसका निरीक्षण अच्छी तरहसे कृपया कर लें कि ठीक-ठीक भरा गया है, या नहीं। यदि कोई त्रुटि हो तो उसको सुधार कर भेजना चाहिये। आगामी परीक्षा १० अप्रैल से १४ तक होगी।

—परीक्षामन्त्री

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य त्रैभाषिकं त्रैमासिकञ्च पत्रम् ।

( वार्षिकं मूल्यम् अग्रिमं मुद्रात्रयम् )

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥



३६ तने वर्षे दशम एकादश-द्वादश संख्याः] तुलावृश्चिकधन संक्रान्तयः २०१७ वैक्रमाब्दः [अक्टूबर-नवम्बर-दिसम्बर १९६०

## सम्पादकयम्

### सूर्योदयस्य भक्तिविशिष्टाङ्कः ।

अखिल भारतीय विराट् धर्मसंस्था श्रीभारत धर्म-महामण्डलमन्त्रिसभया 'सूर्योदय' भक्तिविशिष्टाङ्क-प्रकाशनार्थं सुनिर्णीतम् । अत्राङ्के भक्तिमहत्त्व प्रति-पादकाः पाण्डित्यपूर्णाः गवेषणात्मकाः प्रबन्धाः प्रका-शिता भविष्यन्ति । विशेषतः कलिकालेऽस्मिन् स्वल्प-प्राणायुमेधसां भगवद्भक्तिरेवैकमात्रं सरलं सुखसाध्य-मवलम्बनमस्तीति निर्विवादम् । जन्मजरामरणानाम-वर्णनीय दुःखपरम्परां सहमानस्य जीवस्य कल्याण-धायकः भगवद्भक्तिमन्तरा नान्यो मार्ग इति निश्चित मेव । अत एव साम्प्रतमेतादृशस्य विशिष्टस्याङ्कस्य विद्यते महती प्रयोजनीयता । विशिष्टाङ्कस्य कृते लेखकैः सरलसंस्कृतगिरा भक्तिविषयकप्रबन्धाः प्रेषणीयाः, पाठकैरन्यैश्च भक्तिपक्षावलम्बिभिः सज्जनै ग्राहकसंख्या बर्धनेन सहायकैर्भवितव्यमिति निवेद्यते ।

### संस्कृतविद्यापीठपरीक्षा

अखिलभारतीयधर्मसंस्था - श्रीभारतधर्ममहा-मण्डल - सञ्चालित - धार्मिकाध्यात्मिक - संस्कृतविद्या-पीठस्य वर्षेऽस्मिन् परीक्षाः सर्वाः वैशाखकृष्णदशमी सोमवासरतः चतुर्दशीशुक्रवासरपर्यन्तं तदनुसारतः अप्रेलमासस्य दशतारिकातः १०-४-६१ चतुर्दशतारिकां यावत् गृहीता भविष्यन्ति । कार्यालयतो नवम्बरमास एव केन्द्राध्यक्षमहाशयानां समीपे प्रयोजनानुसारम् आवेदनपत्राणि प्रेषितानि सन्ति । प्रतिकेन्द्रं प्रहितेषु पत्रेषु बहुशो निवेदितम्-यत् निर्दिष्टसमयाभ्यन्तरे स-शुल्कानि आवेदनपत्राणि प्रेषणीयानीति । केन्द्राध्यक्ष-महाशयैः कृपयात्र विषये ध्यानं दत्वा संस्कृतविद्यापीठ-परीक्षाकार्यसम्पादने सहयोगो देय इति प्रार्थना ।

### ग्राहकेभ्यो निवेदनम्

सूर्योदयोऽयं नियमितरूपेण संस्कृतसंसारस्य सेवां करोति । संस्कृतभाषायां सर्वतः प्राचीनमिदमेव पत्रमिति नास्ति संस्कृतसेवकानामप्रत्यक्षम् । वार्षिकमूल्यमेतस्य मुद्रात्रयमेव वर्तते । बहूनां ग्राहकमहोदयानां वार्षिकं मूल्यं न समागतमस्ति । एतन्निवेदनदर्शनसमकालमेवा-ग्राहकानुग्राहकमहोदयै वार्षिकमूल्यं मुद्रात्रयं नूनमेव धनादेशद्वारा प्रेषणीयम् । स्वतन्त्रे भारते संस्कृत भाषा-भ्युदयाभिलाषुकैः सुधीधौरेयैः विद्यार्थिबन्धुभिश्चात्र ध्यानं देयमिति ।

—:❋:—

# महात्मा गान्ध

## ले०—विद्यासागरः श्रीबाबूदेवीनारायण एडवोकेटः

वाराणसेयः ।

**श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेनोक्तम्ः—**

"यदा यदा हि धर्मस्य, ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

एष सिद्धान्तः प्रायशस्सर्वमानवसमाजेषु वरीवर्ति। यदा यदा हि मनुष्याःकुसंस्कारै र्भ्रमैश्च वेष्टिता भवन्ति, तदा तदा ह्यज्ञानान्धकारमपाकर्त्तुं महातेजसःसत्यसनातनपुरुषस्य भगवतस्तेजोऽशं प्राप्य धर्मसंस्कारका महापुरुषाः संसारेऽस्मिन्नाविर्भवन्ति ।

अस्मिन् भारतवर्षे प्रसिद्धः काठियावाड़प्रदेशः विराजते । तत्र सुदामा ( पोरवन्दर ) नाम्नी नगरी वर्तते । पोरवन्दरराजधान्याम् अष्टषष्ट्यधिकाष्टादशशततमे ( १८६८ ई० ) ईशवीयसंवत्सरे अक्टूबरमासे द्वितीय दिवसे भारतसमुद्धारकः पतितपावनः स्वाराज्यसंस्थापकः महात्मा मोहनदासगान्धो महोदयोऽवातरत् तद्विषये श्रीकनुगान्धीमहोदयेन उक्तम्ः—

"महती देवता ह्येषा नररूपेण तिष्ठति"

श्री स्वामिभगवताचार्य्येण पण्डितराजेन भारतपारिजाते श्रीमहात्मगान्धिचरिते महाकाव्ये लिखितम् "जयत्वसौ कोऽपि महायमीश्वरोऽपवित्रयत्रीणिजगन्नियोऽजसा ।

दया सदाचारविचारशिक्षणान्महात्मगाँधिः सकलश्रतिश्रतः ।"

"यदा यदा धर्मधियः पराहताः सदा तदा यत्र परात्परः प्रभुः।
अवातरद्धर्मपथ व्यवस्थितिं विनिर्ममेऽनन्ततनुः पुनःपुनः॥

अस्य महात्मनः मोहनदासस्य मातुरभिधानं 'पुत्तलिदेवी' तथा पितुश्च 'कर्मचन्दगांधी' इति । स तु पोरवन्दरराज्यस्य प्रधानमन्त्री आसीत् ।

श्री मोहनदासगांधीमहोदयस्य १८८३ ईसवीये श्रीमती कस्तूरवासंगे विवाहो जातः । तत्पश्चात् अयम् आंग्लभाषायाः मैट्रिक्युलेशनपरीक्षां समाप्य लन्दनं गत्वा महाप्राड्विवाकः (वैरिष्टरः) भूत्वा भारतं प्रतिन्यवर्तत । अथ एकस्य महतोऽभियोगस्य कार्यसम्पादनाय श्री अबदुल्लासेठेन प्रार्थितोऽयमफ्रिकां गतः । निजबुद्धिकौशलेन तमभियोगं पूर्णतया कुशलपूर्वकं समाप्य अफ्रिकायां बहूनि वर्षाणि स्थित्वा तत्रत्यानां भारतीयानां सामान्यप्रजाधिकारम् उच्छिद्यमानं, महता श्रमेण, त्यागेन, तपसा, सत्याग्रहेण च संसाध्य संस्थाप्य च, भारतवर्षम्पुनरागत्य, स्वदेशस्य मातृभूम्याः ब्रिटिशशासकानामधिकारात् समुद्धाराय प्रायः सप्तविंशतिवर्षाणि यावत् सत्याग्रहरूपं धार्मिकाध्यात्मिकयुद्धमरचयत्

पण्डितराजस्वामि भगवदाचार्य्येण पारिजातापहारे महाकाव्ये लिखितम्ः—

भारते निखिलेष्वेव ग्रामेषु नगरेषु च ।
प्रतिवीथि प्रतिवर्त्म दीपमालाः प्रभासिताः ॥
त्रिलोकीमाश्नुतैवास्य जयघोषो महात्मनः ।
दारयन्हृदयान्येव हीनानां हीनकर्मणाम् ॥
यतेरेव प्रतापेन कोटीनां सन्नृणां पुनः ।
मनोभाववलेनापि संजातः सत्त्वसंजयः ॥
सप्तचत्वारिंशदधिकैकोनविंशतितमे ( १९४७ )

ईशवीये वर्षे अगस्तमासे पंचदशदिवसे भारतस्य मोक्षमसाधयत्।

"अगस्तमासस्य च पंचदश्यां,
यतः प्रतापेन च मध्यरात्रे।
दास्यादसौ देश इतो विमुक्तिं,
धन्या वयं स्मः स च धन्य एव ॥"

[ पारिजातसौरभे ]

भारतराजधान्यां दिल्लीनगरे विरलाभवने तिष्ठन् स इतस्ततः उत्पद्यमानान् हिंन्दूमुसलमानकलहान् निवारयति स्म। तस्य विश्वव्यापी महान् आध्यात्मिक प्रभावोऽऽसीत्। विरलाभवने प्रार्थनासभायां अष्टचत्वारिंशदधिकैकोनविंशतिशततमे (१६४८) ईसवीये जनवरीमासस्य अन्तिमे दिवसे गोड्से इत्युपनामको नाथूरामः कश्चित् मनुष्यापसदः पिस्टोलनामकेन आग्नेयास्त्रेण तं जगद्वन्दनीयं महामहिमानं पुरुषोत्तमम् श्रीकृष्णावतारम् राष्ट्रपितरम् उरसि उदरे च अविध्यत्। तेन स युगावतारः परधामम् प्रयातः। एतादृशः परोपकारपरायणः, सत्यकामः, सत्यसंकल्पः, सत्यसंधः, सत्यव्रतः अहिंसाधर्माचार्य्यः सहृदयो दीनानाथो, दीनदयालुः, पतितपावनः कश्चिदपि मानवदेहो नासीत्।

श्री परमहंस परिव्राजक स्वामि श्रीमद्भगवदाचार्यपण्डितराजेन स्वप्रणीते पारिजातसौरभे ( श्री महात्मागांधि चरिते ) महाकाव्ये लिखितम्।

"नहि राष्ट्रपिताद्य वर्त्तते गुरुदेवो गत एव मां त्यजन्।
परमः सुहृदस्तमन्वगादधुना को हि निषेव्यतां मया" ॥

"यज्ज्योतिः प्रकटयितुं महायतीन्द्रो, स्वात्मानं परम कृपानिधि व्यहौषीत्।

अज्ञानान्धवृतमनोऽनिले यथेच्छं,
तज्ज्योयात्सततमितोव नोस्ति कार्य्यम्।
गान्धिः स्वीयगृहे नित्यजनिरतो ह्याराधनं श्रीगिरः।
कृत्वा लन्दनमैदधीत्य च ततो वैरिष्टरत्वं गतः।
अफ्रीकामुपगम्य भारतभुवो जातान् स्थितांस्तत्रनॄन्,
साहाय्येन कृतार्थयन्नथ सिताञ्जित्वा ययौ भारतम् ॥
देशोऽयं शतवर्षतोप्यधिकतः श्वेतांगलोकैः कृतो,
विद्याबुद्धिधनादिभिः परिभूतोप्येभिः स्वतन्त्रेतरः।
सेवाग्रामनिवासशील ऋषिराट् छान्तो विजित्याखिलां
स्तान्संस्थाप्य गतः स्वराज्यमतुलं लोकोत्तरेणाध्वना"।

—:※:—

## भविष्यपुराणे विष्णुस्तुतिः।

( संस्कृतभाषायामपि दोहा, चौपाई छन्दो दृश्यते )

चौ०—जय जय जय निर्गुणगुणधारिन्।
रग जगजीवतत्त्व-शुभकारिन् ॥
सारभूतसद्गुणमयतत्त्वैः।
देवान् रचयति पाति गुणसत्त्वैः ॥१॥
तस्मै नमो नमो गुणराशे।
देववृन्दहृदि कृष्णप्रकाशे ॥
रजोभूत-तत्त्वेभ्य उताशु।
विचरति भुवि च नरान् स्वयमाशु ॥२॥
पाति हन्ति यो देव उदारः।
तस्य शिरसि संस्थित जगभारः ॥
पाहि नाथ नो दैत्यविनाशिन्!
कालजनितलीलागुण - भासिन् ॥३॥

दो०—तेषामिति वचनं प्रभुः श्रुत्वा ह्यत्रनिमिवाशु।
यथा जनिष्यति स प्रभुः तच्छृणु वैनय आशु ॥४॥

संकलयिता—

श्री सरयूप्रसादशास्त्री 'द्विजेन्द्र'

( वाराणसेयः )

## गङ्गास्तवनम् ।

अये मातर्गङ्गेऽशरणशरणं लोकजननी
विपन्नानां त्रात्री त्रिभुवन विधात्री यदसि तत्
त्वया वेदं वेदं विमल सलिले पूर्णकलिलो
जनोऽयं निस्तार्यो वितत-भवतापान्वितमतिः॥१॥
तपः पुञ्जै राज्ञो विमल चिदनन्तद्रवसरित्
स्वरूपेणोद्भूय प्रचरसि जगत्पावनपयाः
सहस्राणां षष्ठयाः सगरतनयानां शुभगति-
प्रदात्री त्वं मातर्जनिजनित-जालं जरयसि ॥२॥
अहो ! भव्यं भव्यं जगति तव कल्याणशरणी
न च ध्यानं दानं श्रुतमथ वितानं विदधतः
श्रयन्ते नायासं मुनिगणदुरापां शुभगतिं
न कापण्यं गङ्गे कथमपि विधेयं मयि शिवे ! ॥३॥

अहं द्वारं द्वारं जननि वहुवारं घुटितवान्
त्रपां त्यज्यं त्याज्यं पुनरपि च नैराश्यमसुपम्
महापापक्षोणीधर - विततवक्षच्छिदशने
दयापात्रं श्रान्तं कथमपि न मां देवि रहय ॥४॥

वृहद् व्यलीकाचलपक्ष शम्वं,
विचूर्णिताशेषविपत्कदम्वम्
समुच्छलल्लोलतरङ्गभङ्गम्,
तनोतु शं तेऽम्बु ममावलम्वम्" ॥५॥

आचार्य विष्णुप्रसादपाण्डेयः
उपदेशक महाविद्यालयस्य वाराणसी ।

—❀—

# काव्यस्वरूपनिरूपणम् ।

लेखकः—सरयूपारीण कुलकमलदिवाकरस्य पण्डित घनपति चतुर्वेदिनो भारद्वाजात्मजः
पण्डित शिवदत्तचतुर्वेदी साहित्याचार्य प्राध्यापकः
"गोयनका संस्कृतमहाविद्यालय" वाराणसीस्थः ।

काव्यार्णवसमुद्भूतरत्न कामनयाऽधुना ।
रत्नाकरसमभ्यासे विवुधाः श्रुतकीर्तयः ॥ १ ॥

शव्दार्थौ दोषरहितौ सगुणौ क्वाप्यभूषणौ ।
काव्यमाहुस्तदप्यन्यैः खण्डितं लोकविश्रुतैः ॥ २ ॥

वाक्यं रसात्मकं काव्यं ध्वनिर्नामोत्तमं तथा ।
केचित्तु शव्दमात्रं हि, अन्ये वक्रोक्ति जीवितम्॥३॥

एवं विवादान् संवीक्ष्य कविनां मनसो मुदे ।
चतुर्वर्गादिफलकः काव्यरत्नाकरो मया ॥४॥
निर्मितः सकलान् प्राचां ग्रन्थानालोड्य तत्त्वतः ।
सत्स्वलङ्कारग्रन्थेषु सतां सम्मोददायकः ॥ ५ ॥

साहित्ये प्रस्थानचतुष्टयं प्रसिद्धम् । तत्र प्रथमप्रस्थाने भामहादिमम्मटान्ता आलङ्कारिकाः शव्दार्थयोः समप्राधान्येन काव्यत्वमामनन्ति । तत्राह भामहः—

१६८४०



"शब्दार्थौ सहितौ काव्यम्"

**कुन्तलस्तु—**

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्यं तद्विदां ह्लादकारिणि" ॥

**वामनः—**

"काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते । भक्त्या तु शब्दार्थमात्रवचनोऽत्र गृह्यते"॥

अतः शब्दार्थसाहित्यमेव काव्यम् । द्वितीयप्रस्थाने-दण्ड्यादयः-अर्थोपसर्जनीभूतं शब्दमेव काव्यं वदन्ति ।

"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली"

पक्षोऽयं प्राचीनतमः । तथा हि वामनः—

"रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः" ॥

तृतीयप्रस्थाने—आनन्दवर्धनादिमारभ्य ध्वन्यभाववादिपर्यन्तं सर्वे रसप्रधानं काव्यं स्वीकुर्वन्ति । तत्र महिमभट्टः-

"रसात्मकत्वं काव्यस्य निर्विवादसिद्धम्"

**अग्निपुराणेऽपिः—**

"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्"

चतुर्थप्रस्थाने—अभिनवगुप्तपादाचार्याः—

ध्वनेस्त्रैविध्यमङ्गीकृत्य वस्त्वलङ्काररसादिव्यङ्ग्यानां काव्यत्वमामनन्ति । अतः प्रथमप्रस्थानतो मम्मटस्य काव्यलक्षणसमीक्षा पूर्वं क्रियते । यत्—

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" तदन्ये न मन्यन्ते । तथा हि—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः ।
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः॥
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा ।
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

अत्र विधेयांशस्य न्यक्कारस्य पश्चादभिधानमुद्देश्यस्यायमित्यस्य पूर्वमभिधानमुचितमपि कविना न तथा कृतमतो वाक्यगतोऽविमृष्टविधेयांशदोषः ।

अतः काव्यलक्षणस्याव्याप्तिः । तन्न सम्यक् । कथाप्रतिनायकस्य विजितलोकत्रयस्य लंकेशस्योक्तौ व्यज्यमानोद्वेगादिहेतुकोऽविमृष्टविधेयांशदोषः सुतरामौचित्यमावहति । नायकस्योत्कर्षद्योतनात् । उक्तं हि ध्वनिकारेण—

नायकस्याभिनन्दनीयोदयस्य कस्यचित्प्रभावातिशयद्योतनार्थं तत्प्रतिपक्षस्य ये करुणादयो रसास्ते परीक्षकाणां न वैक्लव्यमादधति । प्रत्युत प्रीत्यतिशयनिमित्ततां प्रतिपद्यन्ते ।

न चाविमृष्टविधेयांशस्य नित्यदोषतेति वाच्यम् । तत्र दोषाङ्कुशप्रकरणे—

"अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।
अदोषता च गुणता ज्ञेया चानुभयात्मता" ॥

इति तेनैव प्रतिपादितत्वात् । पुनरप्युक्तम्—

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा" ॥

**अन्यच्च—**

"यशोधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः" ॥

इत्यत्र तेन प्रतिपादितः वाक्यगतभग्नप्रक्रमदोषो ऽप्यविवेकमूल एव। अत्रापि श्रीमत्या द्रौपद्या उक्तौ व्यञ्जनया निराकारातिरेकस्याभिव्यक्त्या नोक्तदोषस्य लेशोऽपि। एवमभिज्ञानशाकुन्तले—

"भो भो राजन्? आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः" इत्यत्रापि न च्युतसंस्कारः। मृगपरिरक्षणे वक्तृसंरम्भात्।

एवं काव्यस्वरूपेणाभिमतयोः शब्दार्थयोः सगुणत्वविशेषणमप्ययुक्तमेव। गुणानां रसमात्रधर्मत्वात्। इत्यपि दर्पणकारोक्तिरविवेकमूलैव "एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः" इति तेनैवाष्टमपरिच्छेदे प्रतिपादितत्वात्। गुणानां रसमात्रधर्मत्वेऽपि परम्परया तदभिव्यञ्जकशब्दार्थनिष्ठत्वात्। अत एवाष्टमोल्लासे श्रीमम्मटाचार्यैः प्रतिपादितम्—

"गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता"

उक्तञ्च प्रदीपप्रभोद्योतकारैरपि—

"गुणस्य रसनिष्ठत्वेऽपि तद्व्यञ्जकपरं गुणपदम्"

किं वहुना, तद्व्यञ्जकता तेनैवाष्टमपरिच्छेदे प्रतिपादिता।

**यथा हि—**

मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान्विता।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा।
अत एव नीरसे नाव्याप्तिः; इत्युद्योते स्पष्टम्।

अन्यच्च—

"पुनः क्वाप्यनलङ्कृती" इति मम्मटोक्तिर्न समीचीना; इति दर्पणकारः।

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः।
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः॥
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ।
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥

पद्यमिदम्— विज्जकादिवत्कस्याश्चित्कवयित्र्याः शिलाभट्टारिकायाः स्वाधीनपतिकायाः। अत्रोत्कण्ठारूपकार्यं प्रति वरोपकरणयोरभावस्यैव हेतुत्वं तदभावेऽप्युत्कण्ठारूपकार्योत्पत्तेः किं विभावना; आहोस्वित् वरोपकरणयोर्हेतुत्वेन सतोरपि तत्कार्यस्यानुत्कण्ठाया अभावस्य न वर्णनाद्विशेषोक्तिरिति सन्देहसंकरालङ्कारस्य स्फुटत्वम्।

**न च—**

"अनायासकृशं मध्यमशङ्कतरले दृशौ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः"॥

इत्यादिवदत्र साक्षान्नञः प्रयोगाभावान्न विभावनायाः स्फुटत्वम्—

**न वा—**

"धनिनोऽपि निरुन्मादाः युवानोऽप्यचञ्चलाः।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः"॥

इत्यादिवदत्र कार्याभावबोधकस्य साक्षान्नञःप्रयोगाभावान्न विशेषोक्तिरपि स्फुटत्वमिति वाच्यम्। उभयत्र नञ् प्रयोगाभाव एव विभावनाविशेषोक्त्योः सन्देहसंकरस्याङ्गीकरणीयत्वात्। इति साहित्यदर्पणटीकाकारेण श्रीमता महामहोपाध्यायेन श्रीहरिदाससिद्धान्तवागीशेनोक्तम्; तत्तु गजनिमीलिकैव। उत्कण्ठाहेतुः वरोपकरणयोरनुपभुक्तताया अभाव उक्तः, परन्तु नानुत्कण्ठास्वरूपतया, किन्तूत्कण्ठास्वरूपत्वेनैवातो न विभावनायाः स्फुटत्वम्, न वा विशेषोक्ते-

रपि। उक्तरीत्या निषेधमुखेनाप्रतिपादितत्वात्। अतोऽत्र झटिति प्रतीयमानत्वाभावान्नालङ्कारता।

उक्तञ्चात्र भट्टवामनेन—

"कार्यकारणयोरभावकथनस्यार्थकस्य सत्वेऽपि तद्वाचकत्वादिनानुपात्तत्वात्"। यदि चेतोऽनुत्कण्ठितं नेत्यभिधीयते: तदा विशेषोक्तेः स्फुटत्वं भवेत्। अनयोरस्फुटत्वेन कथमेतन्मूलक सन्देहसंकर इति सुधीभिरवधेयम्।

किञ्चात्र—"हरो वरो" इत्यत्रानुप्रसालङ्कारस्य स्फुटत्वेऽपि नानुप्रासेऽलङ्कारता, प्रतिकूलवर्णत्वात्। वर्णानां प्रतिकूलता वाक्य दोषतेति तेनैव प्रतिपादित्वाच्च। न चालङ्क्रियतेऽनेनेति करणव्युत्पत्तिनिष्पन्नः शब्दादिकृतचमत्कारबोधकोऽलङ्कारशब्दः। किन्तु—"अलङ्कृतिरलङ्कारः" इति भावव्युत्पन्नो दोषाभावगुणालङ्कारसंवलनकृतचमत्कारपरस्यालङ्कारव्यपदेशात्। उक्तञ्च वामनाचार्यैः—

काव्यं ग्राह्यमलङ्कारात् सौन्दर्यमलङ्कारः। अलङ्कृतिरलङ्कारः। करणव्युत्पत्त्या पुनरलङ्कारशब्दो यमकोपमादिषु वर्तते। स च दोषगुणालङ्कारहानोपादानाभ्याम्।

न चात्र दीपकम्। अस्मीत्यस्याहमार्थकाव्ययत्वात्। न चास्मीति क्रियायाः विभक्तिविपरिणामेन सर्वत्र वरादावन्वयेन क्रियादीपकमेति वाच्यम्। तदन्वयिनां सर्वेषां प्राकरणिकत्वात्। उक्तञ्चात्र दर्पणकारेण—

प्रस्तुताप्रस्तुतयोर्दीपकन्तु निगद्यते।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत्"॥

दीपकस्य प्राकरिकाप्राकरणिकविषयत्वात्। विभक्तिविपरिणामकल्पनाया एवास्फुटार्थत्वाच्च।

न वा परिसंख्या। "स एव हि वर" इत्यत्र एवकारस्याभेदपरत्वे नेतरनिषेधपरत्वायोगात्। न वा समुच्चयः। वरादीनां गुणक्रियायौगपद्याभावात्। न वा तुल्ययोगिता। वरादीनामुपमानोपमेयभावाभावात्। न वा संस्मरणालङ्कारः। सदृशवस्तुदर्शनजनितस्मरणाभावात्। किन्त्वत्र "स एव हि वरः" इत्यादेः प्रत्यभिज्ञाशरीरत्वात्। नचात्र रसवदलंकारः। विप्रलम्भशृङ्गारस्य वाच्योपस्कारत्वाभावात्। किन्त्वत्र विप्रलम्भशृङ्गारमुखेनैव चमत्कारान्नालङ्कारता।

अन्यच्च दर्पणकारः—

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ"॥

इति प्रतिपाद्य ध्वनिकारेण "काव्यस्यात्मा ध्वनिरिति वदतो व्याधातः कृतः" इत्युक्तिर्न विचार पदवीमधिरोहति। यतोऽत्र वाच्येन नाभिधेयार्थस्य ग्रहणम्। किन्तु यन्निरूपो ध्वनिस्तत्र यः वस्त्वलङ्कारस्वरूपः वाच्यसहो ध्वनिस्तस्यैव वाच्यशब्देन ग्रहणात्। उक्तञ्चात्र ध्वनिकारेण—

"तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः"

अतोऽत्र वदतो व्याधात इत्युक्तिस्तु धूलिप्रक्षेप एव।

इदानीं प्राप्तयशसः साहित्यदर्पणकारस्यैव काव्यलक्षणं विविच्यते। तथाहि—

"वाक्यं रसात्मकं काव्यम्"

यदि रसात्मकमेव वाक्यं काव्यं स्यात्, तदा—

"परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरः,
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः,
किमिक्षोर्दोषोऽयं नपुनरगुणायाः मरुभुवः।

इत्यत्राप्रस्तुतेत्तुप्रशंसामुखेन प्रस्तुतस्य सज्जनस्य गुणवतः चरित्रमुपनिबध्नता कविना, अप्रस्तुतप्रशंसालङ्कार एव वाक्यार्थी कृतः। अतोऽत्र काव्यलक्षणस्याव्याप्तिः। न चात्र गुणीभूतव्यङ्ग्यत्वमाश्रित्य काव्यव्यवहारः। लक्षणे रसस्यात्मत्वेनाभिहितत्वात्। गुणीभूतात्मनः प्रधानत्वायोगात्। उक्तं हि ध्वनिकारेण--

"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः"

इति ध्वनिकारोक्तदिशाऽत्राप्रस्तुतप्रशंसाऽलङ्कार एव, नात्वत्र रसात्मकता। आत्मनः गुणीभूतत्वाभावात्। नहि कोऽपि सचेता अङ्गिनः गुणीभूततां स्वीकर्त्तुं प्रभवति। किं बहुना--महाकविभिः काव्यत्वेनाभिमतेषु जलप्रवादिवर्णनेषु महत्सु काव्यप्रबन्धेष्वकाव्यत्वापत्तेः न चोद्दीपनादीनां सत्वादत्र सरसत्वमिति वाच्यम्। "गौश्चलति" इत्यादावप्यतिव्याप्तेः। यत्तु काव्यप्रकाशकारः--

"इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः",

तन्न विचारसहम्--गुणीभूतव्यङ्ग्येऽव्याप्तेः। न च तत्र मध्यम काव्यव्यवहारः, इति नैसर्गिकः पन्था। अचेतने चेतनव्यवहारसमारोपेणापि किं न सहृदयानां मनसि पराकाष्ठाऽऽनन्दस्य।

"रमणीयार्थप्रतिपादकः शब्दः काव्यम्"

इति पण्डितराजकृतमपि काव्यलक्षणं न विचारास्पदम्। तन्मते "काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते; काव्यं श्रुतमर्थो न ज्ञातः। इत्यादि सार्वजनिकव्यवहार एवार्थस्य काव्यत्वव्यवच्छेदे प्रमाणमतः शब्दस्यैव काव्यता नार्थस्य। यत्त प्रकाशकारमते शब्दार्थयुगले काव्यता; तन्न सम्यग्। अभियोगिमतस्याप्रामाण्यात्। अन्यथा—वेदपुराणादिलक्षणेष्वपीयमेव दुरवस्थाऽ-ऽपतिष्यति। न चास्वादोद्बोधकस्य, उभयोः समानत्वाच्छब्दार्थयोः काव्यतेति वाच्यम्। नाट्याङ्गभूतानां नृत्यादीनामपि काव्यत्वसम्भवात् काव्यलक्षणस्याव्याप्तेः। किञ्च रसव्यञ्जकत्वेनाभिमतस्य रागादेरपि काव्यतेति दोषापत्तेश्च"। तदपि न सम्यग् अर्थकृतचमत्कारहेतुष्वपमाद्यलङ्काररसध्वनिगुणीभूतव्यङ्ग्येष्व-व्याप्तेः। किं बहुना—श्लेषादीनां शब्दालङ्काराणामपि शब्दपरिवृत्तिसहत्वासहत्वविभागकरणमप्यनुपपन्नमेव; काव्यत्वेनार्थस्यानभिमतत्वात्। तस्माच्छब्दार्थयोः काव्यत्वप्रयोजकता न तु केवलं शब्दमात्रस्यैव। अन्यथा—

"रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियायाः गुणैः,
त्वामायान्ति शिलीमुखाःस्मरधनुर्मुक्ता सखे मामपि
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः,
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः"

इत्यत्रार्थकृतचारुत्वस्य व्यतिरेकस्य कथं काव्यत्वप्रयोजकता न चात्र श्लेषमुखेनैव चमत्कारः। सशोकशब्देन व्यतिरेकं पोषयतां शोकसहभूतानां निर्वेदादिव्यभिचारिभावानां विप्रलम्भशृंगारपरिपोषकत्वात्। अतोऽत्र प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकालङ्कारविवक्षया त्यज्यमानो रसविशेषं पुष्णाति; इति ध्वनिकारः। उक्तञ्च तेनैव—

"विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता" ॥

किं बहुना—अर्थदोषार्थालङ्कारार्थगुणादिष्वव्याप्तेः तेषामर्थैकसमाश्रयात्। शब्दस्याङ्गत्वात्। उक्तं हि दर्पणकारेण—

"शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।
एकस्य व्यञ्जकत्वे तदन्यस्यसहकारिता" ॥

यत्तु काव्यलक्षणे गुणालङ्कारादिनिवेशोऽपि न युक्तः "उदितं मण्डलं विधोः" इत्यादावाव्याप्तेः । गुणानां रसैकमात्रधर्मत्वात् तन्न सम्यग् । तेषां रसोपकारकत्वात् । उक्तं हि—

"गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यौ"

न च गुणालङ्कारादीनामनियतसंख्याकत्वात्तेषां कथं काव्यलक्षणस्य नियामकतेति वाच्यम् । अनियतसंख्याकानां गुणालङ्कारादीनां काव्यत्वपोषणात् । तेषां न खलु अनियतसंख्याकता नानियतस्वरूपतया, किन्तु—अनेकस्वरूपतया ( उपमारूपकादिभेदमुखेन ) अङ्गिनो रसस्योपकारकतयेति प्रतिपादितत्वात् । उक्तञ्च ध्वनिकारेण ।

तस्याङ्गानां प्रभेदा ये भेदाः स्वगताश्च ये ।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥
ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥
शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम् ।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गताङ्गताः ॥
व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

उक्तञ्च कविवरेण सरस्वतीकण्ठाभरणकारेणापि—

अदोषं गुणवत्काव्यमलङ्कारैरलंकृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति ॥

न च रसोपकारकत्वाद्गुणालङ्कारयोरैक्यमापतितमिति वाच्यम् । आत्मनः शौर्यादय इव व्यङ्ग्यात्मनः प्रधानस्य रसस्य ये धर्माः समवायसम्बन्धेनावस्थिताः, अचलस्थितयस्ते गुणाः । अलङ्कारास्तु न तथा तेषां शब्दार्थद्वारेण संयोगसम्बन्धेन रसादीनामुपकारकत्वात् । अतस्ते न सततोपकारकाः । तथाहि—

चित्ते विहट्टदि ण टुट्टदि सा गुणेसुं,
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं ।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे,
झाणेण टुट्टदि चिरं तरुणी तरट्टी ॥

इत्यत्र नानुप्रासः शृंगारं पुष्णाति । प्रतिकूलवर्णत्वात् । एवम्—

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता,
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥

अत्रोपमा न रसस्योपकारिका; अननुगुणत्वात् । अननुगुणत्वञ्चात्र सादृश्यशून्यत्वम् । किन्त्वत्रोत्प्रेक्षालङ्कारः । न च तत्रापि तद्दोषतादवस्थ्यम् । सम्भावितेनापि सादृश्येन तत्प्रवृत्तेः । उक्तञ्च दर्पणकारेण—

"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना"

न च कथं प्रकृतोदाहरणमिति वाच्यम् । श्लेषस्याप्ररूढत्वान्मुख्याया उत्प्रेक्षायाः प्रकृताननुगुणत्वात् ।

"काव्यशोभायाः कर्त्तारो धर्माः गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति वामनोक्तमपि न सम्यम् । उभयोः काव्यशोभासम्पादने समत्वात् । काव्याङ्गिनो रसस्योभयोरङ्गत्वेन व्यवस्थानाच्च ।

यत्तु तेनैवोक्तम्—"अस्तु गुणालङ्कारयोः यथाकथञ्चित् काव्यलक्षणे समावेशः, परन्तु दोषरहितोक्तिस्तु कथमपि न समीचीना । "दुष्टं काव्यं" इति सार्वजनिकव्यवहारात् । नात्र लक्षणा; हेत्वभावात् ।" तदपि न सम्यग् । तत्र दुष्टे काव्ये निर्दोषकाव्यापेक्षया गौणव्यवहारदर्शनात् । तत्र साक्षात्परम्परया वा रसस्यापकर्षतयाऽऽस्वादप्रकर्षाभावात् । अतः पण्डितराजकृतमपि प्रकाशकाराभिमतकाव्यलक्षणखण्डनप्रकारं न समीचीनम् ।

वस्तुतस्तु मम्मटोक्तकाव्यलक्षणमपि न साधुसेवितम्। तस्योत्कृष्टकाव्यमात्रपरत्वात्। काव्यसामान्यऽव्याप्तेः। यत्तु वक्रोक्तिजीवितकारः—

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदां ह्लादकारिणि"॥

लक्षणेनानेन शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धनासादृश्यं यद्वैचित्र्यं तन्मात्रलक्षणं वक्रत्वं काव्यस्य जीवितम्।" तदपि न सम्यग् तत्र वैचित्र्याभावात्। यदि प्रसिद्धाभिधेयार्थव्यतिरेकिप्रतीयमानाभिव्यक्तिपरं स्यात्तदा भङ्ग्या ध्वनेरेव लक्षणं स्यात्। तस्य काव्यसामान्येऽव्याप्तेरित्यत्रापि मम्मटोक्तलक्षणदोष एव।

अतः "सहृदयहृदयाह्लादिवाक्यं काव्यम्" इति मामकीनः पक्षः। यथा—

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः-
निद्राव्याजमुपागतस्य सुचिरं निवर्ण्य पत्युर्मुखम्।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीम्
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥"

अत्र व्यभिचारिभावस्य लज्जायाः स्वशब्देनाभिधानेऽपि न काव्यत्वहानिः। सहृदयहृदयाह्लादिवाक्यत्वात्। किं बहुना—

"कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम्।
किं करोतु कुरङ्गाक्षी वदनेन निपीडिता॥"

अत्र रसस्य परिपन्थित्वेऽपि प्रहेलिकाकाव्ये न काव्यत्वहानिः। अन्यथा खड्गमुरजपद्मबन्धादिकाव्यत्वे प्रसिद्धेषु काव्यप्रकारेष्वव्याप्तेः।

---

# पितृभक्तिः

बालं पोषयति क्लेशैः। तरुणं शिक्षते तथा।
तस्मात् सर्वात्मभावेन। सेवनीयः पिता सुतैः॥१॥

पुरा सूर्यवंशे विमलकीर्तिः दशरथो नाम अयोध्यानगरपतिरभूत् तस्य रामलक्ष्मणभरतशत्रुघ्नाख्याश्चत्वारः पुत्रा आसन्. दशरथश्च वार्धक्ये लब्धापत्यो रामं सर्वगुणसंपन्नमवलोक्य यौवराज्ये तमभिषेचयितुमियेष. इमां वार्तां श्रुत्वा कैकेयी नाम तस्य तृतीया पत्नी परमकोपाकुला दशरथमागत्योवाच—नाथ! त्वं हि मह्यं पुरा वरद्वयमददाः. तेनाधुनाऽहमिदं याचामि. 'रामं वनं प्रेषय,' 'भरतं यौवराज्येऽभिषेचय इति. इमां तदीयां याचनावाचमाकर्ण्य मूर्ध्नि अशनिना निहत इव दशरथस्तस्मिन्नेव क्षणे भूमौ पपात. अथ कथंचिल्लब्धसंज्ञो भूयोभूयः कैकेयीं रामं वनं प्रति न प्रेषयितुं विज्ञापयामास परन्तु सा स्वाग्रहं न मुमोच. अत्रान्तरे तत्र समागतो रामो दुखिनं पितरमालोक्य कैकेयीं कारणं पप्रच्छ. उवाच च—

अहो धिक् नार्हसे देवि। वक्तुं मामीदृशं वचः।
अहं हि वचनाद्राज्ञः। पतेयमपि पावके॥१॥
भक्षयेयं विषं तीक्ष्णं। पतेयमपि चार्णवे॥
नियुक्तो गुरुणा पित्रा। नृपेण च हितेन च॥२॥

अन्ते स पितृभक्तो रामः पितरं सत्यप्रतिज्ञं विधातुं चतुर्दशवर्षपर्यन्तं वनं जगाम.

---

क्या आप जानते हैं ?

# संस्कृतकी शिक्षा

१—संस्कृत आयोगने अपनी रिपोर्टमें कहा है कि देशमें संस्कृत पढ़ने तथा उसका प्रचार करनेके लिए जनतामें विशेष उत्साह दिखाई देता है।

१—राजभाषा आयोगने भी स्वीकार किया है कि संस्कृतका आजकी भारतीय भाषाओंपर व्यापक प्रभाव है। नये विचारोंको व्यक्त करने और नयी शब्द्-रचनाके लिए ये भाषाएँ संस्कृतका ही सहारा लेती हैं।

३—पिछले कई वर्षोंमें कई आयोग और समितियोंने संस्कृत-शिक्षा-प्रसारके प्रश्नपर विचार किया है। इनमें १० समितियाँ प्रसारके खास पहलुओंपर विचार करनेके लिए विभिन्न राज्य सरकारोंने बनायी थीं।

४—भारतसरकारने १९५६ में संस्कृतशिक्षाकी वर्तमान सुविधाओंकी पड़ताल करने और संस्कृतके प्रसार और अनुसंधानके सम्बन्धमें सुझाव देनेके लिए एक संस्कृत आयोग नियुक्त किया था।

५—इस आयोगकी सिफारिशपर भारतसरकारने एक केन्द्रीय संस्कृत-मण्डल बनाया है। इस मण्डलका काम संस्कृतके प्रचार और विकासके बारेमें सरकारको सलाह देना है।

६—संस्कृत-शिक्षाको प्रोत्साहन देनेके लिए भी अनेक उपाय किये जा रहे हैं।

७—संस्कृतकी पत्रिकाओंको आर्थिक सहायता दी जा रही है। इस समय विभिन्न स्थानोंसे संस्कृतकी विभिन्न विषयोंपर १० पत्रिकाएँ प्रकाशित हो रही हैं।

८—स्वयंसेवी संस्कृत संघटनों, संस्थाओं और पाठशालाओंको भी संस्कृतके प्रसार तथा विकास सम्बन्धी विशेष कार्योंके लिए सहायता दी जा रही हैं।

९—सारे देशमें प्राचीन पद्धतिसे संस्कृत पढ़ानेवाली पाठशालाओंकी संख्या बहुत काफी हैं। केवल उत्तरप्रदेशमें ऐसी १४०० पाठशालायें हैं।

१०—विश्वविद्यालयोंके अतिरिक्त २० गैर-सरकारी संस्थाएँ संस्कृत और भारती विद्यामें अनुसंधान-कार्य कर रही हैं। ६ सरकारी संस्थाएँ भी इस कार्यको कर रही हैं।

११—रामायण और महाभारतकी टीकाएँ लिखी जा रही हैं। ये टीकाएँ पांडुलिपियों और प्रकाशित ग्रन्थोंके आधारपर तैयार की जा रही है, जिससे प्रामाणिक ग्रन्थ तैयार हो सकें।

१२—वाराणसी, दरभंगा और कुरुक्षेत्रमें केवल संस्कृतके अध्ययनके लिए विश्वविद्यालय खोले जा चुके। तीसरी योजनामें भारती विद्याकी एक केन्द्रीय संस्था स्थापित करनेका कार्यक्रम है।

१३—कुछ गैर-सरकारी संघटन भी संस्कृतके प्रसार और प्रचारके काममें लगे हैं। संस्कृतविश्व-परिषद् ऐसा ही एक संघटन है। प्रतिवर्ष परिषद्का सम्मेलन होता है। इसकी अनेक शाखाएँ हैं।

१४—देशमें कई संस्थाएँ ऐसी है, जो कालिदास जैसे लेखकोंकी रचनाओंके अध्ययनको प्रोत्साहन दे रही हैं। विभिन्न समितियाँ भगवद्गीताके प्रचारको आगे बढ़ा रही हैं।

१५—विश्वविद्यालयोंके छात्र और विशेष नाटक-मण्डलियाँ संस्कृतिके नाटक खेलती हैं। आकाशवाणी संस्कृतका नियमित और विशेष कार्यक्रम प्रसारित करता है। कुछ विश्वविद्यालयोंमें दीक्षांत समारोह संस्कृतमें होता है।

१६—केन्द्रीय संस्कृत-मण्डलने सुझाव दिया है कि शंकराचार्यकी सम्पूर्ण रचनाओं (गीता, उपनिषद और ब्रह्मसूत्र आदिके) और रामायणके सस्ते संस्करण सरकारकी ओरसे छापे जायँ।

१७—मण्डलने प्रामाणिक शब्दकोश और व्याकरण प्रकाशित करनेका भी सुझाव दिया है।

१८—केन्द्रीय शिक्षामन्त्रालय संस्कृतके पंडितोंकी राष्ट्रीयसूची बना रहा है। इस सूचीमें विभिन्न विषयोंके विद्वानोंके नाम दर्ज किये जायँगे और उनकी रचनाओं और अध्यापन कार्यके अनुभवका विवरण किया जायगा।

१९—संस्कृतकी अच्छी पाठ्य-पुस्तकोंके प्रकाशनपर पुरस्कार देनेकी योजना बनायी गयी है, जिससे माध्यमिक कक्षाओंके लिए पाठ्य-पुस्तकें उपलब्ध होने लगे।

२०—प्राचीन पद्धतिके विद्वानोंको भी छात्रवृत्ति देनेकी योजना बनायी गयी है।

२१—आयोगके सुझावके अनुसार गुरुकुलोंकी स्थितिकी पड़ताल की जायगी इन गुरुकुलोंने संस्कृतके प्रसारमें महत्त्वपूर्ण योग दिया है।

---

# भारतकी सांस्कृतिक एकता और विशेषतायें

[ श्री कुलदीपनारायण राय 'झड़प' वाराणसी ]

यों तो भारत विशाल भूखंडमें प्रसारित एक महान जनपद है, जिसमें अनेक रंगरूप, आकार प्रकार, चाल-ढाल, भेषभूषा और भाषा बोलीका भी अनेक जातियाँ रहती हैं। इनके आचार-व्यवहार, क्रिया-कलाप, लौकिक-पारलौकिक मान्यतायें, सोचने-विचारनेके ढंग तथा कर्ममें भी अंतर है फिर भी भारत एक राष्ट्र है क्योंकि उसकी सांस्कृतिक आधार एक है। इस आधारकी एकताको निम्नांकितमें देखा जा सकता है—

## १. तीर्थ—

काश्मीरसे लेकर कन्याकुमारी तथा आसामसे लेकर सिंधुतकके जनजीवनमें एक अद्भुत सांस्कृतिक समता पाई जाती है जिसके अनुसार तीर्थ-व्रत एवं दैनिक जीवनके आधारभूत नियमोंका विधान किया गया है। चारो धाम, सप्त पुरियाँ, द्वादस ज्योतिर्लिंग, आठ पीठ और पर्वत, सात पवित्र नदियाँ आदि भारतके सभी क्षेत्रोंमें फैले हुए हैं तथा इनके प्रति सबकी समान अवस्था है। प्रांतका निवासी दूसरे प्रांतकी यात्रा करते समय परायापनका अनुभव नहीं करता और विभिन्न प्रांतोंकी भौगोलिक परिस्थिति, जलवायु और उपजकी विभिन्नताओंको अपने देशकी विशेषता मानता है। समूचे भारतके लिये एक राष्ट्रकी भावना इतिहास, पुराण और पुराने काव्य-ग्रंथोंमें भी पाई जाती है। एकताकी इसी

भावनासे प्राचीन भारतमें राजाओंमें अश्वमेध यज्ञ करनेकी परिपाटी थी तथा सामान्य जनता इसे तीर्थ-यात्राका रूप देती आई है। ये तीर्थ सामाजिक दृष्टिकोणसे किसी प्रांतविशेषके न होकर समस्त भारतीय जनताको समान रूपसे उत्तराधिकारमें प्राप्त आकर्षणबिंदु है। किसी भी प्रांतमें उत्पन्न होने वाला महापुरुष संपूर्ण भारतीयोंके लिये समान रूप से श्रद्धाका पात्र और गौरवका कारण है।

## २. उत्सव, पर्व एवं त्योहार—

सम्पूर्ण भारतमें पर्व और त्योहार मनानेके सिद्धांतमें ही एक रूपता नहीं बल्कि उनके काल तथा क्रियात्मक रूपमें भी एक रूपता है। संस्कृतिको स्पष्ट करनेके लिये उसे लचकीली पर दृढ़ सामाजिक मान्यतायें कहा जा सकता है। ये मान्यतायें समाज-वृक्षका सिंचन करती, उसे सरस सशक्त बनाती एवं उसका बहुमुखी विकास करती है। इसीसे सामाजिक जीवनमें त्योहारों और पर्वोंका बड़ा भारी महत्त्व है। भारतवर्षमें दशहरा, दीवाली, होली और महापुरुषों की जयंतियां समान रूपसे देशके कोने-कोनेमें मनाई जाती है। यह इसकी सांस्कृतिक एकता-का सूचक है।

## २. साहित्य—

संस्कृतिका स्रोत साहित्यके गर्भसे प्रवाहित होता रहता है। भारतीय साहित्यका मूल एक है जो वेद, पुराण, रामायण, महाभारत, जैन-बौद्ध साहित्य एवं लोक कथाओं द्वारा सर्वत्र प्रचारित है। ये निधियाँ मूल रूपसे संस्कृतभाषामें रक्षित है और भारतकी संपूर्ण भाषाओंकी साहित्य परंपरा इन्हीं निधियोंसे गतिमाना होती रही है। राम, कृष्ण और शिव, गंगा और गाय भारतीय सांस्कृतिक जीवनके प्राण हैं। प्रायः संपूर्ण भारतीय वाङ्मय इन्हीं विभूतियोंके योगसे वैभवशाली है। इस वैभवपर भारतके संपूर्ण निवासियोंका समान अधिकार है। साहित्यकी इसी एक सूचनाके कारण भारतीय जनजीवनमें आदर्शोंकी एकताका दर्श होता है।

## ४. संस्कार—

दिनचर्या संबंधी नित्य-नैमित्तिक कार्य, जन्म-मरण तथा वैवाहिक संस्कारकी पद्धतियोंमें सैद्धांतिक एवं व्यावहारिक समानता संपूर्ण भारतमें पाई जाती है। प्रतिदिन नित्यक्रियासे निवृत्त हो भजन पूजन या देवाराधनकी विधिमें सर्वत्र एक जैसे नियम प्रचलित हैं। वैसे ही विवाहादि संस्कारोंकी विधि भी सर्वत्र मिलती-जुलती है। भारतमें गृहस्थी रूपी गाड़ीकी वहनके लिये तथा मानव परंपराके विकास-के लिये ही वैवाहिक जीवनकी आवश्यकता मानी गई है। भारतीय लोकजीवनका उद्देश्य केवल लौकिक न होकर आध्यात्मिक है अतः विवाह जीवनकी साधनाओंमें सहायक हो, इसीसे आदर्श जीवनकी शिक्षा मिलती है भारतीय लोकजीवनकी निम्नांकित विशेषतायें हैं--

क--कर्मवाद--प्रत्येक भारतवासी यह मानता है कि यह जीवन योंही नहीं टपक पड़ा है वरंच इसका कारण कर्म-शृंखला है। कर्मानुसार मनुष्य जीवन पाता है और उसका विकास होता है तथा उसे दुःख-सुखका अनुभव होता है। कर्म तीन रूप हैं--मानसिक, वाचिक और कायिक। कर्मकी तीन दशायें होती हैं—

प्रारब्ध--जिसका भोग प्रारम्भ हो गया है और जिसके अनुसार वर्त्तमान जीवन प्राप्त है। जीवनमें

पद-प्रतिष्ठा और दुःख-सुखका कारण प्रारब्ध कर्म ही है। इसीको भाग्य कहा है।

संचित--जिसके अनुसार जीवनका संस्कार होता है तथा भावी जीवनको गति एवं प्रेरणा मिलती है। इसे शरीर भी कहते हैं। संचितके अनुसार व्यक्ति आगेका जीवन ग्रहण करता है।

क्रियामाण--जो क्रियामें है अर्थात् जो वर्त्तमान समयमें किया जा रहा है और जिसका भोग भविष्यमें करना होगा।

कर्मवादके अनुसार अपने दुःख-सुख, उन्नति-अवनति एवं हानि लाभका उत्तरदायी मनुष्य स्वयं है! आकस्मिक होनेवाली घटनायें भी अकारण नहीं हैं। मनुष्यका तबतक कर्मोंसे मुक्ति संभव नहीं है जबतक उसे संसार चक्रका वास्तविक स्वरूप समझमें नहीं आ जाता अर्थात् वह तत्त्वज्ञ, ज्ञानी अथवा मुक्त पुरुष नहीं बन जाता।

कर्त्ताकी दृष्टिसे कर्मके तीन भेद होते हैं--

नित्य कर्म--जितना प्रतिदिन नियमित रूपसे करना अनिवार्य है और जिसके नहीं करनेसे दोष लगता है जैसे संध्या पूजा।

नैमित्तिक--जिसको कर्त्तव्य समझ कर किया जाता है। इसके अंतर्गत पंचमहायज्ञोंका विधान है। ये यज्ञ देवकर्म, पितृकर्म आदि पाँच प्रकार के कर्मो से मुक्तिके लिये किये जाते हैं जो इस प्रकार हो--

देवयज्ञ--देवताओं को प्रसन्न करने के लिये हवन पूजन आदि। प्राकृतिक शक्तियोंकी दैवी सत्ताका नाम देवता है। ये देवता संख्या में ३३ है ८ वसु, १२ आदित्य, ११ रुद्र आदि।

पितृयज्ञ--पितरोंको सुख पहुँचाने के निमित्त वृद्ध पुरुषोंकी सेवा, तथा उन्हें परलोकमें सुख पहुँचानेके लिये श्राद्ध तर्पण आदि।

ऋषियज्ञ--ऋषियों द्वारा ही जगत् का विकास हुआ है अतः उनकी प्रसन्नताके लिये प्रतिदिन सत् शास्त्रों का पठन पाठन द्वारा ज्ञान वर्द्धन उचित है।

मनुष्य यज्ञ--मनुष्यके प्रति मनुष्यका भी कर्तव्य है क्योंकि वह सामाजिक है, इसलिये अतिथि सत्कार एवं दान-मानसे मनुष्योंको सुख पहुँचाना मनुष्य यज्ञ कहा गया है।

भूतयज्ञ--संसारका संपूर्ण जीव जगत ही भूत सृष्टि है। उसे सुख पहुँचाना कर्त्तव्य है इसके लिये अपनी रसोईमेंसे पंच कौर निकालनेका विधान है। यथा गाय, कुत्ते, लछुनवु कौआ और समाज वहिष्कृत लोगों के लिये। क्योंकि ये मनुष्यके आश्रित है और उसने कर्ममें इतना भी जमा है।

काम्यकर्म--वह कर्म है जो किसी विशेष कामना से किया जाय। जैसे कोई विशेष अनुष्ठान यज्ञ, पूजा-पाठ दान-पुण्य आदि कामना २ प्रकार की होती है--लौकिक ( धन, अधिकार, कुल कुटुम्ब और यशमाने ) और पारलौकिक (परलोकमें सुख पानेकी ) फुल की दृष्टिसे कर्मके ३ प्रकार हो यथा--कर्म, अकर्म और विकर्म। परिणाममें सुखदायी सामाजिक कर्म, निरर्थक निष्फल कर्म और परिणाममें सुखदायी समाजविरोधी पापकर्म नैतिक दृष्टिसे कर्मके तीन भेद का कीमत ( शरीर संबंधी ), कौटुम्बिक तथा सामाजिक होते हैं।

ख--पुनर्जन्म वाद--कर्मानुसार एक शरीर छूटने के बाद जीव दूसरा शरीर धारण करता है, यह कर्म तब तक चलता रहता है जब तक वह राग द्वेषसे मुक्त होकर ब्रह्मलीन नहीं हो जाता। आत्मा अजर-अमर शुद्ध-बुद्ध एवं आनंदरूप है। रागद्वेषकी नियतिके

लिये क्रमशः पुरुषार्थकी चार सीढ़ियोंसे चलना पड़ता है जो इस प्रकार है—धर्म, अर्थ काम और मोक्ष। मोक्ष ही चरम लक्ष्य है। धर्मके दस लक्षण बताये गए हैं—

'धृतिः क्षमा दमोस्तेयः शौचमिद्रिय निग्रहः।
धी विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥'

मनु धर्मके इन दसलक्षणोंके अनुसार चलने पर ही मोक्षका मार्ग मिलता है।

ग—वर्णाश्रमधर्म—सामाजिक कर्त्तव्यपालन और सुव्यवस्थाके लिये वर्ण तथा आत्मिक विकास-के लिये आश्रमोंकी व्यवस्था भारतीय संस्कृतिकी विशेषता है। वर्ण चार हैं—ब्राह्मण पथ-प्रदर्शक, क्षत्रिय रक्षक, वैश्य उत्पादक और शूद्र ( सेवक ) आश्रम भी चार है—ब्रह्मचर्य ( विकास काल ) गृहस्थ ( संचय-काल ) वाणप्रस्थ ( नियमित काल ) संन्यास ( निवृत्ति काल ) स्थानाभावसे वर्णाश्रमके संबंधमें अधिक व्याख्या नहीं की गई।

घ—आध्यात्मिक समन्वय—भारतीय लोक जीवन-को प्रभावित करता है और ये अपनी विशेषतायें हैं जो संसार के अन्य जातियोंकी संस्कृतिमें नहीं मिलेंगी। इन्हीं विशेषताओंके कारण भारतका संस्कृतिक प्रभाव संसार का पथ-प्रदर्शन करता रहा है।

---

# भारतीय संस्कृतिकी विशेषतायें

## इसी संस्कृतिसे हम अबतक जीवित रहे

[ *लेखक—आचार्य श्री० नरदेव शास्त्री वेदतीर्थ ज्वालापुर हरद्वार* ]

हमारी संस्कृतिकी कई विशेषताएँ हैं जो अन्य धर्मोंमें नहीं पायी जातीं। अनन्तकालके प्रवाहसे हमारी जातिमें एक ऐसा रक्त-प्रवाह बह रहा है, जिस प्रवाहको अबतक कोई नहीं रोक सका। एक सहस्र वर्षकी दासता, परचक्र, सैकड़ों उलट-फेर भी न रोक सके। चाहे कुछ भी हुआ, कुछ भी देखना पड़ा, पर हमारी जातिमें निम्नलिखित गुण तो किसी न किसी रूपोंमें रहे ही हैं।

**आस्तिकता—**

चाहे हम अपने पूर्वजों-जैसे उत्कृष्ट कोटिके आस्तिक न रहे हों, तथापि आस्तिक रहे हैं अवश्य, आस्तिक हैं अवश्य और आस्तिक रहेंगे अवश्य। नहीं तो, इतनी बड़ी सुदीर्घकालीन दासतामें हम जीवित ही कैसे रह सके—यही आश्चर्य है।

इन हमारी आस्तिक बुद्धिको कोई नहीं मिटा सका। हमारे अन्दर ईश्वरविश्वास बराबर बना रहा। इस संसारका कर्ता, धर्ता, हर्ता कोई अवश्य है, जिसके संकेतमात्रसे ही त्रिभुवन तथा लोक-लोकान्तर बनते हैं, बने रहते हैं और अन्तमें बिगड़ जाते हैं। उत्पत्तिसे लेकर प्रलय-तककी गाथा न जाने कबसे चली आ रही है। उस परमात्माके अभिध्यानमात्र-से प्रलयमें बिखरे पड़े हुए अनन्त परमाणुओंमें

जीवन-संचार होने लगता है। प्रलयावस्थामें पड़ी हुई मूल-प्रकृति विकृतिकी ओर चल पड़ती है और अन्तमें यह विराट् जगत् बनता है—

श्वेताश्वतर-उपनिषद्में स्पष्ट कहा है कि ऋषियोंने ध्यानावस्थित होकर साक्षात्कार किया—

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ॥

हमारी हिंदू-जाति—उसी विश्वव्यापी, सर्वभूतान्तरात्मा, सर्वभूतनिगूढ़ देवमें विश्वास रखती चली आयी है। यह और बात है कि उसको जाननेके अनेक उपाय वेदोंमें, स्मृतियोंमें, धर्म-शास्त्रोंमें बतलाये गये हैं। भिन्न-भिन्न उद्देश्योंसे प्रवृत्त हुए दर्शनशास्त्र भी अन्ततोगत्वा उसीकी बातपर एकमत हो जाते हैं—यह एक हिंदू-जातिकी विशेषता है और इसी विश्वासके आश्रयसे यह जीवित रही है।

## मोक्ष-जीवनका विशेष उद्देश्य—

दूसरी एक विशेषता इस विश्वासकी रही है कि जीवोंके इस संसारमें आनेका विशिष्ट उद्देश्य है और इस जगत्के बनने-बिगड़नेका भी एक विशिष्ट उद्देश्य है। वह है—

भोगापवर्गार्थं दृश्यम्। (योग०)

यह दृश्य-जगत् इसीलिये बना है कि जीव अपने अपने कर्म-फलानुसार इस संसारमें आवें, कर्मफलको भुगतें और प्रयत्न करते-करते अपवर्गतक पहुँचे। यद्यपि अपवर्ग (मोक्ष) प्रत्येकके बूतेकी वस्तु नहीं है, तथापि पहुँचनेवाले वहाँ पहुँच ही जाते हैं—कितने? कौन कह सकता है? कब? कौन कह सकता है?

अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥

की बात सर्वविदित ही है। जीव अपने कर्मानुसार विविध योनियोंमें होकर अन्तमें मनुष्य-योनिमें आकर यहींसे प्रयत्न करते करते अपवर्गतक पहुँच जाते हैं। उत्तम आचरणवाले उत्तम योनियोंको प्राप्त करते हैं, निकृष्ट आचरणवाले निकृष्ट योनियोंको। इस सिद्धान्तको हम मानते चले आये हैं। यही कारण है कि हम किसी भी दशामें पहुँचें, समाधान पूर्वक कर्मफलोंको भुगतनेकी मनोभूमिका रखते हैं—इस जातिके जीवित रहनेका दूसरा यह कारण है।

## ईश्वरीय न्यायमें विश्वास—

तीसरी विशेषता यह रही है कि हम ईश्वरीय न्यायमें अटल विश्वास रखते चले आये हैं। हमपर कैसी भी बीती, हम इसी विश्वासपर अधिकतर जीवित रह सके हैं। ये दुःख क्यों आ रहे हैं? अपने कर्मोंका फल। यही हिन्दूजातिकी मनोभावना रही है। हमने अपने कर्मानुसार प्राप्त सुख-दुःखोंके लिये अन्य किसीको दोष देनेकी बात सीखी ही नहीं।

## कर्मफलपर विश्वास—

चौथी विशेषता अपने कर्मफलोंपर दृढ़ विश्वास की है। जब हमने अच्छे अथवा बुरे कर्म किये हैं, तब उनका फल दूसरा कौन भुगतेगा हमको छोड़कर। यह बात हमारी जातिकी हृदयान्तस्तलमें गड़ी हुई है।

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।

फलदाता वही परम कारुणिक भगवान् है, जिसके न्यायमें भी दया रहती है। इसलिए हिन्दू-जातिमें किसीके सुखको देखकर डाह नहीं होता, बल्कि दूसरेके दुःखोंको देखकर मनमें करुणा उत्पन्न होती है।

## प्राणिमात्रमें आत्मदर्शन—

हिन्दूजातिकी पाँचवीं विशेषता यह है कि वह सब प्राणियोंमें आत्मैकत्वको देखती रही है। इसका फल यह हुआ कि हिन्दू अन्योंके सुख-दुःखों को भी अपने सुख-दुःखकी दृष्टिसे देखता चला आया है। गीतामें भी इसी समबुद्धिपर बल दिया गया है। हिन्दूजाति जीवोंकी ऊपरी विषम दशा-को देखकर कभी नहीं घबराती। वह तो अन्तरात्म-समताकी दृष्टि रखती रही है।

सारांश हमारी हिन्दूजाति कौड़ी मूल्यकी नहीं रहती, यदि उसमें यह अध्यात्म-दृष्टि, सर्वात्मैकत्व-की दृष्टि न रहती। वर्तमान अध्यात्मशून्य दृष्टिवाले एकमात्र भौतिक उन्नतिके लोलुप पाश्चात्य राष्ट्र अथवा पाश्चात्य विज्ञानवादी यहीं तो भूलते हैं और केवल आपातरम्य जगत्पर दृष्टि डालकर सबको सम-समान बनानेकी बात कहते रहते हैं। इसके पास भीतरी समताको देखनेके लिए न आँखें हैं न और कुछ—इसीलिए कोरा विज्ञान-अध्यात्मशून्य विज्ञान भी इनको नहीं तार रहा है। नारद क्या कम विज्ञानी थे? किन्तु आत्मतत्त्वको जानकर ही सुखी हुए। आत्मज्ञानके बिना उनकी सब विद्याएँ, ज्ञान-विज्ञान निरर्थक सिद्ध हुए। पाश्चात्य विज्ञानवादी सांसारिक तुच्छ पदार्थोंमें ही सुख मान रहे हैं और आध्यात्म दृष्टिके न रहनेसे—

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति।
भूमा त्वेव विजिज्ञासितव्यः॥
(छन्दोग्य०)

इस भूमातत्त्व (आत्म-परमतत्त्व) को न जान-कर भटक रहे हैं। अन्तमें भटक-भटककर इनको भी हमारे मार्गपर ही आना पड़ेगा।

फिर प्रश्न हो सकता है कि हिन्दू-जातिमें ऐसे ऐसे गुण थे तो यह एक सहस्र वर्षपर्यन्त दास्यपङ्क-में क्यों फँसी रही? उत्तर यह है कि ईश्वरने किसी जातिको कोई किसी प्रकारका ताम्रपट्ट तो दे नहीं नहीं रक्खा कि वही जाति संसारसे सदैवके लिए सर्वोपरि रहेगी। जलयन्त्रचक्रवत् (रहट) उन्नति तथा अवनतिके चक्र नीचे-ऊपर होते ही रहते हैं। इस नियमका हमारी हिंदू-जाति ही अपवाद क्यों बनी रहती है।

हमारे पास इतना ऊँचा धर्म, इतनी ऊँची संस्कृति, इतनी अनुकरणीय सभ्यता, इतना ऊँचा साहित्य रहते भी हम डूबे इसीलिए कि हमारी धर्म-विषयक भावनाएँ दुर्बल पड़ गयी थीं। भीतरी संस्कार तो थे, पर वे दुर्बल पड़ गये थे। किंतु भावनाएँ सर्वथा नष्ट नहीं हुई थीं, संस्कार तो सर्वथा नष्ट नहीं हुए थे और उपर्युक्त विशेष गुण रक्त-परम्परामें इतने घुल-मिल गये थे कि वे पृथक् न हो सके। इसीलिए हम जीवित रह सके। हमारे पापोंका उदय तो हो गया था किंतु पुण्य सर्वथा निःशेष नहीं हो पाये थे। शनैः-शनैः पापोंका भुगतान होता गया, जो बुरे दिन कभी भी हमारे पूर्वजोंने नहीं देखे थे, वे सब हमने देखे। अन्तमें पुण्यशेष उभरा हम स्वतंत्र हो गये। इस स्वतंत्रतासे यह न समझ बैठियेगा कि हमारे सब पाप दूर हो गये हमारे स्वतंत्र हो जानेपर भी यह पाप अभी शेष है कि यह राज्य 'धर्मनिरपेक्ष' है। हमारा राज्य कभी 'धर्म-निरपेक्ष' नहीं रहा। वह तो सदैव 'धर्मप्रधान' रहा। यह वर्तमान 'धर्मनिरपेक्ष' राज्य तो केवल पाश्चात्य-अध्यात्मशून्य भौतिक वादियोंका अनुकरणमात्र है।

हमारा धर्म केवल निःश्रेयसकी बात नहीं कहता और न केवल भौतिकवादकी बात ही कहता है।

हमारे ऋषि तो कहते हैं कि जिसमें अभ्युदय और निःश्रेयस—दोनोंकी सिद्धि हो, वह धर्म है।

हम स्वतंत्र हुए सही, अब इस स्वतंत्रताके आश्रयसे हमें पुनः इस भारतमें भारतीय ढंगकी संस्कृति लानी है। इसीलिए वर्तमान राज्य-प्रणाली में भी देश-काल-धर्मानुरूप कतिपय अभीष्ट परिवर्तन करने पड़ेंगे।

वर्तमान पाश्चात्य प्रजातंत्र-प्रणालीका अनुकरण युगधर्म हो सकता है, पर उनका भारतमें अन्धानुकरण करके हम सुखपूर्वक जीवित न रह सकेंगे।

जिस युगमें हम विचर रहे हैं, वह एक संक्रमणात्मक युग है, जिसमें स्थिरता भी नहीं, गम्भीरता भी नहीं—एक शिक्षाकी ही बात लीजिये—

वर्तमान समयमें जिस प्रकारकी शिक्षा दी जा रही है, उससे भारतका चरित्र कभी सुधरेगा—ऐसा आशा रखना दुराशामात्र है। मुझ-जैसे प्राचीन शिक्षाभिमानीको इस युगमें यह प्रतीत हो रहा है कि अन्धकारने प्रकाशको ललकारा है कि—'आ जरा ठहर, तेरी खबर लूँ। अबतक तो तूने मुझे बहुत परेशान कर रक्खा था और संसारमें मुझे छिपनेके लिए स्थानतक नहीं छोड़ा था। अब इस युगमें मैं तेरे लिए कोई स्थान नहीं छोड़ूँगा। ऐसा प्रतीत हो रहा है कि प्रकाश अपने प्राण बचाकर भाग रहा है और अन्धकार उसका पीछाकर रहा है। यदि भारतमें भारतीयताका अन्त हो गया तो हम स्वतंत्र होकर भी स्व-स्वरूपको भूलकर क्या जीवित रहेंगे?

### भारतका नाम बिगड़ जाय और रूप भी बिगड़ जाय—

तो नामरूप दोनोंके बिगड़ जानेसे भारतका क्या शेष रह जायगा। अबतक तो भारतका किसी प्रकार नाम चला जा रहा है। रूप तो सहस्र वर्षसे विकृत होता चला आ रहा था। अब इस विकृत रूपको मिटाकर पूर्ववत् सुन्दर-मनोहारी रूप बनानेके लिए समस्त प्रयत्न होने चाहिए।

पर क्या किया जाय। कभी यह वर्तमान प्रजातन्त्र-प्रणाली प्रत्यक्षरूपमें अथवा स्पष्टरूपमें आर्यधर्म, आर्य-संस्कृति, आर्यसभ्यताकी पोषक और पालक बन सकेगी, ऐसी आशा करना दुराशामात्र होगा। धर्म-देश उद्धारके लिए इस पद्धतिकी सरकार कभी कटिबद्ध न हो सकेगी। जब शिक्षा संस्थाओंमें ही धर्म-शिक्षाको प्रतिष्ठान नहीं मिल रहा है, तब क्या होगा—यह एक चिन्तनीय विषय बन गया है। जब छात्र-छात्राओंकी सह-शिक्षाका अनर्थकारी परिणाम भी हमारी समझमें नहीं आ रहा है, तब क्या कहा जाय? जब कि गोहत्यानिषेध की बात भी अबतक हमारी समझमें नहीं आ रही है, तब क्या समझा जाय कि हम किधर जा रहे हैं। हम लोग आज यदि भारतीय धर्मका अध्ययन करते हैं, तो पाश्चात्य दृष्टिसे करते हैं। भारतीय धर्मकी उत्तमता स्वीकार करनेके लिए भी हमें पाश्चात्य-दृष्टि चाहिये। भारतीयोंके रोगोंकी औषधियोंके भारतमें रहते भी हम पाश्चात्य औषधियोंको मँगानेमें करोड़ों रुपये खर्च करते हैं, तब तो बड़ा विस्मय होता है। महात्मा गांधीजी जीते-जी महाघोष कर गये कि मशीन-युगको समाप्त करो, पर हम करोड़ों रुपये मशीनोंपर लगाते ही चले जाते हैं। राज्यशासनचक्र अभीतक विलायती ढङ्गके ही हैं—खाली, उनको चलानेवालोंके गोरे हाथ बदलकर हमारे काले हाथ लग रहे हैं।

एक ओर बेकारी-बेकारी चिल्लाते हैं, दूसरी ओर स्कूल-कालेज और विश्वविद्यालयोंद्वारा—

अस्वाभाविक अभारतीय अनुपयोगी शिक्षा द्वारा बेकारीको बढ़ाते ही चले जा रहे हैं। ऐसा प्रतीत होता है कि अभीतक हमारे भारतीय नेता शिक्षाकी जटिल समस्याओंको सुलझानेमें समर्थ नहीं हो सके हैं। वैसे ये नेता एकस्वरसे वर्तमान शिक्षा-दीक्षाकी बुराई करते हुए सुने जाते हैं।

ऐसा प्रतीत होता है कि अंगरेजीराज्य तो गया; किन्तु अंगरेजी शिक्षा-दीक्षा हमारे मस्तिष्कमें ठोक ठाककर इतना गहरेमें बैठा दी गयी है कि हमें भारतीय दृष्टिकोण ही समझमें नहीं आ रहा है। भारतीय धर्म और संस्कृतिको बैलगाड़ीकी उपमा देकर उपहास किया जाता है और पाश्चात्यदेशकी निकम्मीसे निकम्मी वस्तुको भी मोटरकारकी उपमा दी जाती है।

जहाँ हम भारतके स्वतन्त्र होकर विचरनेकी बातको पुण्यकी बात समझते हैं, वहाँ उपर्युक्त प्रकारकी बातोंको देख कर समझ रहे हैं कि अभी पाप भी अधिकांशमें शेष हैं जिनका दूर होना आवश्यक है।

फिर क्या निराशा ही निराशा है? आशाके संचारके लिये स्थान नहीं है?

है क्यों नहीं, जिस करुणानिधान भगवान्ने स्वतन्त्रता दिलायी, वही आगे भी वर्तमान परिस्थितियोंके रहते हुए भी उन्हींमेंसे ऐसी विचित्र परिस्थित उत्पन्न करेंगे जिससे भारत अपने अभीष्ट पथकी ओर अग्रसर होता जायगा। इस कार्यमें देर अवश्य है, पर अन्धेर नहीं। भारतवर्षकी धर्मप्राण जातिको इस कार्यमें अपेक्षित त्याग-तपस्या करनी ही पड़ेगी। संस्कृतके विद्वान्, जिन्होंने आजतक संस्कृत-विद्याके रक्षार्थ कुलपरम्पराद्वारा प्रयत्न किये, उनको पुनः एक बार त्याग-तपस्याका मार्ग अपनाना पड़ेगा, तब कहीं संस्कृत-विद्याकी रक्षा हो सकेगी। हमारी सरकारके पास अंगरेजी शिक्षा-दीक्षाके लिए करोड़ों, अरबों रुपये हैं, पर संस्कृतके लिए—जिसके आश्रयसे आजतक भारतीय धर्म, संस्कृति, सभ्यता जीवित रही—पैसा नहीं है, संस्कृत-विद्याके लिए आस्था नहीं; श्रद्धा नहीं। हमारे ही उत्तरप्रदेशमें धनाभावके कारण लगभग ५०० संस्कृतपाठशालाएँ तथा विद्यालय आधे मुरझा गये हैं। काशी—जो कि किसी समय संस्कृत-विद्याका गढ़ था—अब मुरझा चला है। जब संस्कृतके केन्द्र ही मुरझा रहे हैं, तब भारतीय संस्कृति ही कहाँ रहे और कहाँ श्वास-प्रश्वास लें—धर्मो रक्षति रक्षितः—यही सत्य है।

'कल्याण'

## "गीत"


तुङ्गनाथमिश्र शास्त्री द्वि० व०

[ वाराणसेय संस्कृत विश्वविद्यालय वाराणसी ]


हो रहा निलिप्त जिसमें व्यर्थ है संसार रे मन!

कल्मषोंका ठाट केवल
ज्ञानका अवलम्ब ही बल
चल रहा संसारमें इस वासना०-यापार रे मन!
विश्वमें सम्बन्ध केवल
क्षणिक, जिसका ध्येय दर्शन
विश्वकी इन रश्मियोंका
देखता क्या आज नर्तन!
शृंखलाके बन्धनोंमें बँध रहा तू आज रे मन!

रश्मियाँ उस दिव्यपथ पर
घूमता क्यों बन अनेरा?
शान्तिका आभास जिसमें
हो वही सन्मार्ग तेरा,
चेतनाका दीप जलता, चल वहीं उस ओर रे मन!
हो रहा निलिप्त जिसमें
व्यर्थ है संसार रे मन!

# श्रीगीताकी महत्ता

श्री सूर्यभान त्रिपाठी, माधव संस्कृतविद्यालय, सारङ्ग तालाब काशी

जय कर्मवादकी भूमि अरी।
भगवद्गीता, भगवद्गीता ॥

जय अडिग तपस्वी जीवनकी,
नव विश्व शान्तिकी मर्यादा।
संवेद्य और सम्वाद्य सदा।
चिरमंगलमय जगकी गतिदा ॥
निश्रोत हृदयकी निर्झरिणी,
नव बीचि संकुला ज्योतिमयी।
ज्ञानामृतका मधुपान करा।
तुम देती जगको तुष्टि नयी ॥
उन अभिशापोंको ध्वस्त करो,
जिनसे यह संसृति है भीता।
जय कर्मवादकी भूमि अरी।
भगवद्गीता ! भगवद्गीता ॥ १ ॥

जय आदिपुरुषकी मुखोद्भूत,
जीवनकी नूतन परिभाषा।
इस निखिल विश्वमें सत्पथकी।
जग जीवनकी नव अभिलाषा ॥
जय खल अनीकके विध्वन्सक,
जय कृष्णचन्द्रकी नव वाणी।
जय प्रयलङ्कर उत्साहयुता।
जय जगकी जनकी कल्याणी ॥
चल कर तेरे आदर्शोंपर,
अर्जुनने जीवन-रण जीता।
जय कर्मवादकी भूमि अरी।
भगवद्गीता, भगवद्गीता ॥ २ ॥

तुमसे जगको नव राह मिली,
जीवनकी सुन्दर चाह मिली।
संसार करे स्वागत जिसका।
उसकी कब किसको थाह मिली ॥
नव प्रलय विश्वमें मच जाये,
जगका नित नव परिवर्तन हो।
पर तेरी सत्ता मिटे नहीं।
जगमें शतशत आवर्तन हो।
परिपूर्ण करो ज्ञानामृत दे,
मानवको जो हो मानसृता।
जय कर्मवादकी भूमि अरी
भगवद्गीता, भगवद्गीता ॥ ३ ॥

---

श्रीभारत-धर्ममहामण्डलमें

# गीताजयन्ती—सप्ताह

[ श्रीभारतधर्म-महामण्डलमें दिनांक २३-११-६० से २९-११-६० तक गीता-जयन्ती बड़े समारोहके साथ मनायी गयी। ]

## प्रथम दिवस

श्रीमान् पं० अनन्त शास्त्री फड़के पुराण-विभागाध्यक्षके सभापतित्वमें आजका कार्यक्रम सानन्द सम्पन्न हुआ। गीतापाठ, वेदध्वनि तथा मंगलाचरणके उपरान्त कई विद्वानोंके गीतापर सारगर्भित भाषण हुए। श्रीआर्यमहिला-महाविद्यालयकी छात्राओंके सुमधुर हरिनाम कीर्तनोपरान्त श्रीसभापतिःमहोदयका भाषण हुआ। आपने कर्म, भक्ति और ज्ञान तीनों-विषयोंकी विशद विवेचना की और कहा कि गीताके द्वारा हमें इन तीनों विषयोंकी सुगम शैली प्राप्त होती है, उसे ही अपना कर हम अपना जीवन सफल बना सकते हैं।

## द्वितीय दिवस

आजका कार्यक्रम श्रीमान् डा० राजबलीपाण्डेय, ( जबलपुर विश्वविद्यालय ) के सभापतित्वमें हुआ। गीतापाठ, वेदध्वनि तथा मंगलाचरणोपरान्त श्री पं० रमाशंकर शुक्ल, श्री पं० हरिवल्लभजी शास्त्री आदिके सारगर्भित भाषण गीताकी महत्तापर हुये। श्री पं० कृष्णदेव द्विवेदीने कवितापाठ किया। तत्पश्चात् श्रीमान् सभापति महोदयने भाषण करते हुए इस बातपर बल दिया कि मनुष्यको निष्काम कर्मयोग अपनानेकी उत्तम शैलीका प्रदर्शन हमें गीतासे ही प्राप्त होता है, उसे जीवनमें उतारनेके हेतु प्रत्येक व्यक्तिको सतत प्रयत्नशील होना चाहिए।

## तृतीय दिवस

आजका कार्यक्रम कविराज आ० रत्न पं० ब्रजमोहनजी दीक्षित महोदयकी अध्यक्षतामें सम्पन्न हुआ। गीतापाठ, वेदध्वनि, कीर्तन एवं मंगलाचरणके उपरान्त सर्वश्री पं० विष्णुप्रसाद सा० आचार्य, पं० सोमनाथ पाण्डेय वैदिक, अभिरामदास वेदान्ताचार्य, पं० रामकृपालुजी सा० अध्यापक, पूजनीया श्रीमती विद्यादेवीजी, सन्तदास, हरिवल्लभ शास्त्री, पं० प्रभाकर मिश्र, रामबालकशास्त्री, नानूभाई जोशी, स्वामी प्रकाशानन्दजी, स्वामी महेश्वरानन्दजी, श्री रोहिणीकान्त शुक्ल आदिके भाषण हुए। तदुपरान्त श्रीमान् सभापति महोदयके भाषणोपरान्त पूजन और प्रसाद वितरणके बाद कार्यक्रम सम्पन्न हुआ।

## चतुर्थ दिवस

आजके अध्यक्ष श्रीमान् पं० बद्रीनाथ शुक्ल न्यायविभागाध्यक्ष वाराणसेय-संस्कृत-विश्वविद्यालय थे। आज भी कतिपय वक्ताओंके गीतापर सारगर्भित भाषण हुए। श्रीगौरीशंकरजी एम० ए० ने 'हम गीताको अपनायें' शीर्षक कविताका पाठ किया और सभापति महोदयके भाषणोपरान्त पूजन, प्रसाद-वितरण एवं मधुर हरिकीर्तनके साथ कार्यक्रम सानन्द समाप्त हुआ।

## पंचम दिवस

गीता-जयन्ती सप्ताहका पाँचवाँ दिवस बड़े समा-

रोहके साथ तपस्विनी पूजनीया श्रीमती विद्यादेवीजी महोदयाकी अध्यक्षतामें सम्पन्न हुआ। मंगलाचरण एवं स्तोत्र-पाठके उपरान्त सर्वश्री पं० दूधनाथजी चतुर्वेदी, आचार्य विष्णुप्रसाद, ज्यौतिषरत्नाकर पं० रामनाथजी ज्योतिषी, स्वामी प्रकाशानन्दजी तथा पं० रामानुज पाण्डेयके गीतापर अतीव सारगर्भित भाषण हुए। तदुपरान्त आर्यमहिला-सम्पादक श्री ठा० आत्माप्रसाद सिंहजीने स्वरचित 'गीता-गायकको नमस्कार' शीर्षक कविता सुनायी जिसमें गीताका संक्षिप्त किन्तु पूर्ण विवरण था। अन्तमें पूजनीया श्रीमती देवीजीने गीताको आधुनिक कालके अनुरूप जीवनमें व्यवहृत करनेकी शैलीपर बहुत सुन्दर प्रकाश डाला और बतलाया कि किस प्रकार मनुष्य अपने-अपने नियत कर्तव्योंका पालन करते हुए जगत्कल्याणके साथ-साथ अपने जीवनको सफल बनाकर मोक्षका अधिकारी हो सकता है। मोक्ष जीवनका चरम ध्येय है। जीवन, जरा और मरणके चक्करसे मुक्ति दिलानेकी सरल विधि हमें गीतासे ही प्राप्त होती है अतः प्रत्येक मनुष्यका यह परम कर्तव्य है कि गीताका पठन-पाठन और मनन करके उसके उपदेशोंको अपने जीवनमें उतारनेका प्रयत्न करे और मानवजीवनको सफल बनावे। आपका भाषण लगभग डेढ़ घण्टेतक हुआ। तत्पश्चात् आरती और प्रसाद-वितरणके उपरान्त आजका कार्यक्रम समाप्त हुआ।

## षष्ठ दिवस

आजका कार्यक्रम वाराणसेय सं० विश्वविद्यालयके साहित्य-प्राध्यापक श्रीमान् पं० महादेवशास्त्रीकी अध्यक्षतामें सम्पन्न हुआ। श्रीमान् शास्त्रीजीने गीताके द्वारा मानव कर्त्तव्योंके निर्देशपर सारगर्भित भाषण किया और कहा कि मानवका कल्याण अपनी संस्कृतिपर अडिग रहनेसे ही हो सकता है। हमारी अपनी संस्कृति किसी भी प्रकार उपेक्षणीय नहीं है। सभीने उसका लोहा माना है। गीता हमारे संस्कृति-दर्शनका एक बहुमूल्य रत्न है, उसे सभीको अपनाना चाहिए। सभापतिके भाषणके उपरान्त पूजा-आरती और प्रसाद-वितरण हुआ।

## सप्तम दिवस

आजके सभापति वाराणसेय सं० विश्वविद्यालयके श्रीमान् पं० क्षेत्रेश चट्टोपाध्याय, डाइरेक्टर रिसर्च विभाग थे। आज जयन्तीका अन्तिम दिवस था। जनताकी अपार भीड़ थी। मंगलाचरणके उपरान्त सर्वश्री आचार्य सन्तदास, रामानुज पाण्डेय महोपदेशक, पं० विजयकुमार राय आदिके भाषण हुए। अन्तमें सभापति महोदयने उपनिषद्के उद्धरणोंद्वारा गीताके महत्त्वका उत्तम प्रतिपादन करते हुए कहा कि गीता भक्तिके उत्तम रससे सराबोर है। हमारे स्वर्गीय गुरु महामहोपाध्याय श्री गंगानाथ झाका कथन था कि अनेक आचार्योंके टीका-भाष्योंको छोड़कर केवल मूल गीताका ही अहर्निश अध्ययन करनेसे पूर्ण तत्वोंका परिज्ञान अपने आप होने लग जाता है और उस परिज्ञानको प्राप्तकर मनुष्य अपने जीवनके चरम लक्ष्यको प्राप्त कर सकता है। इसके बाद श्री पं० अवधेशप्रसादजी शर्माने श्री भारतधर्म-महामण्डलके कार्य-विभागोंका संक्षिप्त परिचय देते हुए सभापति महोदय एवं उपस्थित जनताको हार्दिक धन्यवाद दिया और आरती एवं पूजन तथा प्रसाद-वितरणके बाद उत्सवके अन्तिम दिनका भी कार्यक्रम सानन्द समाप्त हुआ।

---

# STUDY AND PROPAGATION OF SANSKRIT

## By Muslim Scholars

[ Translated from an articles written by Shri Devi Narain Vidya Sagar, Advocate, General Secretary, Bharat Dharma Mahamandal published in Suryodaya, September, 1960. ]

During the last one thousand years, many Moslem scholars have rendered wonderful service for propagation of Sanskrit by studying, translating into Persian and publishing a number of Sanskrit books. This work of their's is really praiseworthy. Mahomedan Emperors spent large sums of money for getting many Sanskrit books translated into Persian. Moslem scholars also wrote many books in Sanskrit and translated into Persian a number of Sanskrit books on rhetoric, literature, music, painting Astrology, Ayurveda etc. They also translated the Ramayan, the Mahabharat and the Upanishads into Persian.

Emperor Feroze Shah Tughlak ( 1351 to 1366 AD ) himself studied Sanskrit in the famous Sanskrit college at ज्वालामुखी ( Jwalamukhi ) and translated a number of Sanskrit books into Persian. He also translated into Persian बाराही संहिता (Barahi Samhita), a famous book on Astrology.

Under the orders of Emperor Sikandar Lodi ( 1488 to 1513 A.D. ) Maulana Ib Nakh Awaj Khan translated many books on Ayurveda into Persian.

Moghal Emperors also showed great enthusiasm for propagation of Sanskrit literature by translating Sanskrit books into Persion. Akbar Shah, the greatest of the Mughal Emperors freely extended royal patronage for spread of learning of Sanskrit books on literature, music, painting etc. He founded a religion called "Din Elahi" for bringing in a fusion of all religions. In his court he had Faizy, Abdul Fazal, Badayuni, Raja Todar Mala, Raja Mansinha, popularly known as the "nine gems". Amongst them, poet Faiji went to Banaras and studied Sanskrit there.

Faiji, Abdul Fazal, Badayuni and many other learned men were well versed in Sanskrit, Arbic and Persian languages. Of them, poet Faiji was exceptionally, intelligent and well read. He translated Srimad Bhagabat Gita into Persian in sweet and melodious verses.

Poet Faiji also translated नैषद चरितम् ( Naishadh Charitam ) in Persian verses and published the same as a Mahakavya under the tittle "Nala Daman". This book is available even at the present time.

Under the orders of Emperor Akbar, the महाभारत ( Mahabharat ) was translated into Persion in 1582 A.D. under the editorship of Faiji, Abdul Fazal, Badayuni and other moslem scholars. This was published under the title "Rajnamah" with a number of pictures.

Under the orders of Emperor Akbar,

a pictorial edition of पञ्चतन्त्र Panchatantra) was published in 1518 A. D. in Persian and was named "Mayur Dania" by Abdul Fazal. Pervious to this in 1516 A.D., Panchatantra was translated into Persian by a Mahomedan Scholar named Sheikh Muhammad Suhaily and was published under the title "Anwar Suhaily" under the orders of the officers of the Government. The book is still in circulation and is regarded as a famous book in Persian literature.

In 160) A.D. Emperor Akbar got हरिवंशपुराण ( Hari Vansa Puran ) translated into Persian and published as a Persian book with pictures.

Dara Shikoh, the eldest brother of Emperor Aurangzeb, was a noble. Sufi Ruler with a religious trend of mind and was bent on reading Hindi, Philosophy. Sahajada Dara Shiko was, like his illustrious great grand father, Emperor Akbar was noble hearted, generous and a great patron of learning himself being a philosopher with power to appreciate the subtleties of life. He went to Banaras, studied Sanskrit and with the assistance of Pandits and Sannyasis translated fifty Upanishads into Persian in 1656 A.D. and published the same under the title "Sir Akbar." In the preface of this book he wrote as follows :—

> "Having come to Banaras, the chief place of pilgrimage of the Hindus, I assembled Sanskrit Pandits and Sannyasis in 1067 Hijri Era, and with their assistance translated the Upanishads in sweet Persian versess."

Translation of the Upanishads by Shahzada Dara Shikoh deserves special recognition in as much as this helped in spreading the Upanishads in European Countries.

NOTES

It is interesting to note that a large number of Sanskrit books on various subjects were written during the Moslem Rule and the study and teaching of Sanskrit were carried on without any interruption. In fact, though Persian was the court language, Sansksit was always given a place of respect and honour. Advancement of Sanskrit during this period was direetly due to the love and reverence that people felt for Sanskrit and indirectly to the patronage of the rulers which in its turn created an impetus to the people for reading Sanskrit. To mention only a few names, we find that during this period was written the famous fairy tale कथा सरित सागर of Somadeva ( 1010 A.D. ), the story book वैताल पञ्चविंशति by Sivdas 11th century ), the renowned Historical treaties राजतङ्गिनी by Kalhan ( 1148 A.D- ) dramas महानाटकम् by Damodar Mishra, प्रबोध चन्द्रोदय by Krishna Mishra, कर्ण सुन्दरी by Bilhan—all in the 11th century ; Grammatical treaties मुग्धबोध by Bopdeva ( 13th century ) सिद्धान्त कौमुदी by Bhattaji ( 17th century ), कवि रहस्य by Halayudha ( 10th century ) Legal treaties मिताक्षरा by Vijnaneswar ( 1100 A. D. ), दायभाग by Jimuta Vahan ( 15th century ), the famous book on Astronomy सिद्धान्त शिरोमणि by Bhaskaracharya ( 1115 A.D. ), Algebra लीलावती by Bhaskara, illuminating books on Rhetoric and Prosody such as साहित्य दर्पण by Biswanath ( 14 century ), काव्य प्रकाश by Mammata (1100 A.D.) अलङ्कार सुधामणि by Hemchandra (1100 A.D.)

# संस्कृत-समाचाराः

**संस्कृताध्यापनं आवश्यकीकरणम् :—**लुधियाना-दिसम्बरमासस्य पञ्चमदिने संस्कृताध्यापनं पंजाब प्रदेशे प्रशालासु महाविद्यालयेषु च आवश्यकं करणीयम् इति विषयमधिकृत्य पंजाबसाहित्यसंमेलनं प्राचोदयत् पंजाबशासनम्। संस्कृत पण्डितेभ्यः शिष्यवृत्ति-पारितोषिकादि दीयताम्। पारम्परिकपद्धत्या अध तशास्त्राणां शास्त्रिणां वेतनं आधुनिकपदवीधराणाम् आधुनिकानां वेतनेन सह समकक्षं क्रियताम्, तथा विद्यापीठ-कार्यकारिमण्डलादि निर्वाचने शास्त्रिणाम्-अपि मताधिकारः अस्तु, इत्येवं विषयकाः प्रस्तावाः संमेलनं स्वीकृताः। पंजाबशिक्षामन्त्रिणः श्रीमन्त अमरनाथविद्यालंकारमहोदयाः स्वीये अध्यक्षीयभाषणे एवम् अवदन्-संस्कृत-शिक्षकाणां वेतनवर्धने पंजाबशासनं बद्धपरिकरं वर्तते।

**धार्मिकशिक्षणार्थं संस्कृतपण्डितानां राष्ट्रियप्राध्यापकत्वेन नियुक्तिः—**लुधियानानगरे दिसम्बरमासस्य तृतीयदिवसे वेदादिपवित्रतमग्रन्थेषु निबद्धं धार्मिकं शिक्षणं प्रदातुं संस्कृतपण्डितानां राष्ट्रीय-प्राध्यापकत्वेन नियुक्तिः शासनेन करिष्यते इति उद्घोषयन्तः पञ्चनदसंस्कृत साहित्य संमेलनोद्घाटकाः राज्यपालाः श्री न० वि० गाडगीलमहाभागाः। न काऽपि पञ्जाबी हिन्दी सदृशी भारतीया भाषा संस्कृताध्ययनं विना विकासं यास्यतीत्यपि स्पष्टमुक्तं राज्यपालैः।

**मोहमयीनगरे भागवतसप्ताहयज्ञः—**पूज्यपादश्रीमद्जगद्गुरु श्रीशंकराचार्य श्रीद्वारकाशारदापीठा-धीश्वराणाम् शुभप्रेरणया किल मोहमय्यां १६-१२-६० तः श्रीमद्भागवतसप्ताहसमारम्भः सानन्दं समपद्यत। भागवतवक्ता श्रीनरेन्द्रदेवतापीशंकरदवेमहोदयः आसीत्।

**नभोवाण्यां संस्कृतप्रचारार्थंसमितिः—**कलकत्ता दिसम्बर-२० दिवसे-वङ्गीयसंस्कृतशिक्षापरिषदा आयोजिते समारोहप्रसंगे वार्ताप्रचार आकाशवाणीमन्त्रालयाधिकृतैः केन्द्रीयमन्त्रिभिः डाक्टर केशकर-महोदयैः उद्घोषितं यत् संस्कृतकार्यकलापप्रचारणकार्ये अखिल-भारतीय-आकाशवाण्याः साहाय्यम् आचरितुं नियुक्तास्ति काचन समितिः यस्याः अध्यक्षपदं विभूषयन्ति मद्रपुरीवास्तव्याः 'संस्कृतप्रतिभा' संपादकाः डा० वे० राघव महोदयाः। एतादृशी च समितिः आकाशवाण्याः प्रतिकेन्द्रं स्थापिता भवेत् इति।

**सीतामऊस्थः संस्कृतविद्यालयः—**२४-११-६० दिनाङ्के विद्यालयस्य सर्वे एव अध्यापकाः प्राघू-र्णिका अन्ये विद्वांसश्च समीपवर्ति श्रीकोटेश्वराख्यं धाम गत्वा तत्र रुद्राभिषेकपूर्वकं वेदमन्त्रद्वारा षोडशोपचारैः भगवन्तं चन्द्रार्धचूडामणिं समाराधयन्। भक्तिमयः कार्यक्रमोऽतीवरुचिरो मधुरमधुरोऽभवत्। २६-११-६० दिनाङ्के च विद्यालये महाविदुषो सीतामऊनरेश श्रीरामसिंहजूमहोदयानाम्-अध्यक्षतायां महता समारोहेण गीताजयन्त्युत्सवः सम्पन्नः। उत्सवे स्मिन्नवसरे सर्वे एव विद्वांसोऽधिकारिणोनागरिकाश्चामन्त्रिताः।

(भारतवाणी)

———

# श्री पण्डित मुकुन्दशास्त्रि खिस्ते-

## भूतपूर्व साहित्यविभागाध्यक्ष महानुभावानां सौप्रस्थानिकाभिनन्दनम् ।

३-१२-६२ दिनांके रविवासरे त्रिवादनसमयादारभ्य संस्कृतविश्वविद्यालयस्य स्थानापन्नाधिकारिणां पं० कुबेरनाथशुक्लमहोदयानां सभापतित्वे सौप्रस्थानिकाभिनन्दनस्य कार्यक्रमः प्रावर्तत । गुरुवर्याणां पं० मुकुन्दशास्त्रिखिस्ते महानुभावानां विषये विद्यार्थिनां अध्यापकानां च महती श्रद्धा भृशमनुरागश्च अभिव्यक्तोऽभूत् । विद्यार्थिभिः कैश्चित् पद्यवन्धेन अन्यैश्च गद्येनैव निजश्रद्धाञ्जलिः समर्पितः । ततो साहित्यविभागस्य प्राध्यापकैः श्री पं० द्विजेन्द्रनाथमिश्रमहोदयैः सौप्रस्थानिकपद्योपहारो मुद्रितः काचमञ्जूषामण्डितश्च शास्त्रिवरेभ्यः प्रादायि । तदनु प्राध्यापकेषु सुरेन्द्रनाथशास्त्रि, डा० सुभद्रझा, पण्डित महादेवोपाध्याय, पं० भूपनारायणझा, कैलाशचन्द्र जैन, अमृतलालजैन, वटुकनाथशास्त्रिप्रभृतिभिः खिस्तेमहोदयानां विषये वैदुष्यपूर्णाः स्वहृदयोद्गाराः प्रकाशिताः । अध्यक्षपदात् स्वाभिप्रायं प्रकटयद्भिः पं० कुबेरनाथ शुक्लमहोदयैः शास्त्रिवर्याणां विषये अगाढां श्रद्धां प्रकटीकृत्य तेषां बहुमूल्यसहयोगलाभात् विश्वविद्यालयस्य उत्कर्षं वर्णयित्वा तेभ्यो निजः श्रद्धाञ्जलिः निवेदितः ।

अन्ते शास्त्रिवर्यैरपि निजविषये श्रद्धामाविष्कृतवतां सर्वेषां प्रति कृतज्ञता प्रदर्शिता । धन्यवादप्रदानानन्तरं सभा विसर्जिताऽभूत् ।

हरिपाल द्विवेदी
प्रचारमंत्री
साहित्यपरिषद् वा० सं० विश्वविद्यालय
वाराणसी ।

---

## सदुपदेशाः

कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥

अभ्यासाद्धार्यते विद्या, कुलं शीलेन धार्यते ।
गुणेन ज्ञायते त्वार्यः, कोपो नेत्रेण गम्यते ॥

अयममृत - निधानं नायकोऽप्योषधीनां ।
शतभिषगनुयातः शम्भुमूर्ध्नोऽवतंसः ॥
विरहयति न चैनं राजयक्ष्मा शशाङ्कं ।
हतविधिविलसितानः [illegible] ॥

पूर्णोऽहमर्थे इति मा प्रमीद रिक्तोऽहमर्थे इति मा विषीद ।
रिक्तं च पूर्णं भरितं च रिक्तं करिष्यतो नास्ति विधेर्विलम्बः ॥

---

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य त्रैभाषिकं त्रैमासिकञ्च मुखपत्रम् ।

( वार्षिकं मूल्यम् अग्रिमं मुद्रात्रयम् )

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन् ,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

२७तमे वर्षे दशम-एकादश-द्वादश संख्याः] तुला-वृश्चिक-धन-संक्रान्तयः २०१८वैक्रमाब्दः[अक्टूबर-नवम्बर-दिसम्बर १९६१

## सम्पादकीया अभिप्रायाः

—❀—

### महात्मा गोस्वामी तुलसीदासः

सम्वत् सोलह सौ असी असी गंगके तीर ।
श्रावण शुक्ला सप्तमी तुलसी तजेउ शरीर ॥

हिन्दीभाषायां विरचितया उपर्युक्तकवितया सुस्पष्टमिदमवगम्यते यत् महात्मानो गोस्वामि-तुलसीदासस्य पञ्चत्वकालादारभ्येदानीं यावत् शतत्रयाधिका अब्दा व्यत्ययगच्छन् । सर्वत्रैव भारते श्रावण-शुक्लसप्तम्यां तिथौ महामहिमशालिनो महापुरुषस्य तस्य जयन्ती महोत्सवः सम्पाद्यते, हिन्दूजनता कदापि महापुरुषमेनं न विस्मरिष्यतीति सुदृढो विश्वासः । महात्मना श्रीमता गोस्वामि-तुलसीदासेनस्वीये समये हिन्दुसमाजस्य यादृशी सेवा सम्पादिता, तादृशीं अल्पीयांस एव विद्वांस विहितवन्तः । महात्मनः एतस्य समये भारते साम्राज्यमासीत् माहम्मदानाम् । तस्मिन् काले संस्कृतप्रचारवैरल्यात् वेदशास्त्रदर्शन-स्मृतिपुराणग्रन्थानामध्ययनाध्यापनाभावाच्च भगवान् सनातनो धर्मो ह्रासमानो लोकरक्षायै न प्राभवत् । समस्तापि हिन्दुजनता परस्परं व्यस्ता सती धर्ममर्मज्ञानाभावात् अधो गच्छन्ती बभूव । भारतीया वैदिकाः पञ्चापि सम्प्रदाया विशेषतः शैवा वैष्णवाश्च परस्परं कलहाय सज्जा आसन् । तत्कालीना भारतीयाः सोदराणां निजानां बन्धूनामेव रक्तपिपासवः समवालोक्यन्त । तदानीं धर्मपरिपालन-परायणानामादर्शक्षत्रियाणां प्रायेणाभावोऽभूत् । एतादृशे काले कलिकाले धर्मज्ञानं पुनराविर्भावयितुम्, पञ्चसु सम्प्रदायेषु वैष्णवेषु च परस्परं प्रेम प्रवर्द्धयितुं भारतीयानां मानवानां कर्तव्यं प्रदर्शयितुम्, किं बहुना कुटिलैः कदर्यहतकैः निशाचरा-धमैरपहृतां भारतजन्मीं पुनरानेतुं च मन्ये भगवा-नादिकवि-र्वाल्मीकिः स्वयमेवातीर्य तुलसीरूपो राम-

चारे... मग्रप्रणयनपरः अधःपतितभारतजनतोद्धार-हेतवे सर्वतः समुत्कृष्टं श्रेयस्करं पन्थानं प्रदर्शितवान्। तुलसीकृतरामायणेन भारतीयानां यादृश उपकारो विहितः सचवर्णनातीत इति सर्ववादिसम्मतः सिद्धान्तः। भारतस्य अत्यज्ञानविरहितोऽपि मानवः पूज्यपाद-गोस्वामितुलसीदासविरचितस्य रामायणस्य बहूनि पद्यानि गायतिपठति च। रामायणस्य यादृशः प्रचारो विद्यते न तथा अन्यस्य ग्रन्थस्य। पूज्यपादो महात्मा तुलसीदासो भारतीय—संस्कृतिसंरक्षणपूर्वकं सनातनधर्मस्य मानवमात्रस्य च परमं कल्याणं कृतवान्। अधुना स्वतन्त्रे भारते मानसकथाप्रचारस्य महत्प्रयोजनं विद्यते। परन्तु संस्कृतभाषाज्ञानमन्तरा रामचरितमानसस्य समीचीनं ज्ञानं न भवितुमर्हति। आधुनिका बहवो हिन्दीभाषाकवयो गीर्वाण-वाणीज्ञानराहित्यात् समाजेषु नितान्तमनुत्कृष्टं हीनहीनमादर्शमुपस्थापयन्तो देशं जातिं चाधो नयन्ति। तैः महानुभावैः महात्मा तुलसीदासो नून-मनुकरणीयः, तैश्च संस्कृताध्ययनमनुष्ठेयम्।

---

## श्रीमालवीय जन्मशती समारोहः

विश्वविख्यातानां हिन्दूविश्वविद्यालय संस्था-पकानां पूज्यपादानां स्वनामधन्यानां महामनसां पण्डितमदनमोहनमालवीयमहोदयानां जन्मशती-समारोहो दिसम्बरमासस्यान्तिमे सप्ताहे सुमहता समारोहेण हिन्दूविश्वविद्यालये सुसम्पन्नः। तत्र भारत-स्य राष्ट्रपतिः सर राधाकृष्णन्महोदयः, भारतप्रधान-मन्त्री पण्डित जवाहरलाल नेहरूमहोदयः महाराजा-धिराजकर्णसिंहमहोदयः (सदरे रियासत जम्बू-कश्मीर) अन्ये च शिक्षाविदो विद्वांसः कलामर्मज्ञाः समुपस्थिता आसन्। माननीय मालवीय-महोदयानां स्मृतिमन्दिरे तच्चित्रप्रतिमास्थापनं पुस्तकालयस्थापनमपि जातम्। तत्र विविधानां धार्मिकेतिहासादिदार्शनिकग्रन्थानां सुमनोहरः संग्रहो वर्तते। अस्मिन् शुभावसरे श्रीभारत-धर्ममहामण्डल-शास्त्रप्रकाशिता अनेके ग्रन्थाः समर्पिताः। काशी हिन्दूविश्वविद्यालयोऽयं मालवीय-महोदयानां अजरो अमरा कीर्तिस्तम्भो विजयते।

—❀—

## ग्राहकेभ्यो निवेदनम्

'सूर्योदय'स्य वार्षिकं मूल्यं मुद्रात्रयं वर्तते। कियतां ग्राहकमहानुभावानां वार्षिकं मूल्यं साम्प्रतमपि नागतम्। सूर्योदयोऽयं बहोः कालात् नियमितरूपेण संस्कृतसरस्वत्याः सेवां विदधाति। संस्कृतभाषायां सर्वतः प्राचीनमिदमेव पत्रमिति नास्ति संस्कृतसेव-कानाम-प्रत्यक्षम्। स्वतन्त्रे भारते संस्कृतभाषाभ्युदया-भिलाषुकैः सुधाधारेयैः विद्यार्थिबान्धवश्चात्र नूनं ध्यानं दत्वा स्वीयं साहाय्यं मुद्रात्रयं धनादेशद्वारा शीघ्रं प्रेषणीयम्। येषां 'सूर्योदय' ग्रहणेच्छा न भवेत्, तैः कृपया कार्यालयः सूचनीयः।

---

# संस्कृतज्ञानामुपेक्षा

ले०—रामस्वरूप शास्त्री "अमरः"

सति स्वतन्त्रता-सूर्योदयेऽपि साम्प्रतं नास्ति स्वदेशे संस्कृत-सूर्योदयः । यथाऽऽङ्ग्लभाषाभाषिणोऽन्य-भाषाविदो जनाः समृद्धाः सुखिनश्च सन्ति न तथा सुरगिराभिज्ञाः सुरज्ञाः संदृष्टाः कुत्रापि ? सर्वत्र सुव्याप्ते मायाजाले भारतेऽस्मिन् देशे नेतृवर्गोऽखर्वं गर्वमुद्वहन् कंसकौर्यमपि तिरस्करोति स्वकर्मणा । नारून् यवनाः शासका गौराङ्गमहाप्रभव एतादृशा देवभाषा-विरोधिनो यादृशा एते शासनमदमदान्धीभूताः केचित्संस्कृतरसानभिज्ञा भारतीयनेतारः सन्ति । ते परद्वेषिणः संस्कृतं संस्कृतज्ञान् सत्पुरुषान् काणेनापि चक्षुषा दृष्टुं न शक्नुवन्ति । कीदृशी इयं स्वाधीनता ? यस्यां सुरभारतीविद्वांसः समुपेक्षिता दुःखिनो दारिद्र्यसम्पन्नाश्च सन्ति । हिन्दीभाषायाः शिक्षकेभ्यो राष्ट्रीयपुरस्कारं ददाति माननीयः श्रीराष्ट्रपति-महोदयः । किन्तु राष्ट्रनायकैस्तैरपि सम्मान्यैः श्रीराष्ट्रपतिमहाभागैः संस्कृतज्ञानामुपेक्षैव कृतेति लगति । संस्कृतविभागाधिकारिणो महानुभावा अपि "स्वार्थं तु साधयेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता" इति वाक्यं मन्यमाना इव संस्कृतज्ञान् संस्कृतं च वर्द्धितुं प्रयत्नशीला न भवन्तीति प्रतीयते । शासकेभ्यो यादृशः सम्पूर्णानन्दो मिलितो न तादृशः संस्कृतज्ञेभ्यो जनेभ्यः । शासकवर्गपरिवारेऽपूर्णाऽऽनन्दः, परिपूर्णानन्दश्च समाविष्टो दृश्यते । अधुना भारते भारते देशे प्रायः पक्षपातस्यापि पक्षपातोऽवलोक्यते । यस्मिन्देशे संस्कृतज्ञानां समादरः समुन्नतिश्चासीत्तस्मिन्नेव देशे देवभाषायास्तदुपासकानाञ्च निरादरोऽवनतिश्च सञ्जातेति दुःखप्रदा वार्ता । संस्कृतपाठशालासु विद्यार्थिनः पठनार्थमपि नागच्छन्ति । यतस्ते जानन्ति यत्—संस्कृतपठने न शासने पदप्राप्तिर्भवति न च लोके समादरः । सर्वकारेण संस्कृतपरीक्षाणां समकक्षता तु स्वीकृता, किन्तु शिक्षा-धिकारिभिः शासकैश्चापि संस्कृतज्ञेभ्यः सौविध्यं स्थानञ्च नैव दीयते इति नास्ति तिरोहितं सुज्ञेभ्य इति ।

समाचारपत्रेषु प्रचारो भवति यत्संस्कृतसमुन्नति भवति, सर्वकारेणापि च प्रयासः क्रियते किन्तु प्रत्यक्षं तु अन्यदेव दरीदृश्यते । श्रुतं मध्यप्रदेशशासनेन संस्कृतमनिवार्यं कृतम् । किन्तु संस्कृतज्ञानां वर्तन-मानन्तु नास्ति समुचितम् यथाऽन्यभाषाऽध्यापकानां वर्तते । एवं सन्ति सर्वत्र समुपेक्षिताः सुरभारती-पाठकाः पाठिकाश्चापि । हस्तिदन्तवद् व्यवहारे प्रत्यक्षे च संस्कृतस्य संस्कृतज्ञानां च दशाऽन्यथैव वर्तते । संस्कृतस्य संस्कृतज्ञानां वा दुःखश्रोता अपि न दृश्यते । संस्कृतविद्यालये छात्रसंख्याऽतिन्यूना भवति । नगरेषु यत्र कुत्रापि यस्मात्कस्मात्स्थाना-दानीय बालकान् निरीक्षकेभ्यो दर्शयन्ति संस्था-सञ्चालकाः । किन्तु ग्रामीण-विद्यालयेषु का गतिस्तेषा-मिति स्वयमेव ज्ञास्यन्ति सज्जना जना इति । उत्तर-प्रदेशे संस्कृतपाठशाला न तथा परिवर्द्धिताः सर्वकारेण यथा प्राथमिक शालाः उच्चतरमाध्यमिकशालाश्चापि । राजकीयानुदानमपि संस्कृतसंस्थाभ्यः स्तोकमेव मिलति । भवननिर्माणानुदानस्य तु वार्तैव का ? भगवान् विश्वनाथ एव विजानातु यत्कथं भविष्यति संस्कृतस्य संस्कृतेश्च संस्कृतज्ञानां समुद्धार इति ?

एकतस्तु सुरभारतीसमुपासका एव सङ्गठिता न सन्ति। विप्रवर्गे यादृशी संस्कृतं प्रत्युपेक्षा दृश्यते, न तादृशी कुत्रापि ? संस्कृतपाठशालानाशाय संस्कृतविघाताय च प्रायशो विप्राः क्षत्रिया एवाग्रेसरा भवन्ति। हवनयज्ञादिकर्मसु गौराङ्गमहाविद्यालयाध्यापकानां धर्मनिरपेक्षाणां यवनादिजातीयानामेव भोजनार्थं निमन्त्रणादिकं क्रियते प्रायशो जनैः। मतप्राप्तये सर्वेषां मतिः सर्वं कृत्यमकृत्यं कर्तुं सक्षमा सञ्जाता इति प्रतीयते। हन्त ! एतादृशः समयो न भूतो न भविष्यतीति निश्चयमेवास्ति। संस्कृतज्ञा भगवदाश्रयं स्वकीयं बलं मत्वा यथाकथञ्चिज्जीवनं यापयन्तीति। संस्कृतज्ञानां दुर्दशां त एव जानन्ति ये सन्ति स्वयं संस्कृतज्ञाः कालकलाप्रभावपीडिताश्च। किन्तु ये महाभागा राज्याश्रयं लब्ध्वा यत्र कुत्रापि संलग्नास्तेषां तु वार्तैव निरर्थका। वाराणसेय-विश्वविद्यालये वाराणस्यां ये सन्ति राजकीयपदप्रतिष्ठिताः संस्कृतज्ञास्ते साम्प्रतं सुखिनः सन्ति ! किन्तु ये संस्कृतज्ञा ग्रामीणा ग्राम्यसंस्कृतपाठशालासु भाग्यवशाज्जीवनं यापयन्ति तेषां क्लेशं त एव जानन्ति। न जाने संस्कृतभाषाया भाग्यभानुः कस्य ग्रहस्य चक्रे पतितः ? अथवा संस्कृतज्ञानां दैवं केन दुर्ग्रहेण क्रान्तम् ? एकतस्तु संस्कृतपरीक्षा एव कठिना जाता। शुल्कवृद्धिरपि कृता परीक्षाधिकारिभिः। परन्तु प्रशिक्षणविद्यालये संस्कृतज्ञानां प्रवेशोऽपि दुर्लभः। प्रयत्नैः पराभूतैः कतिपयसंस्कृतज्ञैः निराशाश्रयणं कृतम्। कार्यालयेषु सर्वाः सुविधाः संस्कृतज्ञेभ्यः प्रदत्ताः, परन्तु प्रयोगे तु भगवानेव सुविधा प्रदाता।

भोजराज्ये समृद्धाऽऽसीद् यथेयं सुरभारती।
तादृशी सुखसम्पन्ना कदा शूलिन् ! भविष्यति ?

अयि ! संस्कृतप्रणयिनः ! उत्तिष्ठन्तु ? यदि भवन्तः प्रसुप्ता स्तर्हि संस्कृत-संस्कृति सूर्योदयो दुर्लभः ?

---

# मदीया दक्षिणभारत-यात्रा ❀

**लेखकः—श्रीवासुदेव द्विवेदी वेदशास्त्री, साहित्याचार्यः**

( सार्वभौम संस्कृत प्रचार कार्यालयः वाराणसी )

प्रास्ताविकं किञ्चित्

ये ये संस्कृतभारतीप्रणयिनो ये संस्कृताध्यायिनो
ये वा संस्कृतरक्षणे तदुदये श्रद्धानिबद्धादराः।
पत्नी-शिष्य-सुतादिभिः सह मुदा ये संस्कृतालापिन-
स्तेषां पावनपादपद्मयुगयोः साष्टाङ्गपातं नमः ॥

कस्मिन् प्रदेशे संस्कृतशिक्षायाः कीदृशी परिस्थितिः संस्कृतज्ञानां च कीदृशं सङ्घटनमिति परिज्ञानाय, संस्कृतप्रचाराय तथा देशाटनाय च मया बहुभ्यो वर्षेभ्यो भारतस्य विभिन्नेषु प्रदेशेषु समये समये परिभ्रमणं विधीयते। तदनुसारं व्यतीतेषु वत्सरेष्वपि उत्तरप्रदेश-बिहार-बङ्गाल-दिल्ली-पञ्जाब-राजस्थान-शिमलाप्रभृति—प्रदेशानां यात्रा विहिता। अस्मिन् वर्षे पुनर्दक्षिणभारतस्य पावनप्रदेशानां दर्शनाय समुत्सुकं समजायत ममानसम्। ततश्च

❀ यात्राया विवरणमिदं कैश्चनिमित्तकारणवशाद् विलम्बेन प्रकाश्यते तदर्थं प्रतीक्षमाणैः सुहृद्भिः क्षन्तव्योऽस्मि।

२१-८-५१ तिथेरारभ्य २५-१२-५१ पर्यन्तं मया भ्रमणं विहितम्। यद्यपि साधनानां समयस्य च पर्याप्ततायाः अभावात् नहि यथाभिलाषं सर्वेष्वपि स्थानेषु भ्रमणं कर्तुं पारितं तथापि बहूनि दर्शनीयानि गन्तव्यानि च स्थानानि प्रायेण अवलोकितान्येव। मार्गस्य वक्रतया, आयासभयात्, अज्ञानाद्वा यानि स्थानानि अभीष्टान्यपि द्रष्टुं न पारितानि तेषु विजया-नगरम्, विजयवाडा-चित्तूर-गोकर्णनाथप्रमृतीनि सन्ति। तदस्यां यात्रायां तेषु तेषु स्थानेषु ये ये संस्कृतविद्यालया दृष्टाः ये ये संस्कृतविद्वांसः साक्षात्कृतास्तथा यासां सभासमितीनां परिचयो लब्धस्तेषां सर्वेषामपि लेखेऽस्मिन् संक्षिप्ततमः परिचयः प्रकाश्यते। यद्यपि मुख्यतया इयं यात्रा दक्षिणभारतस्यैव आसीत् तथापि तत्र प्रवेशकाले ततो निर्गमनकाले च मया उत्तरभारतस्यापि बहुषु स्थानेषु कानिचित् दिनानि अतिवाहितानि। अतः प्रसंगवशात्तेषामपि स्थानानां संस्कृतविषयकं वृत्तमत्र संक्षिप्य प्रकाशितं वर्तते। यद्यपि यात्राया विस्तृतं सचित्रं च विवरणं प्रकाशयितुमिच्छा आसीत्तथापि विपुलद्रव्यव्ययभयात्तथा कर्तुं न पारितम्। केवलं तत्तत्स्थानेषु साक्षात्कृतानां विदुषां, विद्यालयानां संस्कृताभिमानिनां तथा सहायकानां च पुण्यस्मरणाय, दक्षिणभारतभ्रमणाभिलाषिणां परेषामपि संस्कृतज्ञानां सौविध्यसम्पादनाय तथा केषाचित् सुहृदामादेशपालनाय च एवं लघीयोऽपि विवरणमवश्यमेव प्रकाशनीयमिति मनीषया एष लेखः प्रकाश्यते। अस्मिन् भ्रमणवृत्तान्ते संस्कृतविषयकं यत्किञ्चिन्मया यादृशं दृष्टं तत्तादृशमेव पाठकानां पुरतः समुपस्थापितमिति यदि केषाञ्चित् दृष्टौ किमप्यत्र अप्रीतिकरं प्रतिपादितं स्यात्तर्हि तदर्थं गुणैकपक्षपातिभिर्महानुभावैः क्षन्तव्योऽस्मि। तथैव स्मृतिदोषवशात् यदि केषाञ्चिद् वर्णनीयानामपि पुरुषाणामत्र चर्चा परिहृता स्यात्तर्हि तैरपि नान्यथा भावनीयमिति विनयावनतेन मूर्ध्ना अभ्यर्थये।

दक्षिणभारतस्य इयं मम प्रथमयात्रा आसीत्। अतः सौविध्यार्थं केषाञ्चित् परिचयपत्राणामावश्यकताऽनुभूता। तदर्थं मया निवेदने कृते काशीस्थैः विद्वद्वरैः श्री पं० कालिकाप्रसादशुक्लमहोदयैः, श्री-अनन्तशास्त्री फडकेमहाशयैः, श्रीजितेन्द्रियाचार्यवर्यैः श्री लक्ष्मणाचार्यटोणयेमहोदयैः तथा श्रीपण्डित बाल-कृष्णपञ्चोलीमहोदयैरनेकानि परिचयपत्राणि प्रदत्तानि येन यात्रायां महत् सौकर्यमासादितं मया। तदर्थमेभ्यो महानुभावेभ्यो मया भूरिशः साधुवादाः कृतज्ञताश्च विज्ञाप्यन्ते। परन्तु दक्षिणभारतीयप्रदेशानां काशीतो दूरवर्तितया तथा तत्रत्यानां सर्वथा ममापरिचिततया च एतावन्ति परिचयपत्राणि लब्धापि मे हृदये तत्रत्या मनीषिणो मयि प्रीतिं कुर्वन्ति न वा तथा कदाचिद् विषमासु दशासु पतितासु ते साहाय्यमाचरिष्यन्ति न वेति महती चिन्ता आसीत्। परन्तु मदीयमिदं सौभाग्यं मन्यताम्, अथवा दाक्षिणात्यानां स्वभावस्यैव इदं वैशिष्ट्यमवगन्तव्यं यदस्यां यात्रायां परिचयपत्रं विनापि सर्वैः खलु महानुभावैः सर्वथा अपरिचितैरपि महान् स्नेहः प्रदर्शितः महती च सहायता मे विहिता। परिचयप्राप्त्यनन्तरमेव "इदमासनमलङ्क्रियताम्, अपि भवद्भ्यः काफीपानं रोचते? दाक्षिणात्यभोजनेषु कृताभ्यासा वा भवन्तः? स्नानाय उष्णोदकमपेक्ष्यते किमु? सर्वं यथारुचि विधीयताम्, स्वगृहे को विचारः? एवंविधमपूर्वप्रीतिपुरस्कृतैर्वचनै यथाभिलषित-निवासभोजनजलपानादि सर्वविध-सौविध्यसम्पादनेन, दुर्गमेषु स्थानेषु सहगमनेन, भ्रमणार्थं यानादिव्यवस्थया, स्थले स्थले मम परिचय-प्रदानेन, पत्रपत्रिकादिषु मम भ्रमणवृत्तान्तप्रकाशनेन, अस्वास्थ्यदशायां सर्वथा तथा मार्गव्ययार्थमर्थसाहा-

दयेन च तैः नितरामनुगृहीतोऽस्मि । तथैव सभासमितीनामायोजनेन, व्याख्यानादिव्यवस्थया, स्वागतसमारोहेण, अभिनन्दनपत्रप्रदानेन तथा सबहुमानं छायाचित्रग्रहणेन च बहुभिर्विद्वज्जनैः संस्कृतपरिषद्भिस्तथा छात्रसङ्घैश्च भृशं सम्मानितोऽस्मि । न च केवलं तरुणैरेव अपि तु नितान्तं वयोवृद्धैरपि तञ्जौरनगरस्थैः रिटायर्ड डिप्टीकलक्टर-श्रीरामस्वामी ऐयरमहोदयैः तथा त्रिचनापल्ली-निवासिभिः रिटायर्ड-कलक्टर श्री एल० एस० पार्थसारथि-महोदयैश्च उपानद्रहिताभ्यामेव पादाभ्यां मया सह धावं धावं यः सद्भावातिशयः प्रदर्शितस्तस्योदाहरणानि प्रायेण दुर्लभान्येव । तत्सर्वमपि स्मारं स्मारं सुतरां मोमुह्यते चेतो लालायते च पुनः पुनर्हृदयं तत्सर्वमपि पुनः साक्षात्कर्तुम्, एतादृगसामान्यसौहार्दसन्दर्शनाय तेभ्यः सर्वेभ्योऽपि भूयो भूयः सादरं कृतज्ञाञ्जलयः समर्प्यन्ते । भगवान् भवानीपतिः विश्वनाथस्तेषां सर्वेषामपि निरवशेषं सौख्यविशेषं विदध्यादिति च मुहुर्मुहुरभ्यर्थये ।

पुनः कदाचिदस्या यात्रायाः संस्मरणप्रसङ्गेन विशिष्य वर्णनीयानां वृत्तानां पृथक् पृथक् विस्तृतं विवरणं दीयेत । सम्प्रति विस्तरभयात् प्रकरणमिदमत्रैव समाप्य यात्राविवरणं प्रकाश्यते । विवरणान्ते केचन अन्येऽपि प्रासङ्गिका विषया उपन्यस्येरन् । केषाञ्चित् साहाय्यकर्तॄणां पुण्याभिधानस्मरणमपि विधीयेत । तदेतत् सर्वं तत्रैव पाठकैरवलोकनीयमिति विरम्यते तावत् ।

---

## २—यात्राविवरणं स्थानक्रमेण संस्थादीनां परिचयश्च

### कटनी ( मध्यप्रदेश ) २१-२-५६

वाराणसीतो रायपुरं प्रति प्रस्थितस्य मम धूम्रशकटी परिवर्तनार्थं कटनीनगरे कश्चन समयो यापनीय आसीदिति अहं समीपवर्तिनि श्रीनारायण-संस्कृतपाठशालानाम्नि विद्यालये दैनिककृत्यसम्पादनाय कालक्षेपाय च गतः । ततस्तत्रत्यैरध्यापकैः सह परिचये संवृत्ते तैरहं तत्र एकदिनं निवासाय तथा मध्याह्नकाले संस्कृतविश्वपरिषदः स्थानीयशाखया आयोज्यमानायां सभायामुपन्यासाय च समादिष्टः । ततस्तेषामादेशपालनाय तत्र स्थितेन मया तस्य स्थानस्य परिचयो लब्धस्तथा तेषां सौहार्दलाभोऽपि मे जातः ।

अस्मिन् नगरे द्वौ विद्यालयौ वर्तेते । एकस्तु उपरिष्टाच्चर्चितः श्रीनारायणी संस्कृतविद्यालयः तथा द्वितीयो जैन संस्कृतविद्यालयः । उभयोरपि विद्यालययोः भवनम्, अध्यापनव्यवस्था, छात्रसंख्या, पुस्तकालयः छात्रपरिषद् तथा छात्राणामध्यापकानाञ्च सभासम्मेलनादिविषयकः समुत्साहश्चेति सर्वमपि सन्तोषप्रदं वर्तते ।

संस्कृतविश्वपरिषदः शाखापि अत्र महता समुत्साहेन सञ्चाल्यते । अस्या मन्त्रिणः श्री कन्हैयालालशास्त्रिजैनमहोदया अत्र क्रियमाणस्य संस्कृतप्रचारसम्बन्धिनो निखिलस्यापि कार्यकलापस्य सञ्चालका एते परमोत्साहसम्पन्नाः सहृदया विद्वांस सन्ति ।

### रायपुर ( २०-८-५६ )

मध्यप्रदेशस्य इदमेकं प्रधानं नगरं वर्तते । अत्र सर्वापेक्षया प्रामुख्येन समुल्लेखनीयं स्थानं श्रीदूधाधारी वैष्णवमठः अस्ति । एष मठः सम्पूर्णेऽपि मध्यप्रदेशे प्राचीनतमः प्रसिद्धतमो विशालतमश्च । सम्पत्तिरपि

एतस्य सुमहती। एतन्मठाध्यक्षाः श्रीमहन्त वैष्णवदास-महोदया यथार्थतः साधुस्वभावाः सुगृहीतनामधेया विद्यानुरागिणो विशालहृदयाश्च साधवः सन्ति। इदं पुनरेतेषामेकमनन्यसाधुसाधारणं वैशिष्ट्यं यदेते संस्कृतज्ञैः सह संस्कृतयैव गिरा सर्वदा भाषन्ते, वस्तुतो रायपुरे प्रवर्तमानानां सर्वासामपि धार्मिक सांस्कृतिक शैक्षणिकप्रवृत्तीनां पुरस्कर्तारः पोषकाश्च इम एव महाशया वर्तन्ते।

अस्मिन् नगरे एभिरेव महानुभावैः समर्पितेन चलाचलसम्पत्ति भूतेन साहाय्येन श्रीदूधाधारी वैष्णवसंस्कृत-महाविद्यालयनाम्ना एकः सर्वाङ्गपरिपूर्णः दर्शनीयतमश्च संस्कृतमहाविद्यालयश्चलति। सुविस्तृतः परिसरो विशालतमश्च भवनमेतस्य विद्यालयस्य। अत्र सागरविश्व-विद्यालय प्रवर्तितपाठ्यक्रमानुसारं सर्वैः नवीनैः विषयैः सह आङ्गलभाषया च सह संस्कृतशास्त्राणां शिक्षा दीयते। छात्रेभ्यो वृत्तिप्रदानस्य छात्रालयस्य साधीयसी व्यवस्था वर्तते। महाविद्यालये समये समये सभा-समितयोऽपि सोत्साहं समनुष्ठीयन्ते। मम गमनकाले तत्रत्यं प्रधानाचार्यपदं सुविख्याता विद्वांसः श्रीसरस्वती-प्रसादचतुर्वेदमहोदयाः व्याकरणाचार्या विभूषयन्ति स्म। सम्प्रति तत्पदं मदीयाः सुहृदो विद्वद्वराः श्रीपण्डितरामनन्दन ओझा महोदया अलङ्कुर्वन्ति। एते यथैव प्रवीणा विद्वांसस्तथैव अध्यापनकलाकुशलाः सामाजिकाः सहृदयाः उदारचेतसः संस्थासञ्चालन-पटीयांसश्च विद्यन्ते। गीतवाद्यादिष्वभिरुचिः विनोद-प्रियता सुहृज्जनेषु स्नेहातिरेकश्चेति एतेषां नैसर्गिका गुणाः सन्ति। अत्र एतेषामेव निवासस्थाने अहं न्यवसं चिरकाङ्क्षितं गोष्ठीसुखञ्च अन्वभूवम्।

एतन्महाविद्यालयातिरिक्तं मठेऽपि प्राचीनपद्धत्या-एकः संस्कृतविद्यालयः प्रचलति। यत्र भूयांसश्छात्रा निवासभोजनादिसुविधालाभेन विधिवत्सुरम्यो व्याकरण-साहित्यादिविषयाणामध्ययनं कुर्वन्ति। अत्र व्याकरणाचार्याः श्रीमन्तः पं० शिवकुमारशर्ममहोदया प्रधानाध्यापकपदे विराजन्ते। अत्रत्यैश्छात्रैरेका छात्र-परिषदपि सञ्चाल्यते।

अत्र नगरे अपरोऽप्येकः संस्कृतविद्यालयः प्रचलति। एतस्यापि अवस्था समीचीना वर्तते। अत्रत्याः प्रधानाचार्याः पाण्डित्येन सह व्यवहारकौशले तथा वाक्पाटवेऽपि प्रवीणा अवलोकिताः।

## नागपुर ( ५।६।५६ )

अत्र वेदवेदान्तसंस्कृतमहाविद्यालयः ब्रह्मकर्म-वर्धिनीसंस्कृतपाठशाला चेति द्वौ विद्यालयौ वर्तेते, अनयोः वेदव्याकरणसाहित्यादिविषयाणामध्ययनं भवति। एतदतिरिक्तं गायत्रीविद्यालयनामा अपरोऽप्येको लघीयान् विद्यालयो वर्तते। एषु विद्यालयेषु श्रीब्रह्मकर्मवर्धिनीसंस्कृतपाठशालाया वयोवृद्धा अपि प्रधानाध्यापकाः श्रीकृष्णकान्तशर्ममहोदया-स्तथा अन्येऽपि अध्यापकाः छात्राश्च सहृदया उत्साह-सम्पन्ना नाट्यसाहित्यसंस्कृतकलारसिकाश्च अवलोकिताः।

अस्मिन् नगरे संस्कृतभाषाप्रचारिणीसभा नाम्नी एका सुव्यवस्थिता संस्था दशभ्यो वर्षेभ्यः समीचीनतया सुरभारतीसेवापरायणा वर्तते। 'संस्कृत-भवितव्यम्' इतिनाम्नः साप्ताहिक - संस्कृतपत्रस्य प्रकाशनम्, सरलभाषया संस्कृतप्रचारोपयोगिनां पुस्तकानां प्रकाशनम् सरलसंस्कृतपरीक्षाणां प्रचालनम् समये समये सभासम्मेलनादीनामायोजनम्, संस्कृत-नाटकानामभिनयो विविधस्पर्धानां प्रवर्तनं पुरस्कारादि प्रदानद्वारा संस्कृतलेखकानां प्रोत्साहनञ्चेत्यादीनि कर्तव्यत्वेन निर्धारितानि कार्याणि सन्ति समाया अस्याः। अस्याः सभायाः प्रधानकार्यवाहाः श्री स०ना०

कुम्भकर्णा महोदयास्तथा प्राध्यापककरणे करमहोदयाश्च वर्तन्ते ।

अत्र गीतामन्दिरनाम्ना एकं विशालं भवनं वर्तते । यत्र सर्वदैव विदुषां साधु महात्मनां च गीताप्रवचनं भवति ।

एतन्नगरस्य अग्रगणनीयेषु विद्वत्सु नागपुरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षाः महामहोपाध्याय श्री वा० वि० मिराशीमहोदया प्रामुख्यं भजन्ते । एते संस्कृतसाहित्यसम्बन्धिनां बहूनां महत्त्वपूर्णग्रन्थानां लेखकाः सन्ति ।

अत्र ब्रह्मकर्मवर्धिनीससंस्कृतपाठशालायामेव मदीया वसतिरासीत् अत्रत्यैश्छात्रैः दिनद्वयेनैव संस्कृतगीतनाटकप्रहसनादीनामपि प्रदर्शनं कृतमिति मे महान् सन्तोषः जातः ।

## हैदराबाद ( भाग्यनगरम् ) ८।६।५६

अस्मिन् नगरे केन्द्रीय-संस्कृतक्रियासमितिनाम्ना एका प्रदेश-व्यापिनी समितिः संस्थापिता वर्तते यस्याः संरक्षणे प्रदेशेऽस्मिन् त्रिंशत्संस्कृतविद्यालयाः तथा हैदराबाद नगरात् किञ्चिद्दूरवर्तिनि आलवालनामके स्थाने एकः संस्कृतमहाविद्यालयश्चेति एकत्रिंशत्संस्कृतशिक्षणसंस्थाः प्रचलन्ति । अस्मिन् महाविद्यालये सप्तदश अध्यापकाः शताधिकाश्च छात्रा वर्तन्ते । सर्वेषामपि शास्त्राणामध्यापनं भवति । छात्राणां निवासभोजनादिव्यवस्था नितान्तं समीचीना वर्तते । छात्रैरेका पाक्षिकी सभाऽपि परिचाल्यते ।

हैदराबादसन्निहिते सिकन्दराबादनामके नगरेऽपि एकः मन्नूलालसंस्कृतकालेजनाम्ना महाविद्यालयो वर्तते । अत्रैव एकं सैदाबादनामकं स्थानं वर्तते यत्र केवलं हरिजनबालकानामेव कृते एका पाठशाला प्रचाल्यते । अत्र त्रयः अध्यापकाः चत्वारिंशदधिकाश्च छात्रा विद्यन्ते । एते सर्वेऽपि हरिजनविद्यार्थिनो वैष्णवं वेषं धारयन्ति वैष्णवांश्च आचारान् पालयन्ति । श्रीविष्णुसहस्रनामस्तोत्रपाठपुरस्सरं किल एते प्रातरध्ययनं प्रारभन्ते । एतेषां पठनं लेखनं श्लोकोच्चारणशैली अनुवादश्चेति सर्वमपि सर्वथा समीचीनं सन्तोषावहं प्रशंसनीयं च वर्तते । इदं सर्वं मया विद्यालये चिरं स्थित्वा स्वयं साक्षात्कृतम् ।

उपर्युक्तायाः समितेः अवैतनिककार्यसम्पादकाः श्री एम० सौन्दरराजन ऐयङ्गारमहोदया वर्तन्ते । एते जातिसम्प्रदायनिर्विशेषं सर्वेष्वपि भारतीयेषु संस्कृतभाषाप्रचारार्थं विशुद्धशास्त्रीय पाण्डित्यपरिरक्षणार्थं बहुप्रयतमाना वर्तन्ते ।

एतन्नगरवास्तव्येषु साहित्यरसिकेषु विद्वत्सु श्री के० लक्ष्मणशास्त्रिमहोदयाः तथा वैद्यवर्य-श्रीगयाप्रसाद-शास्त्रिमहोदयाश्च प्रामुख्येन उल्लेखनीया वर्तन्ते । अनयोः श्रीलक्ष्मणशास्त्रिमहोदयाः सम्प्रति राज्य-सूचनाविभागस्य उपाध्यक्षाः सन्ति । एभिः अनेकानि पुस्तकानि लिखितानि । संस्कृतभाषया भाषणे लेखे कवित्वे चापि इमे अधिगतपाटवा प्रकृत्या च विनोदप्रियाः सहृदयाश्च ।

एतेषां संक्षिप्तः परिचयो वाचकमहानुभावैर्निम्नाङ्कितेन पद्येनावगन्तव्यः । यथा—

मूर्तिर्मत्तगजेन्द्रगर्वदलिनी वाणी विनोदप्रिया ।
व्याख्या-लेख-कवित्व-गौरवकलापारं गता शेमुषी ॥
शक्तिः संस्कृतभाषणेऽप्यनुपमा विद्वज्जनेष्वादरः
श्रीमल्लक्ष्मणशास्त्रिणां गुणगणाः केषां न तोषावहाः ॥

अपरे पुनः श्री वैद्यमहोदया वार्धक्यादायुर्वेदव्यवसायतो विरक्तकल्पा गृहे साहित्यचर्चायां नूतनतया समागतानांसंस्कृतविदुषामाश्रयदातारोऽपि इमे महानुभावाः । एतेषां गृहे यथा स्वच्छता, सुरम्यता, शान्तिः, सर्वेषामपि वस्तूनां यथायथस्थाने समुचितरूपेण सन्निवेशः प्रशान्तमधुरा आलापाः अभ्यागतानाञ्च

आदरातिशयो दृष्टस्तत्सर्वमन्यत्र एकस्मिन् स्थाने सुदुर्लभमेव। एतेषां गृहे निवसता मया सर्वमिदं स्वयमेवानुभूतं चिरंऽस्मरणाय एकस्मिन् पद्ये उपनिबद्धं च। यथा—

रम्या शान्तिकुटी समस्तशुचिता शृङ्गाररङ्गस्थली
लीलाभूमिरुदारहारि - वचसामातिथ्यपुण्याश्रमः।
विश्वासस्थलमेकमेव विदुषां माधुर्य-धारागृहं
श्रीमत्शालिगयाप्रसादसदनं स्वर्गोपमं राजते॥

अन्ये पुनरस्या महानगर्याः प्रतिष्ठिता विद्वांसः श्री वंशीधर विद्यालङ्कारमहोदयाः, डा० आर्येन्द्रशर्माणः, डा० रामनिरञ्जनपाण्डेयमहोदयाः डा० राजकिशोर पाण्डेयमहोदयास्तथा श्री श्रीरामशर्माणश्च सन्ति, एते वैदुष्येन सह साहित्यविनोदिनोऽपि विद्यन्ते। एतेषु डा० रामनिरञ्जनपाण्डेयमहोदयास्तु न केवलं पण्डिता अपि तु गार्हस्थ्येऽपि स्वभावेन साधव एव।

## तिरुपति ( १४–६–५६ )

इदमेकं सुप्रसिद्धं तीर्थस्थानं दक्षिणभारतस्य। अत्र वेङ्कटेश्वरकलाशालानाम्ना एकः संस्कृतमहाविद्यालयो बहोःकालात् प्रचलति, सम्प्रति अत्र आन्ध्रभाषाया अपि अध्यापनं भवति। अस्मिन् विद्यालये श्री सी० रामसुब्बाशर्मा साहित्यशिरोमणिः तथा आर० राममूर्तिशर्मा व्याकरणशिरोमणिश्चेति द्वौ विशिष्टौ विद्वांसौ सहृदयौ साहित्यरसिकौ च। अत्र एताभ्यामेव सुस्निग्धमधुरेण आतिथ्येन सनाथी कृतोऽहम्। अत्रैव च मया सर्वप्रथमं सम्भारसारतक्रप्रधानस्य दाक्षिणात्यभोजनस्य तथा भोजनकालिकस्य आचारस्य च परिचयो लब्धः।

## तिरुमलै हिल्स ( १६–६–५६ )

इदं स्थानं तिरुमलैपर्वतस्य उच्चतमे शिखरे वर्तते, यत्र भारतप्रसिद्धं बालाजीमन्दिरं सुप्रतिष्ठितमस्ति। अत्रैव भगवान् वेङ्कटेश्वरो विराजते। अस्मिन् मन्दिरे चतुर्दश घनपाठिनो वैदिका विद्वांसः सन्ति ये प्रतिदिनं मन्दिरे वेदपारायणं कुर्वन्ति। अत्रैव एका वेङ्कटेशवेदपाठशालापि प्रचलति। सम्प्रति अस्या वेदपाठशालाया विस्ताराय एकस्य महाविद्यालयस्य च सञ्चालनायापि प्रयत्नो विधीयमानोऽस्ति। तदर्थमनेकानि मनोहराणि भवनानि निर्मितानि। अन्यानि निर्मीयन्ते। अस्य महाविद्यालयस्य प्रधाना आयोजका न्यायवेदान्तमीमांसा-साहित्यशिरोमणयः दार्शनिकसार्वभौमाः श्री सुदर्शनाचार्याः सन्ति।

अत्र सर्वेषां संस्कृतविद्यालयानां सञ्चालनं श्रीबालाजीमन्दिरस्थकोशद्वारा एव विधीयते। एतेन कोशेन केषाञ्चित् धार्मिकानां संस्कृतपुस्तकानामपि प्रकाशनं क्रियते।

## मद्रास ( मद्रपुरी, चिन्नपुरी ) १७–६–५६

इदं नगरं भारतस्य विशालतमेषु नगरेषु तृतीयं स्थानमलङ्करोति मद्रासप्रदेशस्य च राजधानी वर्तते। अस्मिन् नगरे मद्राससंस्कृतकलाशालानाम्ना एकः चिरान् सुप्रतिष्ठितः प्रसिद्धतमश्च संस्कृतमहाविद्यालयो विराजते। अत्र वेद - व्याकरण-साहित्य-मीमांसा-वेदान्तादि सकलशास्त्राणामध्यापनं भवति। शास्त्राध्ययनस्य एतस्मिन् विकरालेऽपि ह्रासकाले अत्र अष्टौ विद्यार्थिनो मीमांसाशास्त्रस्य अध्ययनं कुर्वन्ति। अस्य विद्यालयस्य प्रधानाचार्या श्री के० बालसुब्रह्मण्यशास्त्रिमहोदया अनेकशास्त्रनिष्णाता उपन्यासकुशलाः साहित्यरसिकाः सहृदयाश्च विद्वांसः सन्ति। एते वयोवृद्धा अपि परमोत्साहसम्पन्नाः स्फूर्तिमन्तश्च।

अस्यैव विद्यालयस्य विशाले प्राङ्गणे कुप्पूस्वामी टिसर्च इन्स्टिट्यूटनाम्नी संस्थापि वर्तते यत्र संस्कृतग्रन्थानां तत्सम्बन्धिनामाङ्गलभाषाग्रन्थानां च महान् संग्रहो वर्तते। अत्रैव बहुविधपत्रपत्रिकोपेतो वाचना-

लयेऽपि एकः प्रचलति। एवं च पुस्तकालय-वाचनालय-दृष्ट्यापि अयं विद्यालयः समृद्धतमः। छात्रावासोऽपि एतद्विद्यालयसल्लग्न एवात्र। अत्र छात्रैरेका पाक्षिकी सभापि परिचाल्यते।

अस्मिन् नगरे "संस्कृत एकेडमी" नाम्ना एका संस्थापि बहुभ्यो वर्षेभ्यः प्रचलति। अत्र अनयैव सभया सभासम्मेलनादीनामायोजना क्रियते। अनया प्राचीनकाव्यग्रन्थेभ्यः संगृह्य सुबहूनि सुभाषितान्यपि लघुलघुपुस्तकरूपेण प्रकाशितानि सन्ति।

एतदतिरिक्ता अत्र एका अन्यापि "संस्कृत एजुकेशन सुसाइटी" नाम्ना नवीना संस्था सञ्चालिता वर्तते या दक्षिणभारते व्यापकरूपेण संस्कृतभाषायाः तत्साहित्यस्य च संरक्षणाय प्रचाराय च प्रचेष्टमाना अस्ति। अस्याः संस्थाया अध्यक्षा भारतप्रसिद्धा मनीषिणः श्री सी० पी० रामस्वामीएय्यरमहोदयाः सन्ति तथा कार्यदर्शिनः श्री टी० वी० विश्वनाथ ऐय्यर बी० ए०, बी० एल० महोदया वर्तन्ते।

हस्तलिखितसंस्कृतग्रन्थानां संग्रहसम्बन्धे अनुसंधानविषये ग्रन्थप्रकाशनविषये च अत्र मद्रासविश्वविद्यालयः तथा अदयारस्थिता थियोसोफिकल सुसाइटी चेति द्वे भारतप्रसिद्धे संस्थे विराजेते। एतदतिरिक्तकामकोटिपीठतः सञ्चाल्यमाना एका आराध्यत्र प्रकाशनसंस्था वर्तते या तामिलभाषानुवादेन सह बहूनि धार्मिकाणि स्तोत्रपूजापाठविषयकाणि च पुस्तकानि प्रकाशयति।

अस्यैव नगरस्य एकतमे विभागे त्यागरायनगरनाम्नि अखिलभारतप्रसिद्धायाः दक्षिणभारतहिन्दीप्रचारसभाया विशालं भवनं वर्तते। अनया सभया हिन्दीप्रचारोपयोगि पुस्तकपत्रिकादीनां प्रकाशनेन, हिन्दीपरीक्षाणां प्रवर्तनेन, समस्तेऽपि दक्षिणभारते हिन्दीविद्यालयानां सञ्चालनेन तथा सभासम्मेलनादीनामनुष्ठानेन च बहोः कालात् देशस्य महती सेवा विधीयते। अस्याः सञ्चालकाः प्रधानमन्त्रिणश्च 'श्रीमोटुरु सत्यनारायणनाम्ना एके विलक्षणकृतित्वशालिनो महापुरुषाः सन्ति। संस्कृते भारतीयसंस्कृतौ च एतेषां महती निष्ठा। मन्ये, अनया सभयाऽपि हिन्दीशिक्षया सह कियन्मात्रायां संस्कृतशिक्षाया अपि व्यवस्था विधीयेत।

अस्मिन् नगरे संस्कृतविदुषां गीर्वाणवाणीप्रणयिनां भद्रपुरुषाणां च भूयसी संख्या वर्तते। केन्द्रियसंस्कृतसमितेरध्यक्षाः विद्यारूपे मूर्तयः श्री पतञ्जलिशास्त्रिमहोदया अत्रैव विराजन्ते। अस्या एव समितेरेके मुख्यतमाः सदस्याः' मद्रासविश्वविद्यालयस्य संस्कृतविभागाध्यक्षा, बहूनां साहित्यसंगीतकलासम्बन्धिनीनां समितीनां सञ्चालकाः, बहूनां निबन्धग्रन्थानां लेखकाः कवित्वविषये-कविकोकिलेति विरुदभाजः श्री डा० वी० राघवन् महोदयाः स्वनिवासेन इममेव नगरं विभूषयन्ति। इमे यथा विद्वांसो लेखकाः कवयो गवेषका व्याख्यातारः सारासारविवेचकाश्च सन्ति तथैव सरलाः सहृदयास्तथा अन्येषां कृते सहायकाः पथप्रदर्शका उत्साहका उदाराशयाः स्वपरभेदरहिता अकारणबन्धवोऽपि विद्यन्ते। मद्रपुरनिवासकाले एतेषामनन्यविद्वज्जनसाधारणं स्वरूपमिदमवलोक्य मया मम मनोगता भावा अधस्तादङ्कितासु पंक्तिषु समासतः सन्निवेशिताः। एवमेव यदि अपरेऽपि विद्वांसो यथाशक्ति सर्वेषां साहाय्यं कुर्युस्तदा अचिरेण कालेन संस्कृतसमाजस्य अभ्युदयो भवेत्। पद्येन यथा—

दिव्याकृतिः किमपि गौरवमुद्वहन्ती
स्वाभाविकी सरलता हृदयं विशालम्।

साहित्यवारिनिधि मन्थनपण्डिता यः
श्रीराघवार्य्यविदुषामिह किं न धन्यम् ॥
काव्यालापकथा क्वचित् क्वचिदहो सङ्गीतचर्चा पुनर्
वेदे व्याकरणे पुराणविषये शश्वत् समालोचना।
नानावाङ्मयचिन्तनैश्च समयो यत्राखिलो नीयते
मन्ये राघवसूरिवर्य्यसदनं सारस्वतं मन्दिरम् ॥
आसक्तिर्न विलासवस्तुनिचये नो बाह्यबाह्यडम्बरं
नैवाहारविहारसत्कृतिकथालापादयः कृत्रिमाः।
भूमावप्युपविश्य लेखनकथाग्रन्थादि-संशोधनम्,
सर्वत्रैव विलोकिता सरलता श्रीराघवार्य्यगृहे ॥
धन्या मद्रपुरी पुरीषु विलसद्रत्नाकराऽलङ्कृता
धन्यास्तत्र च भारतप्रणयिनः श्रीविश्वनाथाद्वयः।
तन्मध्येऽयमगाधवारिधि - तलस्पर्धालुना सद्गुणे-
नौदार्येण विभूषितो विजयते श्रीराघवार्य्यः सुधीः ॥
दृष्टं सागरतीरवर्ति सकलं दृश्यं मनोमोहनं
दृष्टा सौधशतावली सुरुचिरा दृष्टः कपालीश्वरः।
दृष्टा पण्डितमण्डली च निपुणा सर्वं परं निष्फलं
दृष्टा मद्रपुरीमुपेत्य यदि नो श्रीराघवार्य्यः सुधीः ॥
दृष्टा मया सुबहुशो भ्रमता समन्ता-
ल्लोकोत्तराः सकलशास्त्रविदो बुधेन्द्राः।
निर्हेतुकी परहितप्रवणा प्रवृत्ति
दृष्टा तु केवलमयं ननु राघवार्य्ये ॥

मद्रपुरीनिवासकाले मम वासः संस्कृतकलाशालायां, भोजनं श्री टी० वी० विश्वनाथ ऐय्यरमहोदयानां गृहे तथा डा० वी० राघवन्महोदयानां गृहे दैनिककर्तव्यानां निर्धारणं भवति स्म। तद् गतागतं मया निम्नाङ्कितपद्यरूपेण सर्वदा स्मरणाय दर्पानिबद्धम्। यथा—

वासो मद्रपुरीय-संस्कृतकलाशालेय-विद्यालये
श्रीविद्वद्वरविश्वनाथभवने सुस्वादवद् भोजनम्।
कार्य्याकार्य्य - विनिश्चयश्च सततं श्रीराघवार्य्यगृहे
एवं मद्रपुरे गतागतशतैर्नीता मया वासराः ॥
(क्रमशः)

---

# क्रूरः कलिकालः
## (रच०—रामस्वरूपशास्त्री "भ्रमर" तालबेहटस्थः)

कीदृशः क्रूरतरः कलिकालः।
निर्दयं दशति दुर्जनो व्यालः ॥
संस्कृत-संस्कृति-सेवक-वर्गः सुखी न भारतदेशे।
किन्तु निर्भयं विचरति पापी लोको दानव-वेषे ॥
रोदिति चन्दनचर्चित-भालः।
निर्दयं दशति दुर्जनो व्यालः ॥१॥
परधन – परनारी - हर्तारो जना वर्द्धिता लोके।
कुलटाः सन्ति समृद्धाः सत्यः पतिव्रताः इह शोके ॥
प्रसृतो देशे मायाजालः।
निर्दयं दशति दुर्जनो व्यालः ॥२॥

परमनास्तिकः परद्वेषी सञ्जातो मानवप्राणी।
आङ्ग्लगिरा वर्द्धिता किन्तु संत्यक्ता संस्कृतवाणी॥
असुर - रूपो नेता विकरालः।
निर्दयं दशति दुर्जनो व्यालः॥३॥

धर्मो गतो नीतिरपयाता, सन्तजनेभ्यो भीतिः।
मित्रगणाः सुहृदः सञ्जाताः स्वार्थतत्परा प्रीतिः॥
वैरी भ्राता, स्नेही श्यालः।
निर्दयं दशति दुर्जनो व्यालः॥४॥

"अमर"—भारतीजुषां समाजे न हि इष्टं सम्मानम्।
हरिहरसङ्कीर्तनं न कुरुते यथा चित्रपटगानम्॥
पितृघाती सञ्जातो बालः।
निर्दयं दशति दुर्जनो व्यालः॥५॥

---

## प्रतिसंस्कृता सिद्धान्तकौमुदी

( पं० श्रीकृष्णमणित्रिपाठी, सरस्वतीभवनम्, वाराणसेय संस्कृतविश्वविद्यालयः )

शब्दानव्यवहार्यतामुपगतान् व्याकर्तुमायासनाद्
व्युत्पत्तिप्रदयुक्तियुक्तिविषयज्ञानं परं पश्यता।
ऊहापोहदिशा समुन्नमयितु प्रायोगिकीं पद्धतिं
कौमुद्याः प्रतिसंस्कृतिं विरचिता प्रेक्षावतां प्रीतये॥१॥

विश्वख्यातमहर्षिपाणिनिवचो व्याख्यानवृन्दोज्ज्वलां
शिक्षां व्याकरणस्य कालशिथिलां धारानुवृत्तामपि।
आलोच्य व्यवहारसौष्ठवकृते व्युत्पत्तये चाञ्जसा
व्यापारोऽयमुदारदृक् प्रणयिनां तोषाय जाजायताम्॥२॥

अप्रमेयात्समयादविच्छेदेन प्रवर्तमानासौ संस्कृतविद्या प्राचीनपरम्परागततया आर्यसंस्कृतेराधारभूमिः, यस्याः सूक्ष्मातिसूक्ष्मैराध्यात्मिकैः विषयैः प्रौढप्रौढैर्गभीरैर्विचारैः, अपरिहार्यैः सिद्धान्तैः तत्त्वावमर्शिभिरुपदेशैः, विशिष्टैर्निबन्धैः, निर्मलैराचारैः पवित्रैश्चरित्रैः, प्रोज्ज्वलैर्जीवनैश्च जगतः स्थितिः परमोत्कृष्टां प्रतिष्ठां प्रतिपेदे। सेयं दैवी वाणी ऐहलौकिकं पारलौकिकञ्चाभ्युदयं साधयन्ती बहुशोधाराभिः लोकानाप्याययति। विशिष्टैः

शिष्टैः सम्मान्यैषा सुरगवी वेदैः वेदाङ्गैः स्मृतिभिः पुराणेतिहासैः दर्शनैःकाव्यनाटकादिभिश्च अशेषान् अर्थान् विशदतयाऽवबोधयन्ती बहोः कालात् सर्वतः सम्भावनभाजनतामावहति । तस्या एव प्रवेशद्वारं व्याकरणमिति विदितमेवास्ति समेषां संस्कृतप्रणयिनाम्, सर्वाङ्गसम्पन्नाया गीर्वाणवाण्या रक्षावचायितं पाणिनीयं व्याकरणं वार्तिक-भाष्य-टीकोपटीकादिभिर्विवृतं सर्वातिशयं गौरवमावहति । अत एवोक्तं पराशरोपपुराणे—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥

व्याकरणस्य मुख्यं प्रयोजनं प्रायोगिकं विशेषविज्ञानं येन विशुद्धाया गैर्वाण्या वाण्याः तद्द्वारा संस्कृतविद्यायाश्चिरं परिरक्षणं सम्पद्येत इति न तिरोहितं विद्यते विदुषाम् ।

वैदिकानां लौकिकानाञ्च शब्दानां व्युत्पादकं पाणिनीयमष्टाध्यायीरूपं व्याकरणं लोकोपयोगदृशा प्रक्रियोचितक्रमेण परावर्त्य विवृत्य च, सकलशास्त्ररहस्यज्ञैः श्रीमद्भिर्भट्टोजिदीक्षितमहोदयैः सिद्धान्तकौमुदी स्वरूपेण न्यबन्धि ।

ततः शैक्षाणां कृते तस्या एव संक्षिप्तमतिसंक्षिप्तञ्च रूपान्तरमपि विद्वद्वरैः वरदराजाचार्यैः सम्पादितमस्ति, तदपि अद्यत्वे यथायथं व्यवहाराय पर्याप्तं नवेति न निर्द्धार्यते ।

समयः खलु स्वयं विपरिवर्तमानो विषयान्तराणीव शब्दव्यवहारमपि परिवर्तयति । प्राक्तनव्यवहारमनुसृत्य व्युत्पादिता बहुशः शब्दा महाकविभिरप्रयुज्यमाना केवलं व्याक्रियायामवतिष्ठन्ते । व्यावहारिकाणामव्यावहारिकाणाञ्च शब्दानां व्युत्पादने प्रसार्यमाणा दृष्टिर्महाभाराक्रान्ता न विशेषतो ध्यानाधान्याय प्रभवति । छान्दसांल्लौकिकानपि साधारणेनाव्यावहारिकानंशानुपरितनकक्षायां परिशीलयितुमवशेष्य प्रथमतो व्यावहारिकाणामेव परिज्ञाने यदि यत्नो विधीयेत तदाऽल्पेऽप्यायासो महते प्रायोगिकाय फलाय जायेत ।

शैक्षाणामपि प्रयोगव्युत्पत्त्याधायिन्यो विशेषोक्तयो भाष्यादिषु प्रस्थानान्तरत्वात् तत्र तत्र विकीर्णा उपलभ्यन्ते । अध्येया विषया विशेषापर्याप्तप्रमाणान्तरसंवादादिपरिज्ञाने समाद्रियमाणा हृदये स्थिरीभवन्ति । शब्दनिर्वचनप्रसङ्गेन तदर्थपरिज्ञानं प्रयोगसङ्गमनतत्सम्बन्धेन विशेषविषयाणामवगमोऽपि धियश्चतुर्दिश प्रसरणेन नैपुण्यं जनयतीत्यवं समालोच्य नेपालराजधानीकाठमाण्डूस्थ राजकीय-संस्कृत-महाविद्यालयीय-भूतपूर्वप्रधानाध्यापकेन गोरखाप्रबलदक्षिणबाहूपाधिधारिणा विद्वद्वरेण श्रीसोमनाथशर्मसिग्दियालमहोदयेन, व्यवहारनिर्वाहकानंपरिहार्यानंशान्मूले निवेश्य कांश्चित्कानंशान् उपपत्तिविशेषान् व्युत्पादकोक्तीः सम्बद्धविषयान्तराणि च बुभुत्सूनां व्याख्यातृणाञ्च कृते विवृतौ निवेश्य प्रसिद्धाया एव सिद्धान्तकौमुद्याः प्रतिसंस्करणेन व्यावहारिकं रूपान्तरं प्रकल्प्य २०१५ वैक्रमाब्दे मार्गशीर्षशुक्लाष्टम्यां वाराणसेय-रामघट्टस्थशान्तिकुटीरे आयोजितायां विद्वद्गोष्ठ्यां विवेचकानां विशिष्टविदुषां पुरस्तादुपस्थापितम् ।

तदिदं विशिष्टं ग्रन्थरत्नं व्यवहारोपयोगितया व्युत्पादकतया च वैयाकरणानामन्येषाञ्च संस्कृतानुरागिणां विपश्चितां महते प्रमोदाय अन्तेवासिनामुपयोगाय सौविध्याय चानुकूलमवश्यमिदं प्रकाशनीयमिति मत्वाससाधुवादं काशीस्थैर्विद्वद्भिः समर्थितम् । न केवलमत्र महाविदुषानेन मूलस्यैव प्रतिसंस्कारो विहितः किन्तु तदुपरि वैदुष्यपूर्णा विस्तृता विवृतिरपि

लिखिताः, विद्यार्थिनामुपयोगिनो जिज्ञासिता विषया-अपि मूले सन्निवेशिताः। भाषाया उद्गम आगम-मार्गेणारम्भे एव प्रदर्शिताः। ओप्रत्यय प्रकरणस्यारम्भे संस्कृतभाषायां लिङ्गतत्त्वं कारकप्रकरणे च विभक्तीनां क्रियाभिः सह सम्बन्धः, शाब्दबोधप्रकारोऽपि विवेचितः। यत्र यत्रापेक्षितं तत्र तत्र प्रयोगबाहुल्यं प्रक्रियासु च लाघवं प्रदर्शितम्। श्रीमद्भीमभट्टाजिदीक्षितैः गणेषु सर्वोऽपि धातुपाठः संगृहीतः परमत्रानेन विदुषा येषां धातूनां विरलः प्रयोगो नैव वा अद्यत्वे ये धातवः प्रयुज्यन्ते ते धातवः निष्काशिताः। विवृतौ उदाहरणप्रत्युदाहरणयोः स्वरचितवाक्येषु धातूनां प्रयोगमुपन्यस्य जिज्ञासूनां कृते सुगमः पन्थाः प्रदर्शितः। विवृतौ मुख्यतया महा-भाष्यमेवाधारीकृतम्। शेखरमनोरमयोस्तु विषयाः काठिन्यमपहाय कांचिदुदेव संगृहीताः सन्ति। काशिका-दिगतान्युपयोगीनि वार्तिकान्यपि कानिचित् निवेशितानि। अस्फुटतानि सिद्धान्तकौमुद्यां स्थान्यव-सूत्र-वार्तिक व्याख्यानानि पद्यान्तरप्रयोगेन कानिचत्स्पष्टीकृतानि। विप्रकीर्णानि च सूत्राणि प्रकरणकल्पनया संकलितानि, यथा णत्वविधायकानि सूत्राणि एकत्र णत्वप्रकरणे षत्वविधायकानि सूत्राणि च षत्वप्रकरणे एव सन्नि-वेशितानि। प्रसङ्गवशेन जिज्ञासया शास्त्रान्तरीया विषया-श्चापि यथोपयोगं सरलया सरण्या समुपस्थापिता-व्युत्पत्सूनां परमं प्रमोदमावहन्ति। अल्पायासेन व्याकरणरहस्यजिज्ञासूनामन्तेवासिनां कृते महते उपकाराय ग्रन्थोऽयमित्यत्र नास्ति काचित् संशीतिः।

अनादिवैदिकधर्मप्रचारतत्परैः प्रजारञ्जनानु-रागिभिः धृतसंस्कृतवाङ्मयरक्षाव्रतैः वीरराजन्यकुल-मुकुटालङ्कारैः नेपालनरेशैः सम्माननीय श्री ५ महा-राजाधिराजैः, महेन्द्र वीरविक्रमहोदयैः, नेपाल एकेडमी महासंस्थाद्वारा वाराणस्यां मनोहरप्रेसनामके यन्त्रालये ग्रन्थरत्नमिदं प्रकाश्य संस्कृतवाङ्मयस्य महानुपकारः कृतः। मूल्यञ्चास्य विंशतिरूप्यकाणि सन्ति। विद्यार्थिनां कृते चार्द्धमूल्यं ग्रन्थकृता निर्धारित-मस्ति।

व्यावहारिकीं प्रायोगिकीं व्युत्पादिकां दृष्टिमुपादाय विहितोऽयं प्रतिसंस्कारः समयोपयोगी समेषां संस्कृत-प्रणयिनां महान्तमुपकारं विधास्यतीति हृदयेना-भिनन्दयन् प्रतिसरस्वतीसदनमस्य प्रचारं निकामं कामयते श्रीकृष्णमणिः।

---

## गङ्गास्तवनम्

**ले०—विष्णुप्रसाद पाण्डेय शास्त्री बी० ए०**

मुरारेः सर्वस्वं प्रचुरतपसां खण्डपरशोः
फलं भूभृद्राजा सुसमननुजायाः प्रियसखी
विरञ्चेर्वेदार्थामृतसरसधारेभकन्दना
ऽम्बिकोच्चर्वर्चस्यं क्रमत इह जहोर्हित्रभुवने॥१॥

कमण्डलवां धात्रा हरिचरणमाक्षाल्य निहिता
बृहज्ज्योतीरूपा कलुषमहिषामर्दनपटुः।
महादुर्गा दुर्गत्यतुलवनदावानलशिखा
ततः शैवे मूर्ध्नि प्रसरसि ततोऽङ्के हिमवतः॥२॥

क्रमादेवं गङ्गे त्रिपथमथमाश्रित्य भवती
जगत्यां लोकानां कलिकलुषमालाप्रशमनी।
विधत्सेऽनायासं प्रगुणपुरुषार्थांश्च चतुरो
निराशोऽयं माभूत सकलविधिहीनः शरणदे ॥३॥

क्षयौघार्ताः क्षुद्रास्तव सलिलपानं विदधतो
निरातङ्का रङ्का अपि गलितपङ्का सुकृतिनः।
द्रुतं भावं भावं प्रकृतिसुखसंदोहपदवीं
लभन्तेऽध्यासीनाः सतत-शमसम्पत्तिमतुलाम् ॥४॥

पुनाना त्वं लोकान् दुलितगुरुतापान् निरयतो
हठात् त्रायं त्रायं त्रिदिववनिता-लालिततनून्।
विधत्से दृष्ट्वैतत्च्छमनशमवार्ता विरहिता-
स्तदीया वै दूताः कल-कल-परशोकविधुराः ॥५॥

अहं श्रावं श्रावं विरुदशरणोन्ते व्यर्थासितो
निजोद्धारे मातर्विबुधतटिनि प्राज्यतमसाम्।
महागारो मन्दो मदनमधलोलालसितमते
कथञ्चिन्नोपेक्ष्यस्तव विमृशकं याम शरणम् ॥६॥

अये मातस्त्वय्यर्पितकुशलभारः सुखमहं
शये नव्यासङ्गस्त्वदिवरसमराधनविधौ।
विधेया नोहेलेषदपि मम निस्तारसमय
ऋते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ॥७॥

नभस्वान्ते लोलोर्मिप्रचदमलोन्प्राप्य पयसां
महैनः संक्षोभाद्विकलविधिसम्मर्दविहितः।
मरालाश्लिष्यन्यद् यदुपरतदेहं चलितवान्
अहो सोऽङ्ग प्राप्तः सुरपतिपुरस्तत् प्रमुदितः ॥८॥

ललाटेषूत्कीर्णां विधिविहित दुर्लेखि विततिं
जनानामार्तानां तव सविधगानां विरयसि।
निशम्यैतन्मां तत्त्वशरणसमायातमधुना
समुद्धर्तुं मातः परिकरविधित्सा भवतु मे ॥ ९ ॥

---

# हिन्दीकी जननी संस्कृत

## लेखक :—श्री० पं० चन्द्रदेव शर्मा, व्याकरणाचार्य

—०—

'आर्यावर्त' के गत २ अप्रैल १९६१ के रविवारीय परिशिष्टांक में पं० आम्बिका प्रसाद बाजपेयी का एक लेख "हिन्दीकी जननी-संस्कृत नहीं, प्राकृत" शीर्षक से प्रकाशित हुआ था, जिसमें बहुत-सी बातें प्रमाण रहित, तर्कहीन एवं निराधार कही गई हैं। विद्वानों के विचारार्थ मैं उन्हें प्रस्तुत करता हूँ।

बाजपेयीजीका कहना कि, "हिन्दीका प्राकृतसे जितना सम्बन्ध है उतना अन्य भाषासे नहीं" प्रत्यक्ष प्रमाणके विरुद्ध होनेसे निराधार है। अवश्य ही यहाँ हिन्दीसे उनका अभिप्राय वर्तमान हिन्दीसे है और यह संस्कृतके अतिनिकट और प्राकृतसे बहुत दुर है। स्वयं बाजपेयीजीने ही अपने उक्त लेखमें जिस हिन्दीका प्रयोग किया है उसमें कितने शब्द संस्कृतके हैं और कितने प्राकृतके, यह गिनकर पाठक तथ्यका पता लगा सकते हैं। एक समय, संस्कृत लोग, भाषा, विकास, नियम, परिचित, परन्तु, अनेक, पारस्परिक,

सम्बन्ध, अवगत, अल्प, जननी, नहीं, सर्व प्रथम, प्रयोग, प्राचीनतम इत्यादि अधिकतम शब्द उनके उक्त लेखमें संस्कृतके ही भरे पड़े हैं। हिन्दीका कोई भी संवाद-पत्र, शिक्षणालयोंकी पाठ्यपुस्तकें या विद्वानोंके हिन्दीमें भाषण पढ़ें या सुनें उनमें अत्यधिक शब्द संस्कृतके ही पाये जायेंगे। आकाश, वायु, अग्नि, जल; पृथ्वी, अन्य, अध्याय, आत्मीय, आज्ञा, ईश्वर, उत्पात, नूपुर, आदि, मध्य, अन्त, समय, काल, पुस्तक, ज्ञान, माता, पिता, बन्धु इत्यादि सहस्रशः शब्द हिन्दीमें संस्कृतके ज्योंके त्यों हैं। हिन्दीमें प्रयुक्त तद्भव शब्द भी संस्कृतके ही अतिनिकट और प्राकृतसे बहुत दूर है, उदाहरणार्थ इन शब्दों पर ध्यान दें—

| | | |
|---|---|---|
| हिन्दी— | संस्कृत— | प्राकृत |
| भाफ— | वाष्प— | बाही |
| सपना— | स्वप्नः— | सिविणो |
| सूरज— | सूर्यः— | सूज्जो...सूरो |
| सुकवार— | सुकुमार— | सोमालो |
| चैत— | चैत्र— | चपत्तो |
| नींद— | निद्रा— | णेद्दा |
| नेह— | स्नेह— | णेहो |
| खेत— | क्षेत्र— | छुत्तम्—इत्यादि |

हिन्दीमें द्वितीय, तृतीय, मनुष्य, मिथ्या, मित्र, मृदु, रत्न, शब्द, वेदना, विद्या, विज्ञान, वैद्य, सर्वज्ञ, हृदय इत्यादि सहस्रों शब्द संस्कृतके प्रयुक्त हैं। इनके अर्थमें प्रयुक्त प्राकृतके दुइअं, तइअं, माणुसो, मिच्छा, मित्ता, मुइंगो, रअणं, सद्दो, विअणा, विज्जा, विण्णाणं,वेज्जं, सव्वण्णोया सव्वण्णो, हिअअं इत्यादि शब्दोंमें अति दूर हैं। यदि हाथ, आज, मुह, बहरा, आंसू इत्यादि कुछ शब्द इत्यो आज मुहं बहिरो, बहिणी, या, भइणी, स्सू इत्यादि प्राकृत शब्दोंके समान भासित होते हैं जो हस्त, अद्य, मुखम्, बधिरः, भगिनी, अश्रु इत्यादि संस्कृत शब्दोंसे ही इनके अपभ्रंश स्वरूप उन प्राकृत शब्दों द्वारा आ गये हैं, अतः ये भी संस्कृतमूलक ही हैं।

"संस्कृत प्राकृतसे बहुत पीछे उत्पन्न हुई, पाली प्राकृतका पता यास्कको था। यास्कका समय ईस्वी सन् से ६०० वर्ष पहले था लगभग यही समय गौतम बुद्धका भी था। उस समय वर्तमान संस्कृत नहीं थी, परन्तु अनेक प्राकृत भाषाएँ प्रचलित थी, उस समय संस्कृत नहीं थी, और भाषा छन्द नामसे विख्यात थी।"

ये सारी बातें बिलकुल निर्मूल और मिथ्या हैं। यदि प्राकृतसे बहुत पीछे संस्कृत उत्पन्न हुई तो प्राकृत किस भाषासे उत्पन्न हुई? प्राकृत शब्दका क्या अर्थ है? प्रकृतिसे उत्पन्न प्राकृत तो यह प्रकृति क्या है? यदि प्रकृति शब्दसे स्वभाव लें तो किसके स्वभावसे ये भाषाएँ उत्पन्न हुई? मानव स्वभावसे, तो क्या सृष्टिके आदिसे सर्वप्रथम एक ही बार अनेक मानव उत्पन्न हुए या एक? एक ही बार पृथिवी पर अचानक अनेक मानवोंका उत्पन्न होना सृष्टि नियमके विरुद्ध है, अतः मानना पड़ेगा कि एक ही मानव सर्वप्रथम उत्पन्न हुआ और उसीसे मानव वंश क्रमशः बढ़ता गया, तो उस आदि मानवके स्वभावसे तो कोई एक ही प्राकृत भाषा उत्पन्न हुई होगी? एकके स्वभावसे अनेक भाषाओंकी उत्पत्ति एक ही कालमें हो, यह असम्भव है, तो पुनः अनेक प्राकृत भाषाओंका प्रचलन कहाँसे हुआ?

साथ ही यह भी विचारणीय है कि जिसकी प्रकृति अर्थात् स्वभावसे सर्वप्रथम कोई एक भाषा प्रकट हुई वह आदि मानव क्या स्वयं कोई भाषा

बोलने लगा ? यह प्रत्यक्ष है कि बालक सर्वप्रथम जन्म लेनेपर अन्योंके द्वारा उच्चारित शब्दोंको सुन-सुन कर ही कोई भाषा बोलता है तो उस समय अन्य लोग थे ही नहीं पुनः उसने भाषा सीखी कहाँसे ? यह भी विचारणीय है कि वह मानव बिलकुल अनभिज्ञ था अभिज्ञ ? यदि अनभिज्ञ था तो ऐसा कोई भी व्यक्ति बिना अन्य व्यक्तिसे शिक्षा पाये कुछ सीख नहीं सकता पुनः उसने वह भाषा सीखी किससे ?

इन समस्याओंका गम्भीर विवेचन करनेसे यह स्वीकार करना पड़ेगा कि सृष्टिके आदिमें कोई पूर्णतः अभिज्ञ, सर्वविज्ञान सम्पन्न, सर्वविद्यावेत्ता अवश्य ही था जिसने अपने पीछे उत्पन्न व्यक्तिकी भाषा या जीवनोपयोगी अन्य बातें सिखाई, उसे ही ऋषियोंने "ईश्वर" माना है। उसी ईश्वरने सर्वप्रथम प्रकट ब्रह्माके हृदयमें अपनी प्रेरणा द्वारा एक भाषाका सञ्चार किया जिसे वैदिक भाषा कहते हैं। आधुनिक अनुसन्धानकर्ता विद्वान् भी विश्वकी सर्वप्राचीन भाषा वैदिक भाषाको ही मानते हैं और वाजपेयीजीने भी इन भाषाकी सत्ता प्राकृत भाषासे पहले मानी है और उक्त विवेचनके आधारपर ऐसा मानना ही पड़ेगा, फलतः ईश्वरीय प्रेरणासे प्राप्त वेदभाषासे ही मनुष्योंने बोलना सीखा, यह निश्चित है। वह वेदभाषा संस्कृत-के अतिरिक्त दूसरी हो नहीं सकती क्योंकि संस्कृतके ही सभी शब्द वेदोंमें है।

विद्वान् सज्जन देखें तो—

अग्निम् ईडे पुरोहितम् यज्ञस्य देवम्
ऋत्विजम् होतारम् रत्नधातमम् ॥
शं नः देवीः अभीष्टये आपः भवन्तु पीतये
शं यो अभिस्रवन्तु नः ॥

इस वैदिक भाषामें कौन ऐसा पद है जो संस्कृत-का नहीं है। हाँ कुछ बहुत थोड़े ऐसे पद वेदोंमें है जिनका प्रयोग लौकिक संस्कृतमें नहीं होता, जैसे देवासः गृभ्णामि, जभार इत्यादि किन्तु ये केवल लौकिक संस्कृतमें देवाः गृह्णामि, जहार इत्यादिके रूप परिवर्तन मात्र हैं, इनमें प्रकृति प्रत्यय सब संस्कृत के ही हैं। केवल इतने ही से यदि वैदिक भाषा संस्कृत नहीं समझी जाये तब तो तुलसीकृत रामायण और बिहारी सतसईकी भाषा भी हिन्दी नहीं समझी जा सके गी क्योंकि इनकी भाषामें भी हिन्दीके बहुत परि-वर्तित रूप हैं बन्दौं गुरुपदकञ्ज। कछु मारेसि कछु मर्देसि कछुक मिलायेसि धूरि।

अली कली ही ते रम्यौ इत्यादि। अतः संज्ञाओं या क्रियाओंके बहुत थोड़े परिवर्तित रूपोंके कारण भाषामें ही भेद मान लेना विवेकविरुद्ध है।

संस्कृतके कुछ परिवर्तित रूपोंके कारण जिनका प्रयोग केवल वेद ही में है संस्कृतभाषाके दो रूप माने गये हैं, लौकिक संस्कृत और वैदिक संस्कृत वेदोंमें दोनोंके प्रयोग हैं और लोकमें पहलेका ही। इन्हींका निर्देश पतञ्जलिने महाभाष्यमें किया है— केषां शब्दानां लौकिकानां वैदिकानाञ्च। यहाँ पतञ्जलिने केवल शब्दोंमें ही लौकिक वैदिक भेद माना है न कि भाषामें। इस संस्कृतभाषाका चिरकालसे सर्वविध लौकिक व्यवहारमें प्रयोग होनेके कारण ही यास्क, पाणिनि, कात्यायन, पतञ्जलि प्रभृति मुनियोंने इसे भाषा शब्दसे निर्दिष्ट किया है और इसके शब्दोंके व्यवहारके सम्बन्धमें लोके, भाषायाम्, ऐसा कहा है। अतः यह सिद्ध है कि विश्वकी सर्वप्राचीन भाषा संस्कृत ही है, लाखों वर्षोंसे इस देशमें इसका प्रचलन है, पाली प्राकृत प्रभृति सभी भाषाएं इसीसे उत्पन्न हैं। इसीके शब्दोंका अशक्ति अशिक्षा प्रभृति कार-

णोंसे विकृत उच्चारण होकर बहुत पीछे इन भाषाओंकी सृष्टि हुई और आधुनिक हिन्दीका सीधा सम्बन्ध उसी आदिभाषासे है जिसका सप्रमाण प्रतिपादन इस लेखके आदिमें कर दिया गया है। आधुनिक हिन्दीके निर्माताओंने भारतकी सर्वदेशिक एकता को ध्यानमें रखकर संस्कृतगर्भित हिन्दीका ही विकास किया है। कारण है कि विद्वान् लोग राष्ट्रभाषा हिन्दीकी प्रौढ़ता तथा सर्वाङ्गपूर्णताकेलिये संस्कृत व्याकरण का अवलोकन अनिवार्य बताते हैं। अब स्पष्ट है कि प्राकृत शब्दका मूल प्रकृति शब्द यहाँ कारण अर्थमें है और वह कारण संस्कृत ही है, अतः प्रकृतेः संस्कृतात् जातम् प्राकृतम् इस व्युत्पत्तिके अनुसार प्रकृति अर्थात् कारणरूप संस्कृतसे उत्पन्न होनेके कारण ही इस भाषाका नाम प्राकृत हुआ।

प्राकृत भाषाके आचार्य हेमने "प्रकृतिः संस्कृतम् तत् आगतम् प्राकृतम्" ऐसा लिखकर इस तथ्यको स्पष्ट कर दिया है, और वररुचिने भी अपने प्राकृतप्रकाशमें "शौरसेनी प्रकृतिः संस्कृतम्, मागधी; प्रकृतिः शौरसेनी, पैशाची-प्रकृतिः शौरसेनी" इन सूत्रों द्वारा संस्कृतसे शौरसेनी और शौरसेनीसे मागधी तथा पैशाचीकी उत्पत्ति बताई है। भर्तृहरिने भी अपने वाक्यपदीयमें इसी तथ्यका स्पष्टीकरण करते हुए लिखा है "दैवीवाग् व्यवकीर्णेयमशक्तैरभिधातृभिः" अर्थात् यही दैवी वाणी यथावत् उच्चारण करनेमें असमर्थ वक्ताओं द्वारा विभिन्न रूपमें अवकीर्ण हुई। प्राकृत व्याकरणके निर्माता आचार्योंने संस्कृत शब्दोंसे ही प्राकृतके शब्दोंका निर्वचन किया है। यदि प्राकृत भाषाका संस्कार करके संस्कृत बनी होती तो अवश्य ही किसी ऐसे व्याकरणका पता होता जिसमें प्राकृतके शब्दोंसे संस्कृत शब्दोंका निर्वचन मिलता किन्तु ऐसा भूमंडलमें कहीं भी नहीं है।

"यास्कके समय संस्कृत नहीं थी अनेक भाषाएँ प्रचलित थीं यह कथन अविचार पूर्ण एवं नितान्त हास्यास्पद है। यदि उस समय संस्कृत नहीं थी तो यास्कने अपना निरुक्त किस भाषामें रचा? उस निरुक्तकी "समाम्नायः समाम्नातः स व्याख्यातव्यः। भावप्रधानमाख्यातम् सत्त्वप्रधानानि नामानि" यह भाषा संस्कृत नहीं तो क्या है? गोः अश्वः पुरुषः हस्ती दुहिता अपत्यम् इत्यादि पद क्या संस्कृतके नहीं हैं जिनका निर्वचन यास्कने किया है।

"समान एवं हि शब्दो लोके मन्त्रेषु च" इस वचन से यास्कने वेदकी भाषाको संस्कृतसे भिन्न नहीं माना है, वेदमें केवल इतनी ही विशेषता दिखाई है कि "वेदेषु प्रयोग नियमो न लोके" अर्थात् वेदोंमें प्रयोग का नियम है "अग्निमीडे पुरोहितम्" यह वाक्य इसी आनुपूर्वीसे उच्चारित होगा इसमें उलटफेर नहीं हो सकता किन्तु लोकमें अग्निम् ईडे पुरोहितम्के स्थानपर ईडे पुरोहितम् अग्निम् अथवा पुरोहितम् अग्निम् ईडे ऐसा भी कहा जा सकता है। यास्कने अपने सैकड़ों वर्ष पूर्वके औपमन्य च औदुम्बरायण शाकटायन गार्ग्य प्रभृति आचार्योंका संस्कृत शब्दोंके निर्वचनकर्ताके रूपमें स्मरण करके अपनेसे बहुत पूर्वकालमें भी संस्कृत भाषाका सार्वदेशिक अविच्छिन्न प्रचलन सिद्धकर दिया है, किंबहुना यदि यास्कसे सहस्रों वर्ष पूर्वसे ही संस्कृतका प्रचलन नहीं रहता तो संस्कृत शब्दोंकी व्युत्पत्ति बतानेवाले एकसे एक प्रौढ सर्वांग पूर्ण व्याकरणशास्त्र उनसे पूर्व कहाँसे होते जिनका परिशिष्ट अपने निरुक्त को यास्कने "तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यम्" इस वचनसे बतलाया है।

संस्कृतके पक्षमें इन स्पष्ट एवम् अकाट्य प्रमाणोंके रहते हुए भी यास्कके समय संस्कृत नहीं थी ऐसा

कहना अनुचित साहसमात्र नहीं तो क्या है ? यास्कको बुद्धका समकालीन मानना भी पूरी अनभिज्ञताका परिचायक एवम् अन्योंका अन्धानुकरण है। वैदिक सम्प्रदायके प्रवर्तकोंमें यास्कका नाम शतपथब्राह्मणमें "भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्क" इस प्रकार और बृहदारण्यकमें "आसुरायणाच्चयास्काच्च सुरायण" इस प्रकार आया है और इन वैदिक ग्रन्थोंका पूर्णतः प्रचलन बुद्धसे सहस्रों वर्ष पूर्व था यह ऐतिहासिक प्रमाणोंसे सिद्ध है। वेदोंका काल मैकडोनल्डके मतमें ईस्वी सन्से पूर्व १५०० वर्ष और जाकोबी के मतमें ४०० वर्ष ( ई० पू० ) है। अनुसन्धानशील विदेशी विद्वान् अर्वाचीनताके विरुद्ध प्राचीनतामें पुष्ट प्रमाण जब-तक नहीं पालेंगे तबतक प्राचीनताकी ओर नहीं बढ़ सकते, अतः पूर्वमतकी अपेक्षा अन्तम मत ही तबतकके लिये मान्य है जबतक कि इससे भी अधिक प्राचीनताका प्रमाण उन्हें नहीं मिलता। यदि ब्राह्मण ग्रन्थोंको वेदके अन्तर्गत कुछ लोगोंके भ्रान्त मतानुसार नहीं भी माना जाय और इनकी रचना वेदोंके पश्चात् मानी जाय तो भी भाषाकी दृष्टिसे वेदोंके प्रादुर्भावसे कुछ ही सौ वर्ष पश्चात् ब्राह्मणोंका प्रादुर्भाव सिद्ध होगा। इन ब्राह्मणोंमें यास्कका उल्लेख होनेसे बुद्धकी अपेक्षा इस ऋषिकी अत्यधिक प्राचीनता सिद्ध है क्योंकि बुद्धका समय अनेक विद्वानोंके मतसे ४७६ ई० पू० ही माना गया है। इन निश्चित प्रमाणों से वाजपेयीजी द्वारा उद्धृत गोल्डस्टुकरका मत पूर्णतः परास्त है और उन पुष्ट प्रमाणोंपर दृष्टि न देकर इस परास्त मतके अनुसार यास्कको बुद्धका समकालीन कहना अनुचित है। वेदोंके समयके सम्बन्धमें विदेशियोंके मतोंकी चर्चा मैंने वाजपेयीजी जैसे वैदेशिक मतोंके सन्तोषार्थ ही की है, वस्तुतः वेद अपौरुषेय हैं और ब्राह्मण भी वेदके ही अन्तर्गत है।

"यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥"

वाल्मीकीय रामायणके इस श्लोकसे यह सिद्ध है कि "संस्कृत शब्दका भाषाके लिये सर्वप्रथम प्रयोग यहाँ ही हुआ है उस समय संस्कृत द्विजातियोंकी भाषा थी, इनके सिवा अन्यलोग अन्यभाषाएँ प्राकृत बोलते थे" वास्तविकतासे अत्यन्त दूर है। उस प्रसंग को ठीक ठीक नहीं समझने तथा पौर्वापर्यका समन्वय नहीं करनेके कारण ही बहुत लोगोंकी यह धारणा बन गई है। वस्तुतः उसी प्रसंगसे उक्त भ्रान्त धारणा के विपरीत यह सिद्ध है कि उस समय प्राकृत नहीं ही थी। मनुष्यमात्रकी भाषा संस्कृत ही थी। रावणद्वारा अपहृत सीताको खोजते हुए हनुमान् लंकामें जाकर अत्यन्त दुःखमय अवस्थामें उसे देखते हैं और कैसे इससे बातें करूं इसी तर्क वितर्कमें पड़कर सोचते हैं—

अहं ह्यतितनुश्चैव वानरश्च विशेषतः
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्
रावणं मन्यमाना मां सीता भीता भविष्यति

अर्थात् मैं बहुत छोटा और विशेषतः वानर हूं और यहाँ मनुष्यकी संस्कृत वाणी बोलूंगा, किन्तु उस मानवी संस्कृत वाणीको यदि द्विजातिके समान उच्चारित करूंगा तो मुझे रावण समझकर सीता डर जायगी। यहाँ इह, मानुषीम् और द्विजातिरिव इन पदोंपर, विशेषतः इह और इव पदोंपर पूर्ण ध्यान देना चाहिये। वानरके मुखसे मनुष्यकी संस्कृत वाणी, उसपर भी द्विजातिके समान उसका उच्चारण सीताके भयभीत होनेके यही कारण हैं। वह सोचती है कि रावण ही तो वानरके रूपसे मुझे धोखा देने नहीं आ गया। रावणके कामरूपी होनेसे उसका वानर रूपमें

वहाँ आना असम्भव नहीं अपितु सम्भव था, इसीसे हनूमान् आगे कहते हैं—

जानाना माँ विशालाक्षी रावणं कामरूपिणम् ॥

इससे सिद्ध है कि उस समय मनुष्यकी वाणी संस्कृत ही थी और द्विजातिलोग अपने स्वाभाविक संस्कारवश उसीका कुछ विशेष शुद्धताके साथ परिमार्जित रूपमें उच्चारण करते थे। पुनः आगे हनुमान सोचते हैं—

अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत्।
मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ॥

अर्थात् अवश्य मुझे अर्थयुक्त मनुष्यकी वाणी ही बोलनी होगी, अन्यथा मैं इसे सान्त्वना नहीं दे सकता।

सेयमालोक्य मे रूपं जानकी भाषितं तथा।
रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासमुपैष्यति ॥

अर्थात् राक्षसों द्वारा पूर्वसे ही डरायी गयी यह सीता, मेरा यह रूप और इस प्रकारकी मानुषी वाणी देख-सुनकर पुनः अधिक डर जायगी। इन प्रसंगोंमें संस्कृतके लिये, मानुषीमिह संस्कृताम्, मानुषं वाक्यमर्थवत्, इस प्रकार वारम्वार मानुषी और मानुषविशेषणोंका आना संस्कृतका जनसाधारणकी भाषा होना ही सिद्ध करता है और सीताके डरनेका कारण वानरके मुखसे मनुष्यकी वाणी ही है, और यह भी स्पष्ट है कि उस जनभाषाका संस्कृत विशेषण वानर जैसे पशुओंकी अपेक्षा मनुष्योंके व्यक्त, स्पष्ट स्वर व्यञ्जनवाले, अर्थयुक्त, बोधगम्य, विविक्त उच्चारणके कारण ही है न कि प्राकृतसे संस्कार किये जानेके कारण फलतः संस्कृत शब्द वहाँ भाषाकी संज्ञाके रूपमें नहीं आया है किन्तु वाचमूके विशेषणके रूपमें प्रयुक्त है।

उस समय यदि संस्कृतसे अन्य प्राकृत नामकी कोई भाषा होती तो हनुमान अवश्य ही उसके भी द्वारा सीतासे बातें करनेको सोचते किन्तु ऐसा कहीं नहीं है। पुनः किस प्रकार यह मेरी बातें सुने और डरे भी नहीं इस समस्याका समाधान हनुमान्ने इस प्रकार किया कि मैं मधुर स्वरसे भगवान् रामका गुणगान ही इस प्रकार करूं कि यह मुझपर विश्वास करे, स्पष्ट है कि हनुमानने संस्कृतमें ही उससे बातें इसी ढंगसे करके समस्याका समाधान कर लिया।

अतः हनुमान्ने किस भाषामें बातें की, तमिलमें बातेंकी तो क्या सीता तमिल जानती थी? इत्यादि वाजपेयीजीकी परेशानियाँ व्यर्थ हैं। उस समय तो हिमालयसे लंका तककी जनभाषा संस्कृत ही थी, तामिलका नाम भी नहीं था, यह तो संस्कृतसे ही बहुत पीछे अन्यभाषाओंके समान ही निकली। संस्कृत संसार भरकी आदि भाषा है। इसमें अब सन्देह ही क्या है? वाल्मीकीय रामायणकी रचना ईस्वीसन्से २०० वर्ष पूर्व हुई, यह बिलकुल अप्रामाणिक बात है। रामायणमें वर्णित उत्तर भारतके कोसल, अंग, कान्यकुब्ज, मगध, मिथिला प्रभृति अनेक राज्योंकी स्थिति बुद्धकालमें नहीं थी किन्तु उससे सहस्रों वर्ष पूर्व थी। रामायणकी बहुत सी बातें बुद्ध साहित्य एवम् बुद्धके वचनोंमें मिलती है किन्तु बुद्धकी चर्चा रामायणमें कहीं भी नहीं हैं। रामायणमें वर्णित मिथिला और विशाली गणतन्त्रका उल्लेख मिलता है। इस प्रकारके कितने प्रमाण हैं जिनके आधारपर बुद्धसे बहुत पहले रामायणकी रचना सिद्ध होती है, और बुद्धका काल ईस्वी सन् से ६०० वर्ष पूर्व जब ऐतिहासिकों, द्वारा सिद्ध किया जाता है, तब

रामायणकी रचना ईस्वी-सन् से २०० वर्ष पूर्व मानना नितान्त असंगत नहीं तो क्या है।

संस्कृत सबकी प्रकृति भाषा हैं और पाली-प्रकृत तथा हिन्दी ये उसकी विकृत भाषाएँ हैं। विकृत-भाषाएँ अपनी प्रकृति भाषाका सब कुछ ग्रहण नहीं करतीं, बहुत अंश छोड़ भी देती हैं यह भाषाविज्ञानियों को सुविदित है, अतः हिन्दी ने प्रकृतके समान हो यदि संस्कृतके द्विवचन प्रयोग छोड़ दिये हैं तो इतने ही से यह संस्कृतसे सम्बन्ध सर्वथा तोड़कर प्रकृतके निकट चली गई यह भ्रान्त कल्पना है, जब कि हिंदीने सहस्रों संस्कृतके शब्द अपनाये हैं और उनके प्राकृत शब्दोंसे यह कोई सम्बन्ध नहीं रखती।

सच्ची बात तो यह है कि हिन्दीमें प्राकृतके बहुतसे नियम और प्रयोग नहीं मिलते। उनके स्थानपर संस्कृतके ही नियम और प्रयोग व्यवहृत होते हैं अतः यह प्राकृतसे बहुत दूर और संस्कृतके ही अति निकट है, जैसे संस्कृतका सम्प्रदान हिन्दीमें है प्राकृतमें नहीं, संस्कृतके सन्धि नियम हिन्दीमें व्यवहृत हैं प्राकृतमें नहीं, संस्कृतके समान ही हिन्दीमें हलन्त शब्द होते हैं प्राकृतमें नहीं। ऋलृ विसर्ग और प्लुतका उच्चारण प्राकृतमें नहीं होता हिन्दीमें भी नहीं होता ऐसा अन्धे बहरे भी नहीं कह सकते, किन्तु संस्कृतके समान हिन्दीमें भी इनके उच्चारण है। जैसे कृष्ण, वृद्धि, अमृत, पुनः प्रातःकाल, अन्तःकरण इत्यादि। यदि किसीका नाम क्लृप्तशिख रखें तो लृ का भी उच्चारण हिन्दीमें होगा ही, संस्कृतमें भी तो इसका प्रयोग केवल इसी शब्दमें हैं, हिन्दी वर्णमालामें लृ, लिया ही गया है। रोने गाने और चिल्लानेमें प्लुतका उच्चारण हिन्दीमें भी सर्वत्र होता ही है। हिन्दी व्याकरणवालोंने स्वरके भेदोंमें प्लुत नहीं गिना तो यह उनकी त्रुटि है। ये प्रमाण और भी हिन्दीको संस्कृतके निकट और प्राकृतसे दूर कर देते हैं।

ए और ओ का ह्रस्व उच्चारण वैदिक संस्कृतमें भी होता ही है जिसको भाष्यकारने अर्ध एकार और अर्ध ओकार कहा है।

अब रही बात सर्वनामके रूपोंकी, इनमें भी हिन्दी के हम तुम संस्कृतके अहम् त्वम्के अधिक निकट है नकि प्राकृतके अम्हे तुम्हे। बहुत थोड़े तैं मैं तुझे तुम्हें इत्यादि पद यदि प्राकृतके तए मए तुज्झे तुम्हें इत्यादि पदोंसे मिलते हैं तो ये पद भी संस्कृतसे ही प्राकृतमें आये हैं। इसके लिये प्राकृतप्रकाश प्रभृति ग्रन्थोंकी प्रक्रियापर दृष्टि डालें। इनके अतिरिक्त हिन्दीके बहुतसे सर्वनाम शब्दोंके रूप संस्कृतके निकट और प्राकृतसे बहुत दूर हैं। उनपर दृष्टि डालनेसे हिन्दी संस्कृतके निकट क्यों न माना जाय। हिन्दीके सब, सब, सबकी, द्वितीय, तीन, जिसको, कौन, इनको इत्यादि सर्वनामोंके रूप संस्कृतके सर्व, सर्वकीय, द्वितीय, त्रीन् या त्रीणि यकम, कानि, एनकौ या एनकान इत्यादिसे मिलते हैं या प्राकृतके सव्वी सव्वस्स, दुवेदो, तिण्णि, जं, काई, एश्र, या एद से? हिन्दीकी विभक्तियोंके, ने, को, से, का के, की, में पर इन चिन्होंका सम्बन्ध किसी प्राकृतसे नहीं है इस पर भी लोग हिन्दीको प्राकृतसे निकली बतलाते है वे भारी अज्ञानमें पड़े हुए हैं।

———

# Story of Nishada

1. In olden times their lived a Bhil (an outcaste) strong in build, who took positive delight in cruelty and lived by killing animals and by theft. So cruel was he that he was named Rurudruha (the killer of animals). Never from his very infancy was he found guilty of committing a single good deed. His whole nature revolted against virtue, just as the nature of the spotless is repelled by sin.

2. Bhil Rurudruha grew up in cruelty to a good old age. Then his fortune smiled on him. The festival of Sivaratri came. He knew nothing about it and cared less. His parents and his wife told him, "We have nothing to eat. Bring us food, you man of the jungle." Immediately he started with bow and arrows to kill deer. But his fortune proved too strong for him. The whole day long, he roamed through the jungle bent only on killing but he could not get none to kill. The day wore on and the Sun set in the west. The Bhil was disconsolate and cursed the day which stood in the way of his plunging in sin. He then thought to himself "Deer must come to the river ghat for drink. Let me be in hiding." And he got a Bel tree that stood by.

3. Under the Bel tree was a Sivalinga. He did not know it and would not care the least if he did. But contact with Siva and his favourite Bel tree was thus established in spite of himself and brought a happy revolutiou against his own cruel and hideous nature.

4. In the first prahar of night, a she deer driven by thirst ran towards the ghat with rapid leaps and bounds. Seeing her, the Bhil drew his bow with intent to shoot. The Bel tree was wet and in drawing the bow he shed water bel leaves down on the Sivaliuga below. Thus was the Sivapuja of the first prahar performed by the Bhil unwittingly and uuwillingly.

5. Seeing the Bhil with drawn bow, the deer asked. "What are you going to do, Oh ! animal killer." "I meant to kill you and to satisfy the hunger of my family" was the cruel and quick reply. The deer was delighted and said 'My stars are favourable. Oh ! with this earthy and transient body I shall be able to serve others and to earn the virtue of doing good to others—a virtue, the glory of which cannot be described even in a hundred years. But I have got my little children at home. I shall make them over to my sister and my husband and come back as soon as possible.

6. The cruel lying and sinful Bhil could speak the truth when in danger much less a deer and said "Everyone from the highest to the meanest tells a lie when in a strait." The deer replied—"Truth is the highest of the highest. The whole world turns on truth as pivot. The Devas live by truth and even the sea cannot overrun its shore for the sake of truth. I never tell a lie. You cant realise it because of your vile nature, as you are an animal killer."

7. The cantact with the Saintly and truthful deer and unwitting performance of the Sivapuja of the first prahar began silently to transform the Bhil's nature and this lying sinful villain could not inspite of himself and not withstanding the full growth of his personality, dismiss the deer's words altogether.

8. 'Hear, Oh! liar you animal killer' continued the deer 'if I do not come back let my head be visited with the hideous sins of a Brahman who sells the Vedas and does not perform his Sandhya (सन्ध्या) of a wife who does not obey her husband, of a wretch who is guilty of ingratitude, of a man who falls off from the Dharma (धर्म्म) of his birth and of a man who does not think of his Maker.'

9. The Bhil's cruel and lying nature was finally over-come and as he kept the first prahar awake the Sivaratri Puja of the first prahar was duly performed in spite of himself.

10. As the deer failed to return home her sister went in search of her and at last came to Ghat. The Bhil saw her and as before drew her bow and dropped water and bel leaves on the Sivalinga below and Sivapuja of the second prahar was performed

11. The second deer like her sister promised to come back and said 'I know that a person who does not keep his word only once, loses all his previous virtues and the Earth trembles under the weight of the sin. If I do not come back I shall be visited with the sin of one who transgressess the Shastras at the dictates of his fancy, of a devotee of a Vishnu who speaks ill of Siva and of a giver who regrets his gift.' She too was allowed to go and as the Bhil kept awake the whole of the second prahar, the puja of the second prahar was duey performed.

12. Then came the husband, a very fat deer who was more than enough to appease the hunger of a whole family. The Bhil drew his bow a third time and with dropping of bel leaves and water on the Sivalinga, the puja of the third prahar was done. The deer wanted time to make over his children to the mother and came back. The Bhil said This is the third time I am being put off by lies."

13. Oh, animal-killer !' said the deer 'no falsehood can in me exist. A single falsehood burns up all existing virtues. If I do not keep my words, let me be

visited with the sin of a false witness, of a betrayer of trust, of one who does not do good to others even though he is able to do so and of one who takes forbidden food.' Go and come back at once' said the Bhil and the deer went away after allaying his thirst.

14. The deer, his wife, and his sister-in-law all met at home. All were anxious to go to lay down their lives and to redeem their plighted word. The first deer pleaded to her husband, 'How will the young ones live without you? Besides I, was the first to give my word and my right to lay down my life must be recognised as foremost.' 'I am your younger sister' broke in the second deer 'and as humble servant of both, I must have the prior right to go and serve you and to keep my word. The deer shook his wise and truthful head 'Wo' said he 'I must go, I have given him my word and can't recast because 'one or both of you are going to keep your word.'

15. As they could not agree, all the three started for the place where the Bhil was, proving that beasts have an indefinitely greater regard for truth than men. The young ones followed their parents, wishing to share their lot.

16. The fourth prahar was now on. The Bhil saw a family of deer approach and drew his bow for the fourth time. As before bel leaves and water were dropped on the Sivalinga and the performance of Sivapuja in the fourth prahar burnt up his sins.

17. The deer, his wife and his sister in-law all eagerly said "Oh you the best of animal killers kill us immediately, so that with our transient bodies we may earn the good fortune of doing good to others.

18. Contact with the Bel tree over-hanging the Sivalinga, with the noble-deers and Sivapuja, all did their work silently, swiftly and surely. The whole past history of this vile and vicious life flashed across the mind of Bhil and stung with real remorse he thought to himself.

19. Praise be to the deers who are beasts but who are infinitely better than man I have been born as man and the gates of Baikuntha have been flung open to me.

यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् ।
गृहेषु खतवत सक्तस्तमारुढ-च्युतं विदुः ॥

But what I have done? All my life I have killed anmals under the pressure of maintaining a family. What will be my fate? Whither will my hideous sins lead me? Really am I a devil in human shape."

20. Putting the arrow in his quiver the Bhil said "Go all of you, Oh noble deers." No sooner had he said this, than Siva appeared. At His sight, all his human foibles, were gone. The Bhil became a real Siva.

जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ।
तुषेण बद्धो ब्रीहिः स्यात् तुषाभावेन तण्डुलः ॥

A Jibanmukta (one who is freed in this life from the bonds of Sansar) he fell at Siva's Holy feet, which even the best of Yogis cannot see, Siva then showered His choicest blessings on the Bhil.

21. "Oh you animal killer, henceforth your name will be Guha. You will find a dynasty of Chandal kings and enjoy all the blessings, this life is capable of. You will have undying Bhakti (attachment to and adoration of God) Ramchandra will come to your house. By worshipping Him with the greatest Bhakti you will attain salvation."

22. The whole deer family saw Siva with their own eyes, by reason of their unswerving fidelity to truth and all were freed from worldly bondage. Thenceforth the Sivalinga is known as व्याधेश्वर शिव ( Byadheswara Siva ) of अर्बुदाचल Arbud Hills).

23. Contact is Karma and Karma is contact : As a person progresses from vice to virtue, vice unable to take its stand in the open, seeks shelter in hiding and the person appears to be free from vice. With further progress the persons appear to be fault-less. When the time comes for rooting the vice out, it is forced to come out into the open and be exterminated and the person appears to be a hideous sinner. Such was असमञ्जस ( Asamonjas ), अजामिल ( Ajamil ) विल्वमङ्गल (Bilwamangal), तुलसीदास ( Tulsidas ) घाटम ( Ghatam ) real saints in the garb of sinners, who have reached the last stage of development. The form, the character assumes in the first stage takes its shape and hue from the nature of the sin that lies hid and ensconced to the innermost recesses of the heart.

24. Bhil Rurudruha was a man of great virtue in his previous birth. Unable to curb his cruelty, he was thus born as an outcaste where his cruelty could have full play. When the moment arrived for destroying his cruelty and giving scope to his virtues. Sivaratri day come and contact with the Beltree and with the noble and truthful deer was established. Then with the incalculable virtue of performing the Sivaratri festival, his sins were destroyed and he became a sinless man. He was then known as Guhak Chandal, who took Ramchandra across the Ganges, in his boat, to Bharadwaj Asram at Prayag Raj ( the present Allahabad or the abode of Allash and who attained salvation by his undying Bhakti at Ramchandra's holy feet.

25. By contact with truth and mercy and by the performance of the Sivaratri festival, the inner nature of the vicious Bhil was purified and he was accosted by the deer as the best of animal killer in outward appearance. He was then blessed by Siva named Guha and undying bhakti was given him. Even then he continued to be a chandal and was not taken into the caste though by unswerving and ceaseless devotion to Sree Ramchandra's feet, he finally attained salvation." (TRUTH)

# श्रीभारतधर्म-महामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशित पुस्तकानि

## श्रीस्वामि दयानन्द महाराजद्वारा रचितानि—

| | | | |
|---|---|---|---|
| १—धर्मकल्पद्रुम प्र० ख० | २) | ३४—उपदेशपारिजात | ॥) |
| २—धर्मकल्पद्रुम द्वि० ख० | १॥) | ३५—कल्किपुराण | १॥) |
| ३—धर्मकल्पद्रुम तृ० ख० | २) | ३६—पातञ्जलयोगदर्शन | ३) |
| ४—धर्मकल्पद्रुम च० ख० | २) | ३७—महामंडल रहस्य | १॥) |
| ५—धर्मकल्पद्रुम प० ख० | २) | ३८—मन्त्रयोगसंहिता | १) |
| ६—धर्मकल्पद्रुम ष० ख० | ३॥) | ३९—हठयोगसंहिता | ॥) |
| ७—धर्मकल्पद्रुम स० ख० | २) | ४०—तत्त्वबोध | =) |
| ८—धर्मकल्पद्रुम अ० ख० | ३॥) | ४१—स्तोत्र कुसुमाञ्जलि | ।) |
| ९—धर्मकल्पद्रुम, प्रथम द्वितीय खण्ड एक साथ रायल एडी० | ५) | ४२—भगवद्गीता प्रथम खंड | १) |
| १०—प्रवीण दृष्टिमें नवीन भारत प्र० ख० | २) | ४३—विष्णुगीता | १) |
| ११—प्रवीण दृष्टिमें नवीन भारत द्वि० ख० | २) | ४४—सूर्यगीता | ॥) |
| १२—नवीन दृष्टिमें प्रवीण भारत | १) | ४५—शक्तिगीता | १) |
| १३—साधनचन्द्रिका | १॥।) | ४६—धीशगीता | ॥।) |
| १४—शाक्तचन्द्रिका | १।) | ४७—शंभुगीता | १) |
| १५—धर्मचन्द्रिका | १) | ४८—संन्यासगीता | १) |
| १६—आर्यगौरव | ॥) | ४९—गुरुगीता | ।) |
| १७—नीतिचन्द्रिका | ।) | ५०—कर्ममीमांसादर्शन प्र० ख० | १॥) |
| १८—धर्मप्रश्नोत्तरी | ।) | ५१—कर्ममीमांसादर्शन द्वि० ख० | २) |
| १९—चतुर्दशलोक रहस्य | ।) | ५२—कर्ममीमांसादर्शन तृ० ख० | ५) |
| २०—गीतार्थचन्द्रिका सजिल्द ३) अजिल्द | २॥) | ५३—कर्ममीमांसादर्शन ( संस्कृत ) | २) |
| २१—सनातनधर्मदीपिका | ॥।) | ५४—रामगीता | २॥) |
| २२—धर्मविज्ञान प्र० ख० | ५) | ५५—कहावत रत्नाकर साधा० राय० | १०) |
| २३—धर्मविज्ञान द्वि० ख० | ४) | ५६—रामायण तुलसीकृत | १॥) |
| २४—धर्मविज्ञान तृ० ख० | ४) | ५७—दैवीमीमांसादर्शन प्र० भा० | ३॥) |
| २५—सती चरित्रचन्द्रिका | २) | ५८—दैवीमीमांसादर्शन द्वि० भा० | ५) |
| २६—नित्यकर्म चन्द्रिका | ।) | ५९—त्रिवेदी सन्ध्या | ।=) |
| २७—धर्मसोपान | ।) | ६०—गोमल तीर्थमहिमा | ॥) |
| २८—धर्मकर्म-दीपिका | ।) | ६१—मार्कण्डेय पुराण प्र० ख० | १) |
| २९—सदाचार सोपान | -) | ६२—मार्कण्डेय पुराण द्वि० ख० | १) |
| ३०—कन्याशिक्षा सोपान | -) | ६३—मार्कण्डेय पुराण तृ० ख० | १) |
| ३१—ब्रह्मचर्य सोपान | ।) | ६४—ऋजुपाणिनीयम् | ॥।) |
| ३२—साधन सोपान | ॥) | ६५—संगीत सुधाकर | ।) |
| ३३—शाक्त सोपान | ।) | ६६—पुराणरहस्य | १॥) |
| | | ६७—संन्यासधर्मपद्धति | १॥) |

सम्पादक-प्रकाशक—अमरेशप्रसादशर्मा, श्रीभारतधर्ममहामण्डल, जगतगंज, वाराणसी कैंट।
मुद्रक:—श्रीपरेशनाथ घोष, सरला प्रेस, बनारस–१.





# सूर्योदयः

( श्रीभारतधर्ममहामण्डलस्य त्रैभाषिकं त्रैमासिकञ्च मुखपत्रम् )

( वार्षिकं मूल्यम् अग्रिमं मुद्रात्रयम् )

## सदुपदेशाः

धर्मः शर्म परत्रेह च नृणां धर्मोऽन्धकारे रविः,
सर्वापत्तिशमक्षमः सुमनसां धर्माभिधानो निधिः।
धर्मो बन्धुरबान्धवः पृथुपथे धर्मः सुहृन्निश्चलः,
संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्मात्परः॥ १॥

धर्मो दुःखदवानलस्य जलदः सौख्यैकचिन्तामणिः,
धर्मः शोकमहोरगस्य गरुडो धर्मो विपत्त्रायकः।
धर्मः प्रौढ़पदप्रदर्शनपदुर्धर्मोऽद्वितीयः सखा,
धर्मो जन्मजरामृतिक्षयकरो धर्मो हि मोक्षप्रदः॥ २॥

ते धत्तूरतरुं वपन्ति भवने प्रोन्मूल्य कल्पद्रुमं,
चिन्तारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः।
विक्रीय द्विरदं गिरीन्द्रसदृशं क्रीड़न्ति ते रासभं,
ये लब्धं परिहृत्य धर्ममधमा धावन्ति भोगाशया॥ ३॥

चला विभूतिर्ननु जीवितं चलं, विनश्वरं यौवनमप्यकालतः।
इदं शरीरं बहुरोगमन्दिरं, विमृश्य चैवं कुरु धर्ममन्वहम्॥ ४॥

## संगृहीत-समाचाराः ।

रसियायां भारतराष्ट्रपतिः, संस्कृतभाषया स्वागतम् । भारत-राष्ट्रपतिना डा० राजेन्द्रप्रसादमहोदयेन मास्को नगरस्थं प्राच्यविद्याधाम जूनमासस्य २४ दिनाङ्के प्रत्यक्षीकृतम् । तस्मिन् अवसरे प्रा० ह्लादिमीरकालिनोव-महोदयेन संस्कृतभाषया तेभ्यः स्वागतं व्याहृत्य रूसीयस्य संस्कृताध्ययनस्य इतिहासः सारतः निवेदितः । अस्मिन्नेव समये षट्सु खण्डेषु विभक्तः संस्कृत-रूसीयः शब्दकोषोऽपि राष्ट्रपतये समर्पितः । अन्योन्य-सम्बन्ध-प्रस्थापनार्थं परस्परसांस्कृतिकसम्पतेः परिशीलनं विहाय नास्ति उपायानन्तरम् इत्यवोचन् डा० राजेन्द्रप्रसाद-महोदयाः ।

## वाराणसेय-संस्कृतविश्वविद्यालयस्य नूतनः उपकुलगुरुः के.ए.एस. अय्यर महोदयः

लखनऊ विश्वविद्यालयस्य भूतपूर्वः उपकुलगुरुः श्री के० ए० एस० अय्यरमहोदयः वाराणसेय-संस्कृत-विश्वविद्यालयस्य उपकुलगुरुत्वेन वर्षत्रयार्थं नियुक्तोऽस्ति ।

प्राच्यविद्यायाः अध्ययने अधिकतर-समययापने प्रभवितुं तैः लखनऊ विश्वविद्यालयस्य उपकुलगुरुपदं त्रिभ्यः मासेभ्यः प्राक् परित्यक्तमासीत् । अधुना नूतनमिदं पदं प्रादेशिकशासनस्य आग्रहवशात् तैः स्वीकृतमस्ति ।

## संस्कृतविद्यामन्दिरम् ।

मुम्बई—संस्कृतविद्यामन्दिरस्य चतुर्थः वार्षिकः समारोहः श्रीशारदात्यागीमहोदय्याः आध्यक्ष्ये समपद्यत, तस्य प्रास्ताविकं भाषणं स्वामी व्रजानन्द सरस्वतीभिः कृतम् ।

## संस्कृतमण्डलस्य संमिलनम् ।

पुण्यपत्तने—भारतशासनेन नियुक्तस्य संस्कृतमण्डलस्य संमिलनं पुण्यपत्तने अस्मिन्मासे (११ जुलाई) संम्पत्स्यते । महाराष्ट्रादिकैः दाक्षिणात्यैः सह संपर्कस्थापनोद्देशेन इदं संमिलनम्-अत्र संकल्पितमस्ति इति श्रूयते ।

## संस्कृतम्-उत्तर-दक्षिणबन्धः ।

सिकन्दराबाद—उत्तर-दक्षिणयोः अन्योन्यबन्धेषु संस्कृतं प्रधानबन्धोऽस्ति । अतः सर्वैरपि प्रयत्नैः तस्य संरक्षणम् अवश्यं कर्तव्यम् इति अवोचत् सेन्ट्रल कौंसिल आफ संस्कृत-एज्युकेशनसंस्थया कृतस्वागतावसरे लोकसभाध्यक्षः श्री अनन्तशयनम् अय्यंगारमहोदयः ।

अलवाल इत्यत्र वर्तमानं संस्कृतकालेज भारतीय-शासनद्वारा अचिरमेव पारम्परिके संस्कृतविश्व-विद्यालये परिणमयिष्यते । यदर्थं केन्द्रीयः शिक्षामन्त्री जुलाई-मासस्य अन्तिमे सप्ताहे महाविद्यालयम् साक्षात् करिष्यति इति प्रकटीकृतं श्री अय्यंगारमहोदयैः ।

## दरभङ्गानरेश-ग्रन्थसंग्रहः ।

दरभङ्गाधिपैः महाराजाधिराजैः श्री कामेश्वर सिंहमहोदयैः निजपितृ-पैतामहः ग्रन्थसंग्रहः सप्रासादः समर्पितोऽस्ति संस्कृतविश्वविद्यालयाय ।

अस्मिन् प्रसङ्गे ते अवोचन्—महेशठाकुर इत्याख्यो मम पूर्वजः संस्कृतपण्डितः आसीत् । तस्य च संस्कृतपाण्डित्यं पूजयितुं अकबरः तस्मै 'तिरहुत' इत्यस्य स्थानस्य भूस्वामित्वं समर्पयामास । अस्ति अस्माकं गृहे संस्कृतग्रन्थानां संरक्षणस्य संवर्धनस्य च कुलपरंपरा । अयमेव ग्रन्थसंग्रहः संस्कृतविश्वविद्यालयस्य मूलाधारतां गच्छतु, अयं च 'लक्ष्मीश्वरविलास' प्रासादः विश्वविद्यालयभवनं भवतु, इत्यस्ति मे अभिलाषः इति ।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य त्रैभाषिकं त्रैमासिकञ्च पत्रम् ।

( वार्षिकं मूल्यम् अग्रिमं मुद्रात्रयम् )

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन् ,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

१६ तमे वर्षे चतुर्थ-पञ्चम-षष्ठ संख्याः ] मेष-वृष-मिथुन-संक्रान्तयः २०१७ वैक्रमाब्दः [ अप्रैल-मई-जून १९६०

## सम्पादकीया अभिप्रायाः

### श्रीमहामण्डलस्य प्रतिनिधिमण्डलम् ।

अप्रेलमासस्य त्रिंशत्तारिकायां प्रातः सार्द्धदश-वादनसमये भारतराजधान्यां देहल्यां राष्ट्रपतिभवने अखिलभारतीय-धर्मसंस्था श्रीभारतधर्ममहामण्डलस्य प्रतिनिधिमण्डलं माननीय राष्ट्रपतिमहोदयस्य सन्निधौ समगच्छत् । प्रतिनिधिमण्डलस्य नेतृत्वं श्रीमता महा-राजाधिराजेन सर कामेश्वर सिंहमहोदयेन के० सी० आई० ई० डी० लिट, इत्यादि विविधोपाधिविभूषितेन दरभंगानरेश्वरेण कृतमासीत् । श्रीमहामण्डलशास्त्र-प्रकाशविभागेन प्रकाशितानि त्रयोदशोत्तरशतं धर्म-ग्रन्थरत्नानि राष्ट्रपतिमहोदयाय समर्पितानि । प्रतिनिधि-मण्डलेन निवेदनपत्रमपि समर्पितम् । यस्य विस्तृत-विवरणमस्मिन्नेवाङ्के प्रकाशितं पाठकैर्निभालितं स्यात् ।

—❀—

### उपदेशक-महाविद्यालयः ।

भारतीयानां मानवानां विशेषत आर्यमर्यादाश्रितानां साम्प्रतं हिन्दुशब्दवाच्यानां धार्मिके जगति शास्त्रेषु च साम्प्रतमपि विद्यते परमादरः । आर्यजातेस्तु मूलाधार एव धर्मो विद्यते । उक्तञ्च केनापि—"धर्मेणैव जगत् सुरक्षितमिदं धर्मो धराधारकः, धर्माद् वस्तु न किञ्चि-दस्ति भुवने धर्माय तस्मै नमः" इत्यादि । अतश्चै-कस्य धर्मस्यैव सर्वथा संरक्षणेन सम्वर्धनेन प्रचारेण च सर्वमेव भारतीयं कल्याणं सुसाधितं स्यात् । तस्य

धर्मस्यादौ ज्ञानं ततस्तस्य पालनं पश्चाच्च प्रचार इति परम्परा साधिता भवति। यथोक्तञ्च चतुर्भिश्च प्रकारैः विद्या उपयुक्ता भवति। आगमकालेन, स्वाध्यायकालेन प्रवचनकालेन, व्यवहारकालेनेति। श्रीहर्षेणापि एवमेवोक्तम्—अधीतिबोधाचरणप्रचारणैः दशाश्चतस्रः प्रणयन्नुपाधिभिः, इत्यादि भावनया सर्वत्र जनसमाजे धर्मप्रचारकामनया धर्मोपदेशक-महोपदेशकत्वशिक्षाप्रदानार्थमिह वाराणस्याम्-उपदेशकमहाविद्यालयस्य प्रतिष्ठापनमभूत्। पूर्वं यस्य प्रधानाध्यक्षाः श्रीमन्तः सर्वमान्या व्याख्यातारः स्वर्गीयाः श्री स्वामि दयानन्द-महाराजा आसन्। यत्र शिक्षिता धर्मप्रचारका विद्वांसो भारतस्य प्रतिप्रान्तं धर्मप्रचारमकुर्वन् कुर्वन्ति च। अस्मिन् महाविद्यालये साम्प्रतं प्रतिदिनं नियमत उपदेशोचितविषयक-धर्मग्रन्थानां पाठनं भवति। शास्त्रि, आचार्य-परीक्षोत्तीर्णाः, बी. ए. एम. ए. उपाधिधारिणोऽपि सुयोग्या व्याख्याननिपुणाः छात्राः प्रवेशं लभन्ते। तेभ्यो मासिकछात्रवृत्तिरूपेण साहाय्यमपि दीयते। अधुना धर्मोपदेशशिक्षार्थं महान् सुसमयः समुपस्थितो विद्यते। सम्प्रतिसंस्कृताध्येतॄणां छात्राणामिदमुचितं कर्तव्यं यत् ते देशकालं पश्यन्तः स्वीयां पठनपद्धतिं परिवर्त्य धर्मोपदेशशिक्षां नूनं गृह्णीयुः। इदानीं केवलं परीक्षापद्धत्या पठनेन परीक्षोत्तरणमात्रेण नास्ति किमपि फलम्।

सम्प्रति व्यापकपाण्डित्यस्यैव प्रयोजनं विद्यते। लोका अपि बहुश्रुतानेव पण्डितान् समाद्रियन्ते। प्राचीनकालेऽपि चतुरस्रपाण्डित्यस्यैव समादरणमासीत्, यथा कालिदासादयो महाकवयोऽभूवन्। सम्प्रत्येव शतार्द्धवर्षतः एकदेशीयज्ञानं परीक्षाप्रणाल्या प्रचलितं दृश्यते। यच्च दर्शं दर्शं राष्ट्रचिन्तकाः कथयन्ति यत् साम्प्रतिका देशकालात्मानभिज्ञा इतिहासज्ञानशून्याः कियन्तश्छात्राः परीक्षाजालपतिताः स्वयमन्यानपि तत्रैव पातयितुमिच्छन्तीति। अतश्च वर्तमानसमये वाराणसेयसंस्कृत-विश्वविद्यालयसंचालितपरीक्षाप्रणाल्या व्यापकं पाण्डित्यं समुपार्जयन्तः छात्रा भारतधर्ममहामण्डलीयोपदेशक-महाविद्यालयेऽपि नामोल्लेखपूर्वकं व्याख्यानकलाशिक्षणेनात्मानं सार्थकयन्तु इत्यस्माकं सत्परामर्शः।



## संस्कृतविद्यापीठपरीक्षा।

हायनेऽस्मिन् धार्मिकाध्यात्मिक-संस्कृत-विद्यापीठस्य सर्वाः परीक्षाः मईमासस्य चतुर्दशदिवसत आरभ्य अष्टादशतारिकापर्यन्तं सुसम्पन्नाः भारतस्य विभिन्नप्रान्तेषु। इयं धार्मिकी परीक्षा भारतीय-संस्कृतिसंरक्षणार्थं, धर्मप्रचारार्थं मानवानां कल्याणार्थमेव संचाल्यते। साम्प्रतं धर्मशिक्षाविरहितेन शिक्षाप्रदानेन कीदृशो महान् बुद्धिभ्रंशो दृश्यते, इति नाप्रत्यक्षम् तद्विदाम्। आधुनिकी पाश्चात्यशिक्षाप्रणाली भारतीयं प्राचीनं गुरुशिष्यसम्बन्धं विलोपयति, विद्याध्ययनशीलोऽपि विद्यार्थी विनयान्वितो न भवति, परीक्षायामनुत्तीर्णश्च छात्रः स्वगुरुमेव प्रहरति, अनया प्रचलितशिक्षासरण्या भारतीयमानवानां प्रायो नैतिकं पतनमेव जायते। अत एव धर्मशिक्षाप्रचाराय विद्यापीठपरीक्षेयं संचालिता इति।



## स्वर्गीय श्रीभूदेवमुखोपाध्यायः।

बंगप्रान्तीये परमपुनीते मुखोपाध्यायवंशे माननीय-श्रीभूदेवमुखोपाध्यायमहाशयः सी० आई० ई० जन्म जग्राह। तदानीं अयं महानुभावः बंगविहारोत्कल-प्रान्तस्य सर्वोच्चशिक्षाधिकारी (डायरेक्टर) आसीत्। परमपितृभक्तोऽयं स्वोपार्जितेन धनेन स्वपितुः नाम्ना 'श्रीविश्वनाथ ट्रस्टं' स्थापितवान्। अनेन ट्रस्टकोशेन विशेषतो बंगप्रान्ते काश्यामपि संस्कृताध्यापकेभ्यो विद्यार्थिभ्यश्च वृत्ति र्दीयते। ट्रस्टद्वारा वृत्तिप्रदानेन संस्कृतभाषाप्रचारे महत् साहाय्यं भवति। एतस्य महोदयस्य सुयोग्यतमेन तनयेन धर्मसुधाकर-राय-बहादुरोपाधिविभूषितेन श्रीयुत मुकुन्ददेवमुखोपाध्यायेन-स्वपितुः स्मृतिस्वरूपं 'श्री भूदेवट्रस्ट' कोशः स्थापितः। उक्त ट्रस्टद्वयं साम्प्रतं बंगप्रान्ते हुगलीमण्डले चिन्सुरा-नगरे स्थापितं सुसंचालितं च वर्तते। प्रतिवर्षं संस्कृत-प्रचारकार्ये विविधैः प्रकारैः साहाय्यं प्रदीयते। वर्तमान-समये उक्तट्रस्टद्वयस्य संचालकः श्रीयुतभृगुदेव-मुखोपाध्यायमहाशयः (वाइस प्रेसिडेण्ट) सुचारु-रूपेण ट्रस्टकार्यं सम्पादयति। चिन्सुरानगरे ट्रस्ट-संचालित-विद्यालयः-वाचनालयः छात्रालयश्च विद्यन्ते। दैनंदिनं अस्य समुन्नतिः स्यादिति श्रीभगवन्तं काशीपुरपतिं विश्वनाथं प्रार्थयामहे।

मान्यवर-भारतराष्ट्रपति-

## डाक्टर श्रीराजेन्द्रप्रसादमहोदयानां सदुदारचरितानां शुभप्रशस्तिः।

यो दिग्दिगन्तपरिकीर्त्तितकीर्तिपुञ्जः सद्भावमूर्तिरनुरञ्जितलोकचित्तः।
प्राणप्रकाश इव भारतदेवतायाः श्रीमान् प्रसाद इति राष्ट्रपतिः स जीयात्॥ १॥

यो निस्तरङ्गजलधेरनुयाति रङ्गं भङ्गं न गच्छति दशान्तरसङ्गतोऽपि।
स्वातन्त्र्यसङ्गरधुरन्धर! भारतस्य राजेन्द्र! सुन्दरयशा जय जीव स त्वम्॥ २॥

विद्याचरित्रबलसंबलसाधुवृत्त्या हिंसां विधूय बुध! सिद्धिसुधां गतोऽसि।
दिष्ट्याद्य राष्ट्रपतियोग्यपदाधिरूढः स्वाधीनभारतधरां समलङ्करोषि॥ ३॥

धर्मानुरागनवपल्लववल्लभानां विद्यालता-विनयपर्णविभूषणानाम्।
उत्साहकोरकवतां विबुधद्रुमाणामेकस्त्वमेव रविरश्मिरसारसात्मा॥ ४॥

स्वातन्त्र्योज्ज्वलभारतेऽपि सुजनाः सन्तापमायान्त्यहो!
धर्मः सीदति नीतिरस्तमयते शिक्षागतिर्व्याहता।
दृष्टिं राष्ट्रपते! विधेहि शुभदां सृष्टिं विधातुं पुन-
र्लोके शीतलपक्ष्मशीलचरितां लोकप्रकाशप्रदाम्॥ ५॥

भारतधर्ममहामण्डलपक्षतः

पश्चिमवङ्गान्तर्गतभट्टपल्लीय-पण्डित श्रीजीवन्यायतीर्थ-
एम० ए० महामहाध्यापकै रुपकल्पिता।

# किं संस्कृतं प्राकृतात्समुत्पन्नम् ?

( ले०—पं० श्रीकृष्णमणि त्रिपाठी व्याकरण-साहित्य-सांख्ययोग-पुराणेतिहासाचार्यः, एम० ए० सरस्वतीभवन, वा० सं० वि० वि० वाराणसी )

—:※:—

संस्कृतं हि समस्तवाङ्मयापेक्षयाऽतिप्राचीनं विशालं सर्वोत्कृष्टं सर्वाङ्गपूर्णं साक्षात्परम्परया सर्वभाषोपयोगि च वर्तते। संस्कृतस्य प्राचीन-ग्रन्थरत्नानां तुलनात्मकमध्ययनं विधायैव पाश्चात्यशिक्षाशास्त्रिभिः भारतीयवाङ्मयविषये किमपि लिखितुं प्रवृत्तम्। पाश्चात्यैः विपश्चिद्भिः यत् किमपि लिखितं तदाधुनिक-भाषाविज्ञानकल्पनया पाश्चात्यदृष्ट्या पक्षपातपूर्णेन हृदयेन च लिखितम्। तत्र न केवलं भारतीयपरम्पराया उपेक्षा कृता अपितु तामश्रद्धेयां साधयितुमपि भागीरथः प्रयासो विहितः। कतिपयैः भारतीयै विद्वद्भिरपि यत् किमपि उटङ्कितं तत्पाश्चात्यविपश्चितामनुकरणमात्रमेव। पदलोलुपतापारतन्त्र्यपाशबद्धानामियमेव भवति दशा। अतः स्वातन्त्र्यसौभाग्यसम्पन्ने भारते परम्परानुसारं भारतीयविचारधारया यथार्थेतिहासादिलेखनस्यास्ति महती आवश्यकता।

भारतीयानां विपश्चितां मते यावन्ति ज्ञानानि जातानि, जायन्ते, यास्यन्ति च तेषां समेषां मूलमपौरुषेयो भगवान् वेद एवास्ति। तत एव सर्वे लोकव्यवहाराः; प्राक्तना इतिहासाः, आवश्यका धर्माः, दर्शनानां सिद्धान्ताः, आध्यात्मिका विचाराः, गूढतमानि विज्ञानानि च प्रादुर्भवन्ति। तथा चाह कृष्णद्वैपायनो मुनिः—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥
( महाभारत शान्तिपर्व २३१।५६ )

भगवान् मनुरपि एतदेव समर्थयति—

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥

विदितचरमेवास्ति समेषां विपश्चितां यद् देववाण्या अपरं नामास्ति संस्कृतम्। पूर्वं देववाणी अव्याकृता ( प्रकृतिप्रत्ययविभागरहिता ) आसीत्, अस्या उपदेशः प्रतिपदपाठद्वारा भवतिस्म। तत्र श्रमसाध्यत्वं समयाधिक्यञ्चावलोक्य देवा लघीयसा श्रमेण अल्पीयसि समये सरलया प्रक्रियया शब्दज्ञानाय परमं शाब्दिकं देवराजमिन्द्रमभ्युपेत्य प्रार्थयामासुः। तदनु तेन प्रकृतिप्रत्ययधातूपसर्गादिपूर्वकं शब्दोपदेशस्य सुगमां प्रक्रियां निर्माय देववाणी संस्कृता। अत एव प्रकृतिप्रत्ययधातूपसर्गादिविभागाद्यसंस्कारैः संस्कृतत्वाद् देववाणी संस्कृतमित्युच्यते। तथा चोक्तं तैत्तिरीयसंहितायाम्—

"वाग्वै पराच्यव्याकृतावदत्। ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्वीति"' तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्।" ( ६।३।७ )। सायणोऽपि ऋग्वेदभाष्योपोद्घाते—"तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत्।" दण्डिनापि काव्यादर्शे—"संस्कृतं नाम दैवी वाग् अन्वाख्याता महात्मभिः" ( १।३।३ )। शिक्षाप्रकाशे च "संस्कृते प्रकृतिप्रत्ययादिविभागैः संस्कारमापादिते।" इत्यादि।

एतेन प्राकृतात्संस्कृतं समुत्पन्नमिति आधुनिकभाषा-शास्त्रिणां सिद्धान्तः सर्वथाऽप्रामाणिकः। संस्कृत-

प्राकृततुलनया स्पष्टं प्रतीयते यत् संस्कृतस्योच्चारण-मितिक्लिष्टं प्राकृतस्योच्चारणं तु संस्कृतापेक्षया सरलम्। किञ्च संस्कृतं संश्लेषणात्मकं प्राकृतं हि विश्लेषणात्मकम्। नहि विश्वस्मिन् सुगमोच्चारण-सम्पन्ना विश्लेषणात्मिका च कापि भाषा क्लिष्टोच्चा-रणत्वेन संश्लेषणात्मकत्वेन च विपरिणमते, अपि तु क्लिष्टोच्चारणा संश्लेषणात्मिका च भाषैव सरलो-च्चारणतां विश्लेषणात्मकत्वञ्चापेक्षते। अतः सुगमो-च्चारणविश्लेषणात्मक-प्राकृतभाषातः क्लिष्टोच्चारण-संश्लेषणात्मक-संस्कृतभाषायाः, प्रादुर्भावो न सम्भवति किन्तु क्लिष्टोच्चारण संश्लेषणात्मक संस्कृतभाषात एव सुगमोच्चारणं विश्लेषणात्मकञ्च प्राकृतमेव प्रादुर्भवितु-मर्हति। अत एवोक्तं भरतेन नाट्यशास्त्रे—

एतदेव विपर्यस्तं संस्कारगुणवर्जितम्।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम्॥

अत एव प्राकृतं संस्कृतस्य विकृतिरित्युच्यते बुधैः। व्युत्पत्तिश्चास्य प्रकृतिः संस्कृतं ततः प्रादुर्भूतं प्राकृतं तस्मात् संस्कृतं प्राकृतात्प्राचीनं प्राकृतजनकञ्चेति स्वी-कारे न कापि विप्रतिपत्तिः भवितुमर्हति।

---

# समस्यापूर्तिः—

( ले०—पं० सन्तदासः श्रीवैष्णवः व्याकरणसाहित्याचार्यः साहित्यरत्नम् एम० ए० )
उपदेशकमहाविद्यालय, काशी।

—❀—

[ रसचन्द्रशून्यपक्षसम्वतसरे ( २०१६ ) माघमासे सप्तम्यां श्रीरामानन्दजयन्तीमहोत्सवे रजतपदकेन पुरस्कृता इमे श्लोका विराट् कविसम्मेलने— ]

दुःखाभिमग्नान् विबुधान् पृथिव्यां
सम्वारयन् दुःखगतेश्च लोकान्।
सौख्यं ददत् सर्वजनेभ्य एष-
तं लोकनाथं हृदयेन वन्दे॥ १॥

गतिर्न यत्रास्ति गुरोश्च राज्ञः
श्रीसज्जनानां न सतां च काचित्।
तत्रापि गन्ता प्रचुरप्रभाव-
स्तं लोकमौलिं मनसा हि वन्दे॥ २॥

त्यागे प्रसिद्धा यतयः पृथिव्यां
ये सर्वलोकेषु सुरादयश्च।
तान् मेलयन् भावगतेः प्रसादाद्
योऽयं स लोके यतिराजराजः॥ ३॥

लोकान् वचोभिर्विमलीकृतात्मा
प्रक्षेपयन् भावमखण्डभावम्।
सञ्चारयन् सिद्धिकरं मनोभिः
सोऽयं महेशो यतिराजराजः॥ ४॥

बन्धून् समस्तान् भुवने जनौघान्
सम्मानयन् दिव्यविमुग्धभावः।
कर्तव्यसन्दर्शन-शोभितात्मा
धार्यो हृदा यो यतिराजराजः॥ ५॥

मनोरमः सुन्दर-सङ्गशोभनः
सदैव गन्ता विबुधेश्वरो यदा।
मुधैव सर्वं खलु दर्शयन् मुदे
विराजमानो भविता जगद्गुरुः॥ ६॥

समर्पयन् सर्वमखण्डसञ्चयम्
विराजमानं विबुधेषु रञ्जनः ।
करोति लोकं हृदयंगमं यदा
तदैव सोऽयं ववृत्ते जगद्गुरुः ॥ ७ ॥

सतां विभूतिं पतितां निबन्धने
सुधारयन् पुण्यचये प्रदर्शकः ।
जनेषु सम्बन्धितया मनोरमो
विभावितात्मा भविता जगद्गुरुः ॥८॥

लोकैर्मान्यस्त्रिलोक्यां यः सर्वभावैः प्रसादकः ।
एवं श्रोच्यो महानात्मा तमेव शरणं भजे ॥ ९ ॥

गुणैरिन्द्रो यथा देवान् नागः सर्पगणान् यथा ।
मनुष्यान् भूपपतिर्लोके तथा मान्यं हृदा भजे ॥१०॥

सतां पूज्यः सुरैर्मान्यो नागैर्दृश्यो यथा मुदे ।
तथा सर्वमनुष्येषु मान्यं तं प्रचुरं भजे ॥११॥

पृथिव्यां विप्राणां विबुधजनदेवेषु महितां
सदा लब्ध्वा लोके सुरगुरुसतां पूज्यवचनः ।
गरीयान् भावो यो भवति मुखवाह्यो धूरिजनै-
रतो लोकैः सोऽयं भवति भूवि वा पूज्यचरणः ॥१२॥

प्रभेदैर्भेदौघान् कथयति जनानां स पुरतः
समस्तान् लोकौघान् विबुधनरनागान् सुरचयन् ।
पवित्रैर्भावोघैः कथयति सुभावं हृदि गतं
स एवास्मिन् लोके भवति हृदि वा पूज्यचरणः ॥१३॥

सतां पन्था विघ्नैर्व्यथितसमभागो निदद्दशे
सदा सर्वैर्दूरे कृत-जनसमूहैर्विमलितः ।
प्रसादैः साध्योऽयं विबुधजनचित्ते च ववृत्ते
सुगन्ता सर्वोऽयं भवति भुवि वा पूज्यचरणः ॥१४॥

---

# विद्यार्थिनां कर्तव्यम् ।

ले०—कश्चनसंस्कृतप्रणयी ।

"सा विद्या या विमुक्तये" तस्या एवार्थी विद्यार्थी, अथवा मनोमालिन्योन्मूलनं, नितान्तनिर्मलस्वान्तःकरणं अज्ञानान्धकारनिवारणं, जगत्प्रकाशकरणञ्च भवति यया सा विद्या, तस्या अर्थी; उत लौकिकज्ञानमात्रमेवार्जनार्थी विद्यार्थी। तत्र पूर्वोक्तेषु लक्षणेषु एकमपि लक्षणं न युक्तियुक्तम् । अतश्च साधु लक्षणमुच्यते ।

"धर्मार्थकाममोक्षाणां प्राप्तिर्भवति यया सा विद्या", तस्या एवार्थी विद्यार्थी । अत्र प्रश्नः को धर्म इति । धर्मलक्षणमुच्यते—

"यतोभ्युदयनिःश्रेयससिद्धिः स धर्मः"

येन धर्मेण सकलस्य जगतः कल्याणं भवेत् मोक्षप्राप्तिश्च स धर्मः । अनेनैव धर्मेण लोककल्याणं सम्पद्यते, परलोकप्राप्तिश्च संगच्छते । "धर्मादर्थः ततः कामः" इति स्मृत्या धर्मादर्थकामौ सिद्धौ भवतः । धर्मात् मोक्षप्राप्तिरपि जायते । अतः जीवनोद्देश्यभूतेषु धर्मार्थ-

काममोक्षेषु प्रवृत्ति-पूर्वकं पूर्णतां प्रापयति या सा विद्या, तस्या एवार्थी विद्यार्थी। तेषां कर्तव्यमुच्यते—

स्वोत्तरदायित्वस्य निर्वाहः क्रियते येन तत् कर्तव्यमुच्यते। एतत्कर्तव्यं बहु प्रकारकम्। स्वस्वसंस्कृतिं समाजं प्रति कर्तव्यम्, देशोन्नत्यै प्रयतितव्यम्, अशिक्षिताः शिक्षया समुद्धर्तव्याः, यथासाध्यमनाथ-उपकर्तव्यः, स्वदेशसाहित्यं सम्वर्धितव्यम्, सन्मार्गे गमनीयम्, गुरुः वन्दनीयः, धर्मोऽनुसरणीयः। वेदाः रक्षणीयाः शास्त्रं एधनीयम्, पुराणप्रसारणीयमित्यादिकस्य कर्तव्यस्योत्तरदायित्वं साधुतया निर्वाह्यते यदा तदा विद्यार्थिनां कर्तव्यमिति युक्तियुक्तं साफल्यं संगच्छते। एतद्विपरीतं अरण्यरोदनतुल्यमेव ज्ञातव्यमिति।

साम्प्रतिकायां विंशतितमायांशताब्द्यां सर्वत्र विकाशस्य प्रसारणा दृश्यते। वैज्ञानिकोऽयं कालः, प्रगतिशीलाः मनुष्याः सन्ति। तत्र पाश्चात्य-शिक्षा-दीक्षिताः एवं पाश्चात्यसभ्यतामनुसरन्तश्छात्राः ये केचित् सन्ति ते वैज्ञानिकीं सरणीमनुसृत्य प्रगतिं गच्छन्ति। किन्तु भारतीय शिक्षा-दीक्षिताः एवं भारतीय-संस्कृति-सभ्यतामनुसरन्तश्छात्रा ये केचित् सन्ति ते तथा विकाशशालिनः प्रगतिशालिनश्च न भवन्ति। अतः अस्मिन् विकाशयुगे भारतीय शिक्षादीक्षितानां विद्यार्थिनां सर्वोत्कृष्टतमं कर्तव्यं यत् ते प्रगतिशालिनो भवन्तु; विकसन्तु विकाशयन्तु समाजमभिवर्धन्तामिति।

छात्राणां विशिष्टं कर्तव्यमस्माभिरुटङ्क्यते, सर्वासु भाषासु संस्कृतभाषा प्राचीनतमा दृश्यते। अस्यां विद्यमानस्य सर्वोत्कृष्टसाहित्यस्य महत्त्वं सर्वस्मिन्देशे सर्वैः स्वीक्रियते। किन्तु यथा आङ्गलीयाः आङ्गलभाषां मातृभाषावत् ब्रुवन्ति तथैव संस्कृतज्ञाः संस्कृतभाषां मातृभाषावत् नैव ब्रुवन्ति। तत्रास्ति कारणम्। यत् आङ्गलीयाः आङ्गलभाषां आङ्गलमाध्यमेनैव पाठयन्ति। संस्कृतज्ञाः संस्कृतभाषां संस्कृतमाध्यमेन नैव पाठयन्ति, अपितु हिन्दीमाध्यमेनैव पाठयन्ति। शास्त्रिकक्षायां आचार्यकक्षायामपि हिन्दीभाषया छात्राः पाठ्यन्ते। तेषां संस्कृतसंस्कारः नश्यति तेषु संस्कृतभाषणशक्तिस्तथा न प्रवर्धते यथा अपेक्ष्यते। अतो हि भविष्णवश्छात्रा एतद्दूषणं दूरीकर्तुं शक्नुवन्ति। ते प्रतिज्ञायन्तां यत् "अद्यारभ्य संस्कृतज्ञैः, सह सर्वदा संस्कृतं परस्परं ब्रूमः। संस्कृतभाषयां भाषणं कुर्मः।

छात्राः परिषद्निर्माणं कुर्वन्तु। यस्यां परिषदि एकत्रीभूय किमप्युद्दिश्य वा विषयमवलम्ब्य सरलया संस्कृतभाषया उपदेशं कुर्वन्तु कारयन्तु च। तत्र संस्कृतविकाशविषयिणी समस्या उपस्थापिता भवतु। सर्वैः स्वस्वमतानुसारेण समाधेया भवतु सा समस्या। अनेन प्रकारेण सर्वे छात्राः भाषणपटवः प्रगतिशीलाश्च भविष्यन्ति।

—❀—

## विशिष्ट संस्कृतपाठशालापरिचयः

# श्री चेन्नकेशवस्वामी संस्कृतपाठशाला ।

हैदराबाद ( आन्ध्र प्रदेशः ) ।

[ अत्र अधस्तादेकस्याः संस्कृतपाठशालायाः परिचयः प्रकाश्यते। अतीते सितम्बरमासे दक्षिण-भारतयात्राप्रसङ्गेन हैदराबादनगरं गतवता मया एषा पाठशाला स्वयमपि अवलोकिता। इयं पाठशाला हरिजनबालकानां कृते सञ्चालिता वर्तते इति अधस्तनेन लेखेन पाठकानां विदितं स्यात्। परन्तु तेषां बालकानां वैशिष्ट्यं तत्र गत्वैव द्रष्टुं शक्यते। अत्रत्याः सर्वेऽपि हरिजनाविद्यार्थिनो वैष्णवं वेषं धारयन्ति वैष्णवांश्च आचारान् पालयन्ति। श्रीविष्णुसहस्रनामस्तोत्रपाठपुरस्सरमेते प्रातरध्ययनं प्रारभन्ते। एतेषां पठनं, लेखनं, श्लोकोच्चारणशैली, प्रतिपदार्थज्ञानं संस्कृतानुवादक्षमता चेति सर्वमपि अत्यन्तं विस्मयावहं दृश्यते। अनया दृष्ट्या एते बहून् उत्तरभारतीयब्राह्मणबालकानपि अतिशेरते इति निःशङ्कं वक्तुं शक्यते। अत एव तस्याः पाठशालायाः परिचयो बहूनां संस्कृतज्ञानां कृते प्रमोदावहः उत्साहवर्धकश्च स्यादिति मया निवेद्यते। केन्द्रीय-संस्कृतविद्यासमिति-सञ्चालकैः श्री एन० सौन्दरराजन् एयङ्गर महोदयैर्लेखोऽयं प्रेषितः। इमे एव महोदया अस्याः पाठशालायाः संस्थापकाः पोषकाः संरक्षकाश्च वर्तन्ते। एतल्लेखकस्य लेखकाः पण्डितमहोदया अपि अध्यापनकुशला उत्साहसम्पन्नाश्च।

प्रत्यक्षदर्शी—वासुदेवद्विवेदी, वेदशास्त्री, साहित्याचार्यः ]

वाराणसी।

पाठशालैषा हैदराबाद, केंद्रराष्ट्रसंस्थाधीना हैदराबादनगरे हरिजनोद्धारणार्थं प्रतिष्ठापिता विराजते। एतस्यां पाठशालायां त्रिंशदधिकाः हरिजनविद्यार्थिनः गैर्वाणीं वाणीमधीयते। एते इदानीं साहित्यमात्रं पठन्ति। आगामिसंवत्सरात् इमे तर्क, व्याकृति, मीमांसा, आदिशास्त्राण्यपि पठेयुः। यद्यपि इमे गीर्वाणभाषाध्येतृविप्रकुले नोद्भूवन् तथापि एतेषां संस्कृतभाषोच्चारणं साङ्गवेदाध्येतृश्रोत्रियच्छात्रवद्भिभासत इत्ययं विषयः सर्वेषां महान्तमानन्दं जनयेदेव। इमे सात्विकाहारमेव भुञ्जते। यदा तदा पर्यवेक्षका अपि गत्वा भोजनादिवसतिं पश्यन्ति। सर्वाण्यपि सौकर्याणि एतेषां परिकल्पितानि वर्तन्ते। इयमेव पाठशाला हरिजनविद्याभ्यासार्थं अस्मिन्हैदराबादनगरे प्रथमं प्रारब्धा विराजते। यदा तदा राज्याधिकारिणो मंत्रिणश्च आगत्य इमां पश्यन्ति स्तुवन्ति च। चतुर्षु दक्षिण-प्रांतेषु हरिजनार्थं आरब्धा पाठशाला एतां विना न कापि दरीदृश्यते। "नित्यश्रीर्नित्यमङ्गलम्" "अध्येतारश्च वृद्धियुक्ता यथा स्युः" इत्युक्तरीत्या एते विद्याविनयादिसंपन्ना विराजेरन्सदेति करुणार्द्रहृदयैः (भाग्यनगर) हैदराबादनगरस्थ केंद्रराष्ट्रसंस्कृत-समितिकार्यदर्शिभिः श्रीमद्भिः M. सौंदरराजन् महोदयैः प्रारब्धा इयं आचंद्रार्कं विजयतेतमां इति भगवन्तं श्रीमन्नारायणं प्रार्थयामहे।

—को० न० वरदराजन्

व्याकरणपण्डितः।

प्रतिष्ठेति नवमी स्थितिः। अवतारवादे विभूतितत्त्वे च विश्वास इति दशमः प्रकारः। उपासनाकृत्ये योगधर्मे च श्रद्धाप्रतिष्ठेति एकादशो भावः। मूर्तिपूजायां पीठरहस्ये च विश्वासाधानमिति द्वादशं सोपानम्। शुद्धाशुद्धविवेके स्पृश्यास्पृश्यविचारे चास्थाकरणम् इति त्रयोदशी सृतिः। यज्ञेषु महायज्ञेषु च विश्वासः इति चतुर्दशः प्रकारः। सगुणनिर्गुणेश्वरतत्त्वे विश्वासः, अर्थात् परमात्मा सर्वशक्तिमान् अस्ति- अतश्च स निराकारो निर्गुणोऽपि सन् भक्तहितार्थं साकारं सगुणञ्च रूपं बिभर्ति इति पञ्चदशी पद्धतिः। षोडशश्च मुक्तितत्त्वे विश्वासः। तथाहि परस्या भक्तेरात्मज्ञानस्य चाधिकारिण उन्नता महापुरुषा मुक्तिमधिगम्य गतागतचक्रतो विमुक्ताः श्रीमता भगवता सहैव सालोक्य-सामीप्य-सायुज्य-सारोप्यादिपदभाजो भूत्वा अपुनरावर्तनाय तत्रैव तस्यां दशायां वर्तमानाः "न स पुनरावर्तते। इत्यादि श्रुतिषु श्रद्धातिरेकं दधति इति षोडशी श्रेणिः, इत्येवं षोडशसिद्धान्तसंग्रहः। इमानेव षोडशसिद्धान्तान् स्वीकुर्वती सनातनधर्मावलम्बिनी वर्णाश्रमपालिका आर्य्यजातिः निरन्तरमैहलौकिकाभ्युदयमासादयन्तो निःश्रेयसपदं प्रतिष्ठत इति। वर्णाश्रमधर्मावलम्बिनो आर्य्यजातिरुपरि लिखितेभ्यो विशेषधर्मेभ्योऽप्यतिरिक्ते धर्मस्यापि भेदद्वयं स्वीकुर्वती असाधारणधर्मं आपद्धर्म इति संज्ञां, विदधाति, अनयोर्धर्मयोः पालनं साधारणावस्थायां नैव भवति। तत्र योऽसाधारणोऽस्ति असाधारणावस्थायामेव तस्य पालनं कर्तुं पार्यते, तल्लक्षणन्तु येन धर्मबलेन साधकः पूर्वजन्मार्जिततीव्रसंस्कारकारणादाहास्विदिहैव जन्मनि समुपार्जितायाः प्रबलायाः तपस्यायाः प्रभावबलात् ईदृशीमपूर्वां दैवीशक्तिमासादयति, यत् प्रारब्धकर्मवशतोऽधर्मं कुर्वन्नपि स्वधर्मरक्षायां तत्परोऽवतिष्ठते। यथा देवी द्रौपदी पञ्चानां भ्रातॄणां भार्य्या भूत्वापि स्वसतीत्वरक्षणं स्वतपोबलेनैव कुर्वती पतिभिः सह निर्द्धारितान् नियमान् पालयन्ती तदनुसारिणा स्वमनोबलेन प्रतिवर्षं पतिधारणायामद्भुतं परिवर्तनं करोतिस्म।

यथा च महर्षिविश्वामित्रः क्षत्रियमातापितृभ्यां गृहीतजन्मापि सन् स्वतपोबलेन योगबलेन च स्वशरीरस्थितान् पार्थिवपरमाणून् विपरिवर्त्य तस्मिन्नेव जन्मनि ब्रह्मर्षितामाजगामेति सर्वजनविदितोऽसाधारणधर्ममहिमा।

आपद्धर्मस्य लक्षणमेतद्विज्ञेयम्। येन धर्मबलेनापत्स्यां अतिघोरायामपि जलाप्लुते राजमार्गेऽपथगमनवद् आपत्तितो मनुष्योऽधर्मेणापि स्वप्राणरक्षां कर्तुं प्रभवेत्। यथा चाक्रायण उषस्तिः स्वप्राणरक्षार्थमिभ्यग्रामस्थितं हस्तिपकं तदीयोच्छिष्टान् कुल्माषान् याचमानः तदीयजलं तिरस्कुर्वन् तैः कुल्माषैः स्वप्राणरक्षां चकार। यथा च स एव महर्षिर्विश्वामित्रो बुभुक्षायां प्रदीप्तायां स्वपचगृहस्थितं श्वमांसं जग्राह चौर्य्येण। यथातिवृद्धस्य रोगार्तस्यापि मनुष्यस्याचारपालनं नावश्यकं कर्तव्यम्। अनयो धर्मयोरवसरः प्रायोऽत्यल्पीयानेवायातीति नानयो धर्मयोः शास्त्रेषु बहुधा कीर्तनं भवति।

यद्यपि बहुत्रानार्य्यजातिष्वपि अस्या आर्यजातेर्वर्णाश्रमधर्मप्रभावाः छायारूपेणावलोक्यन्ते, तथापि तेषु तासां जातीनां नास्ति पूर्णोऽधिकारो नापि च ते धर्मास्तासु जातिषु पूर्णतया विकसिता भवन्ति। रजोवीर्य्यशुद्धिमूलाया आर्यजातेरेव वर्णधर्मे सतीत्वधर्मे च पूर्णोऽधिकारः, अस्यामेव जातौ वर्णधर्मोऽथ सतीत्वधर्मश्च विकसितुमर्हत इति।

पूज्यपादैस्त्रिकालदर्शिभिर्महर्षिभिरित्येवं स्वीयपरमकारुणिकभावनया सनातनधर्मोद्देशैरेतै र्धरामण्डलस्थानां सर्वासामेव मानवजातीनां सर्वेषाञ्च धर्ममार्गाणां तुल्य एवोपकारो विहितः। विशेषतश्चार्य्यजातिषु वर्णाश्रमधर्मं

स्य विस्तृतावशिष्टनियमान् निरूप्य सर्वतोऽपि प्राचीनतराया आर्य्यजातेर्महानुपकारो विहितोऽस्ति । किं बहुना वर्णाश्रमधर्ममर्य्यादयैवेयमार्य्यजातिरद्यापि सत्यपि कठोरेऽनेकस्मिन् विघ्नबाहुल्ये स्वसत्तामक्षुण्णामेव संस्थापयति, स्वगौरवं च रक्षति । स्वीयाभ्युदयमोक्षमार्गावपि प्रशस्यतरौ कृत्वा सर्वमानवजातिपूज्ञतपदमधितिष्ठतीति ।

इत्यस्मादेव हेतोरियमार्य्यजातिर्न कामपि जातिं द्वेष्टि नापि तां विगर्हते महर्षीणामीदृश्येवाज्ञा अस्या आर्य्यजातेः कृते धर्मशास्त्रपुराणादिषु विद्यते । तथाहि—

"धर्मं यो बाधते धर्मो न स धर्मः कुधर्मतत् ।
अविरोधी तु यो धर्मः स धर्मो मुनिपुङ्गव ।"

इत्यादिवचनैर्महर्षीणामौदार्य्यम् सर्वहिताधायकत्वं वर्णाश्रमधर्ममहिमा च स्फुटमेव प्रतीयते ।

## समस्या-पूर्त्तयः

[ वाराणसेय संस्कृत विश्वविद्यालये १-२-५६ दिनाङ्के कविसम्मेलने पठिताः ]

धर्मो वः समुपेक्षितो विघटिता वर्णाश्रमाः शाश्वताः
हन्यन्ते बत भारते सुरभयः ध्वस्तं च पातिव्रतम् ।
देशेऽन्त्यैः सहभोजनं विवहनं प्रायेण संचालितम्
मौनं यान्ति तथापि हन्त ! विबुधा "बाधा न साधारणी" ॥ १ ॥

ये सन्तीश्वरशात्रवः श्रुतिपथाद्भ्रष्टाः सदा शाश्वतात्
स्मृत्युक्तस्य सनातनस्य च सदाचारस्य विध्वंसकाः ।
पोष्यन्तेऽत्र त एव दुष्टमतयो नारेण केनाप्यहो
दीनारांश्च वराटकीकृतवता "बाधा न साधारणी" ॥ २ ॥

नग्नाः स्त्रीपुरुषा द्रुमाश्रयरता दीना बुभुक्षा कृशाः
बालाः क्रन्दनकारिणोऽशनकृते चर्मास्थिशेषं गताः ।
व्याप्ता औदरिकैर्निरन्तरममी मार्गास्तथा वीथयः
नेतारः स्वसुखाभिलाषनिरता "बाधा न साधारणी" ॥ ३ ॥

शुश्रूषा परिवर्ज्यते निजगुरोराज्ञा न वा पाल्यते
मान्यानां समुपेक्ष्यतेऽनुसरणं ब्राह्मव्रतं नाश्यते ।
प्रौढित्वं समुपार्ज्यते न विधिवद् वेदादिशास्त्रोच्चये
छात्रैर्भारतदेशवासिभिरहो ! "बाधा न साधारणी" ॥ ४ ॥

आर्या विश्रुतभारतेऽत्र सकलाः स्थानान्तरादागताः
अत्रत्यास्तु त आदिहिन्दुपदवीख्यातिं गता द्राविडाः ।
इत्यादि - प्रतिपाठशाल - मधुना ह्यैतिह्यविद्याचणैः
शिक्ष्यन्ते बत भारतीयशिशवो "बाधा न साधारणी" ॥ ५ ॥

गोत्रत्वप्रवरत्वयोर्न गणना सापिण्ड्यसाकुल्ययोः
मातुर्वा पितृतोऽपि वा न गणिता या पञ्चमी सप्तमी ।
उद्वाहे च सवर्णता प्रतिहता वध्वा वरस्यापि वा
स्वातन्त्र्यप्रियराजकीयनियमे "बाधा न साधारणी" ॥ ६ ॥

राज्यं शासति रामचन्द्रनृपतौ बाले मृते तत्पिता
राज्ञो दोष इति ब्रुवन्नतितरां रामं निनिन्द स्वयम् ।
अद्यत्वे शिशवोऽपरे प्रतिदिनं लक्षं लभन्ते मृतिं
सर्वानर्थनिदानमाकलयतां "बाधा न साधारणी" ॥ ७ ॥

विद्याभ्यासरतैर्यदा न विहितं सद्ब्रह्मचर्यव्रतं
भृत्यानां भरणं ह्युपेक्षितमहो ! यद् वा गृहस्थाश्रमे ।
संन्यासाश्रमवासिभिः परगृहाण्याहिण्ड्यमानैर्भृशं
स्वाद्वान्नाशनमेव तैर्यदि कृतं "किन्नाम तप्तं तपः" ॥ ८ ॥

अन्योन्यप्रखरप्रचार - विभवादुच्चैः पदं विन्नता
दीने हन्त ! दया त्वया न विहिता नोपार्जितं सद्यशः ।
किं भोः स्वोदरपूर्त्तयेऽतिमहतां श्रीगान्धिनामाज्ञया
कारागारनिवासरूपकठिनं "किं नाम तप्तं तपः" ॥ ९ ॥

जातिर्नो विकृता न वा हरिजनाः संप्रापिता मन्दिरं
अत्यावश्यकतां गतोऽपि विधवोद्वाहो न संचालितः ।
कल्यापेक्षित एककोऽपि विधिवन्नो वा सुधारः कृतः
वोटार्थं करपात्रिसम्मतजनैः "किं नाम तप्तं तपः" ॥ १० ॥

गुरुकुलनिवासो गेहे स्थितिः सह भार्यया
गमनमपि चारण्ये न्यासो यथाविधि कर्मणाम् ।
श्रुतिसुविहितं स्मृत्याज्ञप्तं विधानचतुष्टयम्
हृदयसमनुज्ञातं ह्येतत् "क्रमादमृतायते" ॥ ११ ॥

निजपितृनिदेशात् प्राप्तं मातृकरार्पितमप्यहो !
अतिशयशिशुप्रह्लादेनाशितं स्वयमादरात् ।
न हि किमपि कष्टं प्रादाद्धरेरनुकम्पया
विषमपि परं विष्णोर्भक्ति - "क्रमादमृतायते" ॥ १२ ॥

—विद्यानिधेः पण्डित विन्ध्येश्वरीप्रसाद शास्त्रिणः ।

# मुसलमान-विदुषां संस्कृतवाङ्मय-सेवा।

लेखकः—विद्यासागरः श्री देवीनारायणः ( एडवोकेट )।

त्रिगतेषु एकसहस्रवत्सरेषु फारसीभाषायां मुसलमानविद्वद्भिः संस्कृतवाङ्मयस्यानुसंधाने, सम्पादने, अनूदने, प्रकाशने, चित्रनिर्माणे च अत्यद्भुतं चमत्कारपूर्णं कार्यं कृतम्। नूनं ते भूरि भूरि प्रशंसास्पदाः सन्ति। मुसलमानपादशाहशासकैः प्रचुरतरं धनं व्ययीकृत्य फारसीभाषायां संस्कृतग्रन्थानामनुवादो विहितः। अलंकार-साहित्य-महाभारत-रामायण उपनिषद्-आयुर्वेद-संगीतकला-ज्यौतिष-रमलादिषु विषयेषु अनेके ग्रन्थाः तैः यवनपण्डितैः अनूदिताः निर्मिताश्च।

ज्वालामुखी-स्थितस्य प्रसिद्धसंस्कृतपुस्तकालयस्य अध्ययनं कारयित्वा फिरोजशाह-तुगलकपादशाहेन ( १३५१-१३८८ ई० ) अनेकबहुमूल्यसंस्कृतग्रन्थानां फारसीभाषायामनुवादः कारितः। ज्योतिःशास्त्रस्य "वाराहीसंहिता" नाम्नः प्रसिद्धग्रन्थस्यानुवादः कृतः। सिकन्दरलोदीपादशाहाज्ञया ( १३८८-१५१८ ई० ) आयुर्वेदविषयकग्रन्थानां फारसीभाषानुवादः संजातः। मौलाना इब्नखबासखाँ-महोदयेन आयुर्वेदिकग्रन्थानां फारसीभाषायामनुवादो विहितः।

मोगलपादशाहैरपि संस्कृतसाहित्यस्यानुवादे प्रचारकार्ये च अद्भुतं उत्साहपूर्णञ्च कार्यं कृतम्। अकबरपादशाहस्तु सर्वेषां मोगलशासकानां मूर्धनि तिष्ठति। तेन हि संस्कृतसाहित्य-संगीत-चित्रकलाप्रभृतिषु विषयेषु महत् कार्य्यं कृतम्। तेन सर्वधर्मसमन्वयार्थं "दीन इलाही" धर्मः स्थापितः। तस्य सभायां ( दरबार ) फैज़ीअबुल फज़ल बदायूनी-राजा-टोडरमल-राजा मानसिंह-बीरबलादीनि नवरत्नानि आसन्। कविवरेण फैज़िना काश्यामागत्य संस्कृतसाहित्यस्य अध्ययनं कृतमासीत्।

अकबरसम्राजः सभायां फैज़ी-अबुलफजल-बदायून्यादयः संस्कृतारबीफारसीप्रभृतीनां भाषाणां महान्तो विद्वांसः आसन्। फैज़ीकविः अतिमेधावी, प्रतिभाशाली तथा मार्मिकः कविरभूत्। तेन फारसीभाषायां श्रीमद्-भगवद्गीताया अतिमधुरः सुललितः तथा भक्ति-भावपूर्णः अनुवादो विहितः। उदाहरणार्थं तुलनात्मकोऽनुवादः लिख्यते—

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते॥
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ! लभन्ते युद्धमीदृशम्॥

अथ चेत्त्वमिमं धर्म्यं, संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च, हित्वा पापमवाप्स्यसि॥
अकीर्तिं चापि भूतानि, कथयिष्यन्ति तेऽव्ययाम्।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते॥

फैज़ीकृतानुवाद :—

वकारेकि मामूर हस्ती बकुन
बजंग आवरी चीरा दस्ती बकुन।
तुई छत्रिये बददिली आरतूस्त
दिलेरी ब मैदां सज़ाबार तूस्त॥
शहादत कि म्बुबुद अजां बरतरी।
नसीवे कसे नेस्त जुज छत्तरी॥

अगर कुश्ता गरदी बखुद दस्तजा ।
बगर फतह याबी शवी पादशाह ॥
बमैदाने मरदां कवीदार दिल।
मगर दांरुके खुद किरार्दी खजिल॥
बुवद जिन्दगी चूँ होबाव ऐ पेसर।
हुमां नेकनामी ये खुद दर नजर॥
—( द्वितीयोऽध्यायः )

संन्यासस्य महावाहो, तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश, पृथक् केशिनिपूदन॥
काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥

फैजीकृतानुवाद :—

दिगर गुप्त कै राजदाने जहाँ।
बगो हाल संन्यास वो त्यागई जवां॥
किदारम तमन्ना जे हद वेश्तर।
हमीं सोजदम शौक मफरत जिगर।
बगुफ्ता वकुने तर्क हर आरजू।
पस आंगहः न संन्यास हर्फ बगो॥
कि संन्यास तर्के तमन्ना बुवद।
बयादे खुदा बूदन औला बुवद॥
( अष्टादशोऽध्यायः )

एवं कविवरेण फैजीमहोदयेन नैषधचरितम्—"नलदमन" नामकं महाकाव्यं फारसीभाषायां पद्ये निर्मितम्। तत्तु लोकप्रसिद्धं महाकाव्यं वर्त्तते।

अकबरसम्राज आज्ञया फैजी-अबुलफज्ल-वदायूनी-ऽभृतिसम्पादकमण्डलेन १५८२ ईशवीये महाभारतस्य—"रज्मनामा" नामा सचित्र अनुवादो विहितः। अकबरस्यैवाज्ञया १५८८ ईशाब्दे पञ्चतन्त्रस्य फारसी-भाषानुवादः सचित्रः संजातः। स च अबुलफज्लद्वारा सम्पन्नः। तस्य "अयारदानिश" इति नामासीत्। इतः पूर्वमेव पञ्चतन्त्रस्य "अनवारसुहैली" इति नाम्नानुवादः हुसैन वायज-अलकाशफी-महोदयेन १५१६ ईशवीये शेख अहमद सुहैलीति नाम्नः शासकस्याज्ञया विहितः। "अनवार सुहैली" तु फारसीसाहित्ये प्रसिद्धः प्रचलितश्च ग्रन्थो वर्त्तते। १६०० ईशवीये वर्षे 'हरिवंश-पुराणस्य" सचित्रः फारसीभाषानुवादः अकबरानुरोधेन सम्यग्रूपेण सम्पन्नः।

## फारसी उपनिषदः

औरंगजेबबादशाहस्य ज्येष्ठभ्राता दाराशिकोहो महान् आध्यात्मिकज्ञानपरः सूफीशासकोऽभूत्। औरंगजेबस्तु धर्मान्धो मुसलमानशासक आसीत्। परन्तु तद्विपरीतः शाहजादा दाराशिकोहस्तु प्रपितामह इव स्वनामधन्यः विद्यारसिको महान् उदारचेताः, दार्शनिकः, त्यागी, तत्त्वदर्शी चाभूत्।

दाराशिकोहेन काश्यां पण्डितसंन्यासिमण्डल-साहाय्येन पञ्चाशदुपनिषदामनुवादः १६५६ ईशवीये वत्सरे विहितः। तस्य नामास्ति "सिर अकबर" इति। तेन स्वयं तस्य भूमिकायां लिखितम् -

"चूँदरी अय्याम बुलदये बनारस के दारुल-इलमई कौम अस्त ताल्लुक वा ईहक गुइ दाश्त पण्डितान व संन्यासियान रा के सिरे अमद वक्त व वेद व उपनिखतदां वूदन्द जमा साख्ता खुद आं खुलासये तौहीद राके उपनिखद यानि इसरार पोशी दनी व मुन्तहाय मतलब जमीअ अवलिआए अल्ला अस्त दर सन् एक हजार व शस्त व हफ्त ( १०६७ ) हिजरी वेगरजाना तरजुमा नमूद" इत्यादि।

अर्थात्—

हिन्दूनां प्रधानधर्मस्थाने काश्यामागत्य पण्डितान् संन्यासिगणांश्चाहूय एकत्रीकृत्य सुललित सरलफारसी भाषानुवाद उपनिषदां १०६७ हिजरीवत्सरे मया विहितः।

उदाहरणार्थं किंचिद् द्रष्टव्यम्—

"य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच"

( छान्दोग्य, अ० ८ ख० ७ मन्त्र १ )

"आं आत्मा के ऊरा बदी व पीरी व मर्ग व अन्दोह व आरजूए खुरदन व आशामीदन नेस्त व रास्त इज्म अस्त व हर ख्वाहिशे के मी कुनद मौन्दद मी शवद। आं आतमा रा बायद जुस्त व बायद दानिश्त व आं रा खुद व खुद बायद दानिश्त। हर के आत्माए चुनी बेदानद वर हम मुल्कहा व ख्वाहिशहा जफर मी यावद ईं चुनी गुफ्त परजापत।"

शाहजादा दाराशिकोहस्य उपनिषदनुवादस्येदं महत्त्वं वर्त्तते यत् तेनैवानुवादेन यूरोपादिपाश्चात्यदेशेषु उपनिषदां प्रचारोऽभूत्।

१७७५ ईशवीये "जनरल" नाम्नाफ्रेंचराजदूतेन बरनियरद्वारा पेरानसमीपे प्रेषितः स अनुवादः। पेरान-महोदयः फारसी-लेटिन-अरबीत्येतासां भाषाणां विशेषज्ञ आसीत्। तेनैव जिन्दावस्तायाः अन्वेषणं कृतम्।

—❀—

# षोडशसंस्काराः

—❀—

गर्भः पुंसवनं तथैव कथितं सामन्तकं जातकं,
नामाख्यञ्च विनिष्क्रमं शिशु-हितं चान्नस्य प्राशस्ततः।
चौलं कर्णसुवेधनं द्विजकरं यज्ञोपवीतं श्रुतेः—
प्रारम्भो व्रतनिर्वृत्तिं गृहप्रदां केशान्तकर्म प्रियम्॥
कृत्वाऽग्रे करपीडनं सुखकरं दीक्षादिकं चान्तिमं
वह्नेः संग्रहणं 'द्विजेन्द्र'-विहितं संस्कारमध्येऽखिले,
लोके कीर्त्तिकराः समृद्धिसदनाः सौभाग्यशान्तिप्रदाः,
संस्काराः कथिताः कलौ मुनिवरैरेते जनानां हिताः॥

श्रीसरयूप्रसाद शास्त्रिणो 'द्विजेन्द्रस्य'

धर्माचार्यस्य

[ श्रीआर्यमहिला महाविद्यालयस्थस्य ]।

# संस्कृतभाषायाः महनीयता ।

लेखकः—विष्णुप्रसाद पाण्डेयः "मगरौन"
साहित्याचार्य तृ० वर्ष वाराणसेय सं० विश्वविद्यालयः ।

संस्कृतभाषा विश्वस्य अखिल भाषाणाम् प्राचीनतमा वर्तते । इयं भाषा-अस्ति अमूल्यो निधि विश्वस्य न तु केवलं भारतवर्षस्यैव । अस्या भाषायाः प्राचीनता व्यापकता, विशदता, विशालता, महनीयता, सौन्दर्यं मधुरता सर्वमेव ईदृशं दरीदृश्यते येन न केवलं मानव-संस्कृतेः अखिलेतिहासः प्रकाशते, किन्तु सर्वेषाम्—अन्तस्तल आह्लादयुक्तो भवति तथा च एकस्य आलोकः लोकस्य प्रत्यक्षं भवति यत्र अतीतस्य सार्थकं भवति जीवनं स संसारात् विमुच्यते ।

एषा संस्कृतभाषा भारतवर्षस्य सर्वासाम् प्रादेशिक-भाषाणाम् साक्षात्रूपेण जननी वर्तते । अस्याः गीर्वाण्याः जीवनसंचारको रसः सर्वासु प्रादेशिक-भाषासु सर्वदा व्याप्तरूपेण दरीदृश्यते ।

अतः भवद्भिः यदि काचित् प्रौढाकृतिः कस्यामपि प्रदेशभाषायाम् निर्मातव्या भवेत्, तर्हि अस्याः संस्कृत-भाषायाः सहयोगि ज्ञानं विना अशक्या एव अस्ति । अस्या देवभाषायाः अतीवविस्तृतो वर्तते शब्दकोषः तथा च शब्दराशि विशालो, विश्वस्य अन्यासु भाषासु न वर्तते ईदृशो निधिः ।

भाषायामस्यामेकस्य पदार्थस्य बहवः पर्यायवाचिनः शब्दाः विद्यन्ते, जनाः कथयन्ति यत् आंग्लभाषा अतीव समृद्धा अस्ति, परंच तत्र आंग्लभाषायामपि एवंविधानां शब्दानाम् कोषः संख्या च न विद्यते, तथा च वयं डिंडिमघोषणया कथयितुम् शक्नुमः यत् अन्यासाम् कस्यामपि भाषायाम् एवंविधः शब्दकोषः बृहत् शब्दभाण्डागारः न विद्यते । अस्याः सुरभारत्याः पदेषु यथा मानवजातेः इतिहासो दृश्यते । यथात्र शास्त्रीयप्रणाल्या मनोवैज्ञानिकस्य वैज्ञानिकत्वस्य च वर्गीकरणविभागो अवलोक्यते तथा न अनुभूयते विश्वस्य अन्यस्यां कस्यामपि भाषायाम् ।

संस्कृतभाषायाः शब्देषु अद्वितीया रहस्ययुक्ता च शक्तिर्वर्तते, अखिल ज्ञानविज्ञानानां च रचना विद्यते, अस्यामेव, सनातनधर्ममूलभूता चत्वारो वेदाः, धर्म-प्राणभारतवर्षस्य धार्मिकाः ग्रन्था, भारतीयदर्शन-शास्त्राणामपि रचना अस्यामेव विद्यते ।

एषा हि खलु संस्कृतभाषा शैव-शाक्त-वैष्णव-जैनबौद्धादि बहुसम्प्रदायेषु विभक्तानां विभिन्नमतियुतामापाततः परस्परं विरुद्धत्वेन प्रतीयमानानामपि एक-सूत्ररूपेण परस्परं सम्बद्धानाम् सर्वेषामप्यस्माकम् भारतीय-संस्कृत्यभिमानिनां माननीया वर्तते ।

भारतीय-अभारतीय-मानवानां संस्कृतेः परिज्ञानाय तथा स्वजातीयस्थानज्ञानाय, तथ्यपरिज्ञानाय, कलायाः सर्वोत्कृष्टस्य आनन्दस्य प्राप्तये समेषां मानवानां कृते संस्कृतभाषायाः परिज्ञानमपेक्षितं वर्तते ।

संस्कृतभाषायाः साहित्ये धनिक-निर्धनयोः समाज-व्यक्त्योः, सभ्यासभ्ययोः पशुपक्षिमानवानाम् , चेतना-चेतनायोश्च नागरिकग्रामीणयोः आत्मपरमात्मनोः सर्वेषामेव मनोवैज्ञानिकदृष्ट्या विवेचनमतीव समीचीनतया रीत्या सम्पादितं दृश्यते । मानव-अन्तस्तलस्य प्रकोष्ठो न वर्तते यः अस्याम् दृष्टि-गोचरो न स्यात् । अथवा यस्य सूक्ष्मं तत्त्वं न कौशलेन

व्यक्ती कृतं भवेत । तादृशं स्वरूपं नास्ति प्रकृतेः यत् अत्र न चित्रितं सुस्पष्टरूपेण । अप्रतिहतं साम्राज्यमासीत् प्राचीनकाले सर्वस्मिन् जगति संस्कृतभाषायाः । देश-देशान्तरेषु अस्याः भाषायाः दर्शनीयो अनुकरणीयश्च प्रचारः प्रसार आसीत् ।

मध्यएशियाप्रदेशेषु इन्डोचायिनाप्रभृतिदेशेषु महासमुद्रान्तःसंस्थितेषु सुदूरवर्तिषु बालिप्रभृतिद्वीपेषु च अद्यत्वे समुपलभ्यमानैः प्राचीनैः भारतीयैः संस्कृत-ग्रन्थरत्नैः देवालयखण्डैः, संस्कृतशिलालेखैः अस्याः प्रचारातिशय एव तेषु तेषु स्थानेषु उद्घोष्यते । परःशतानाम् ग्रन्थरत्नानाम् ये भारते विलुप्ताः सन्ति, अद्यापि अनुवादरूपेण चीनतिब्बतादिदेशेषु अव-स्थितिरपि देववाण्या एव प्राचीनकालिकं भुवि विश्रुतं यशः प्रख्यापयति । भारतवर्षे तु प्राचीने काले अस्याः प्रचारातिशयस्य अत्युत्कृष्टप्रभावस्य च विषये किं तावत् वक्तव्यमस्ति, आबालवृद्धम्, आराज-रंकम् आपामरप्राज्ञम् च अस्याः सार्वभौमिकप्रचार-विषये नहि कस्यापि संदेहलेशस्य अवकाशः ।

तस्मिन् हि प्राचीने प्राचीनतमे च समये जीवन-यात्रायाः प्रत्येकविभागे संस्कृतभाषायाः एव अप्रतिहतं साम्राज्यं सुस्थितम् आसीत् ।

भारतीया संस्कृतभाषा एव एका वर्तते, यया वैदिककालाद् इदानीम् यावत् निखिलमपि भारतम् एकतासूत्रे निबद्धं वर्तते । यदि इयं देवभाषा न अभ-विष्यत् तदा भारतवर्षस्य विभिन्नप्रान्तीयाः पुरुषाः स्त्रियश्च परस्परं स्वकीयान् अभिप्रायान् प्रकटयितुम् असमर्था एव अभविष्यन् । आंग्लदेशीयानाम् आगम-नात् पूर्वं सम्पूर्णस्य भारतवर्षस्य संस्कृतभाषा एव केवला अन्तर्देशीया भाषा आसीत् । भारतं हि बृहत्तरो देशः, एतादृशे विशाले देशे भाषाभेदस्तु अनिवार्य एवास्ति, तथापि प्राचीनकाले न केवलं भारतवर्षे किन्तु भारताद्बहिरपि विभिन्नदेशेषु प्रचारातिशयमुपभुञ्जानानां सर्वासामपि जीवनयात्रानिर्वाहिकाणां विद्यानाम् आश्रयीभूता अखिल पुरुषार्थसाधनोपयोगिनी विस्तृत-वाङ्मयेन च समेता समुन्नतिशिखरम् अधिष्ठिता आसीत् एषा अस्माकं गीर्वाणवाणी ।

सर्वासाम् मूलभूता संस्कृतभाषा एव इत्यत्र नास्ति कोऽपि संदेहः । यदि संस्कृतभाषायाः अध्ययनमध्या-पनं च विनश्येत, तदा प्राचीनतमम् भारतीयम् ऐक्य-सूत्रं निश्चितमेव छिन्नं भिन्नं च भविष्यति । अतः भारतीयसभ्यतायाः संस्कृतेश्च रक्षणार्थम् भारत-राष्ट्रस्य ऐक्यसम्पादनाय संस्कृतभाषायाः संरक्षणम् नितान्तमावश्यकम् । संस्कृतभाषायाः संरक्षणेन न केवलं राष्ट्रस्य एकता एव सुरक्षिता प्रत्युत भारतीय-संस्कृतेरपि संरक्षणम् सुतरां भविष्यति । राज्यप्रशास-कानां इदम् आवश्यकम् पवित्रं च कर्तव्यमस्ति यत् ते संस्कृताध्ययनाध्यापनस्य देशकालोपयोगिनीं समुचितां व्यवस्थां विदधतु । एतदपि विचारणीयं यत् संस्कृत-भाषाप्रसारे केचन प्रत्यूहा अपि वर्तन्ते, तेषु —

(१) प्रथमम् संस्कृतसेवकानां दारिद्र्यमस्ति येन दृश्यसाधनप्रधाने अस्मिन् भौतिकवादियुगे वयं किमपि कर्तुं न पारयामः । अन्यविपदां प्रतिकारार्थं केचन त्यागवन्तः विद्वांसः सम्पूर्णे भारते पर्यटनम् विधाय उपदेशादिना जनहिताय प्रयत्नं न कुर्वन्तीति ।

(२) द्वितीयं कारणमस्ति संस्कृतज्ञानामालस्यम्, प्रमादः, पारस्परिकं वैमनस्यञ्च । अस्मात् कारणात् एव वयं निरुत्साहिनः दरिद्राश्च सम्पन्नाः । अस्याः विपदः प्रतिकाराय संस्कृतज्ञेषु साहसोत्पादनम् अत्या-वश्यकम् । यावत् संस्कृतज्ञाः स्वात्मनिर्भराः सुदृढाश्च न भविष्यन्ति तावत् अन्ये तेषां साहाय्यं न करिष्यन्ति ।

(३) जनतायां प्रचाराभावो हि नाम तृतीयो विघ्नो

वर्तते, वयं यत् किमपि कुर्महे तत् केवलं संस्कृतज्ञेषु एव सीमितं भवति। अस्य प्रतीकाराय विभिन्नभाषापत्रेषु संस्कृतसमाचाराणाम् प्रकाशन-व्यवस्था नितरामावश्यकी भवेदिति। अस्याम् व्यवस्थायाम्—इदमावश्यकम् प्रमुखं कर्तव्यमस्ति यत् वयं देववाण्याः समुद्धाराय बद्धपरिकरा भवेम, प्रयतनीयमस्माभिः सर्वाभ्युदय-निःश्रेयससाधनभूतायाः देववाण्याः समुन्नत्यै, इति।

---

# भारते संस्कृतभाषैव सर्वभाषापेक्षया हितकरी।

**लेखकः— हरिपालद्विवेदी 'श्रीहरि' विशारदः"**
"वाराणसेय-संस्कृतविश्वविद्यालयस्य"।



अस्मिन् भारते संस्कृतभाषैव सर्वभाषापेक्षया हितकरी इति श्रुत्वा मम हृदये महान् खेदः, महदाश्चर्यं, अतिकष्टञ्च जायते। आ!! इह भारते संस्कृतभाषायाः एतादृशी अवहेलना! यस्य राष्ट्रस्य कोणे कोणे वेदस्य ध्वनिः भवतिस्म, यस्य देशस्य एको यवनोऽपि संस्कृतभाषणे, संस्कृते कवितायाः रचने, संस्कृते काव्यस्य विनिर्मितौ एवं अनेकेषां कार्याणां संस्कृते सम्पादने समर्थो भवतिस्म। यत्र संस्कृते एव शुकादयः पक्षिणः वार्तालापं कुर्वन्तिस्म। यत्र पूर्वमिदानीमपि सर्वे संस्काराः कन्याकुमारीतः काश्मीरपर्यन्तम् संस्कृते एव भवन्तिस्म, भवन्ति च। यस्य राष्ट्रस्य राष्ट्रभाषा संस्कृतमेव आसीत्, तत्रैव इदानीम् जना विचारयन्ति यत्—भारते संस्कृतभाषैव सर्वभाषापेक्षया हितकरीति। तथा च तस्मिन्नेव राष्ट्रे राज्यशासनमिदं विचारयति यत् का भाषा राष्ट्रभाषापदे भवेत्। भो परिवर्तनम्! त्वमेतादृशम् कठोरहृदयमसि? इदं खलु सर्वे जानन्ति यत् संसारे कापि एतादृशी भाषा नहि मिलति यस्यां भाषायां संस्कृतस्य शब्दो न मिलेत्। अस्याः भाषायाः प्रचारः पूर्वं संपूर्णराष्ट्रे एव नहि अपि तु समग्रलोके आसीत्। अस्माकमेव हिताय पूर्वजैः सर्वमपि भौतिकं सुखं परित्यज्य अरण्येषु निवसद्भिः वेदशास्त्राणां रचना अस्यां भाषायामेव कृता। अस्माकमेव निःश्रेयसाय कपिलादिमहर्षियो दर्शनशास्त्राणि विरचितवन्तः। वेदाङ्गानि अस्माकमेव विविधज्ञानलाभाय विनिर्मितानि। आदिकविना रामायणीकथा विशालबुद्धिना भगवता व्यासेन महाभारतञ्च अस्माकमेव कल्याणाय विनिर्मितम्। कविकुलशिरोमणिना कालिदासेन स्वकीयानां नाट्यकाव्यादीनां रचनां विधाय अस्माकमेव शिरांसि उन्नमितानि। कियत् गणयामः, समस्तमपि वाङ्मयं अस्मत् पूर्वजैः अस्माकमेव समुत्कर्षाय हितसाधनाय च महता परिश्रमेण तपश्चर्यया च विरचितं वर्तते। संस्कृतसाहित्यं खलु अस्माकम् परम्परागतं सर्वोत्कृष्टम् पैतृकं धनमस्ति। अस्माकम् संस्कृते एतादृशानि काव्यानि पुस्तकादीनि च सन्ति, येषाम् अनुवादो लोकस्यानेकभाषासु समभवत्। सार्वभौमेयं संस्कृतभाषा, इदानीं स्वल्पप्रचारेऽपि अस्माकमेव राष्ट्रे एतादृशा प्रदेशा सन्ति, यत्र तत्प्रान्तस्थाः मनुष्याः हिन्दीवदने असमर्थाः संस्कृते वदन्ति, अवगच्छन्ति च। इयं संस्कृतभाषा सर्वासां भाषाणां जननी अस्ति।

विचारयन्तु भवन्तः यत्—वैदेशिकानां अस्याः भाषाया उपरि या या कुदृष्टिरासीत् सर्वदा सा सफला सञ्जाता । यवनकालात् स्वतंत्रताकालपर्यन्तं या बाधा अस्याः भाषायाः उपरि आगताः आसन् ता अवर्णनीया, अकथनीयाश्च । किन्तु सा इदानीमपि सर्वासां भाषाणां जननी भूत्वा शिक्षयति यत्—"वसुधैव कुटुम्बकम्, सा विद्या या विमुक्तये" "मातृदेवो भव" "पितृदेवो भव" संघे शक्ति कलौ युगे "इत्यादि संस्कृतस्य साहित्यमेव भारतीयानां हृदये गवस्य भावनामुद्बोधयति । अस्या एव बलेन इदानीं इह जगतीतले भारतवर्षस्य सर्वराष्ट्राणामपेक्षया अधिकं महत्त्वं वर्तते । अस्या एव बलेन शान्तेः पाठं पुरा मुनिजनाः पठन्तिस्म । पूर्वकालस्य कथां तावत् त्यक्त्वा नवीनमेव उदाहरणम् गृह्यताम्—भारते यत् स्वराज्यमभूत् इदं कस्य बलेन ? संस्कृतमेव शिक्षयति यत्–"अहिंसा परमो धर्मः" अस्योपरि एव चालित्वा महात्मा गाँधिमहोदयः सत्याग्रहमहिंसामयं युद्ध च कृत्वा स्वतंत्रताप्राप्तः स्वप्नं अदृदयत्, तर्हि "असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय" इत्यादि वार्ता सत्या अभविष्यत् । श्रीगीतायाः परमोपासकः गान्धिमहोदय आसीत् । अस्तीदम् संस्कृतसाहित्यस्यैकमुदाहरणम् । अपराण्यपि अनेकानि उदाहरणानि सन्ति, येषां वर्णने लेखन्यां बलं नास्ति, किन्तु अस्या अधिकाधिकमहत्त्ववर्णनेनाऽपि हृदयस्य परितोषो न भवति । एकदा 'आज' समाचारपत्रे मया अयं समाचारः पठितः–जर्मनीदेशे सप्तसु । विश्वविद्यालयेषु इयम् अमरभारती अनिवार्याऽस्ति । किमधिकं कथयामि संस्कृतसाहित्ये यानि पुस्तकानि सन्ति विदेशवासिनः, तेषां पठन अधिकतरं आकर्षिताः दृश्यन्ते । ते अनुवादं कुर्वन्ति कारयन्ति च, अतएव इयं भाषा भारतस्यैव नहि अपि तु वैदेशिकानां कृतेऽपि हितकरी । अस्माकम् प्रदेशस्य शिक्षामंत्रिणा श्रीकमलापतित्रिपाठिमहोदयेन स्वभाषणे उक्तं यत्—संस्कृतभाषायाम् भारतीयराष्ट्रस्य संपूर्णा तपश्चर्या, तस्य दर्शनम्, गौरवं, अभिव्यक्तमस्ति । संस्कृतं अद्याऽपि अस्माकमभिमानस्य वस्तु वर्तते । अस्माकम् जीवनस्य स्फूर्तेः, स्रोतः अस्ति । सगर्वं स्वमस्तकोत्थाने सैव अस्मभ्यं पात्रतायाः प्रदानं करोति । इति कथनेन दृढविश्वासो भवति यत्—इयं संस्कृतभाषा सर्वभाषापेक्षया भारते हितकरी, संसारे च हितकरीति ।

---

# भारतीय गृहस्थाश्रमकी श्रेष्ठता

**लेखक—डा० रामचरण महेन्द्र, एम० ए०, पी–एच० डी० ।**

—❀—

भारतवर्षमें विवाह-बन्धन अत्यन्त पवित्र धार्मिक कृत्य माना गया है । इसमें अनेक उद्देश्योंकी प्रतीति और महान् उत्तरदायित्वोंकी पूर्तिके साधन समाविष्ट हैं । भारतके प्राचीन मुनियोंने इसे मानव-प्रकृतिकी उद्दाम प्रवृत्तियोंको स्वीकार करने, प्रवृत्तिद्वारा आयोजित प्रजनन तथा सृष्टि-विस्तार, सामाजिक सुव्यवस्था सुदृढ़ नागरिक निर्माण और अन्तमें निवृत्तिकी चरम सीमापर पहुंचनेकी व्यवस्था की है ।

धर्मशास्त्रका प्रवचन है—

"तथा तथैव कार्याणि न कालस्तु विधीयते ।
अस्मिन्नेव प्रयुञ्जानो, अस्मिन्नेव प्रलीयते ॥"

इस संसारके साथ हमारा संयोग है, इसी संसार-

में हमारा लय हो जायगा, तब हमें जिस समय जो कर्तव्य हो, वही करना अनिवार्य है। व्यक्तिगत सुविधा तथा असुविधाको लेकर कर्तव्यके पुण्य-पथसे परिभ्रष्ट होना उचित नहीं। इसीलिए धर्मने गृहस्थाश्रमको तपोभूमि कह कर उसकी महत्ता स्वीकार की है। यहांतक कि धर्मकी दृष्टिमें गृहस्थाश्रम ही चारों आश्रमोंका मुख्य केन्द्र है। इस सम्बन्धमें योगिवर वशिष्ठका निर्देश देखिये—

गृहस्थ एव यजते, गृहस्थस्तप्यते तपः।
चतुर्वर्णाश्रमाणान्तु, गृहस्थस्तु विशिष्यते॥"

अर्थात्—गृहस्थ ही वास्तविक रूपसे यज्ञ करते हैं। गृहस्थ ही वास्तविक तपस्वी हैं—इसलिए चारों आश्रमोंमें गृहस्थाश्रम ही सबका शिरमौर है।

भारतधर्मके अनुसार गृहस्थाश्रम प्रकृत तपोभूमि है। इस कालमें दो पवित्र आत्माओंका परस्पर सामंजस्य होता है तथा वे जीवनके युद्धमें प्रविष्ट होते हैं। उन्हें पग-पग पर उत्तरदायित्व, कठिनाइयां, सामाजिक संघर्ष, प्रतियोगितामें भाग लेना होता है। दोनों आत्मायें परस्पर सम्मिलित होकर एक-दूसरेकी सहायता करते हुए तपस्या और साधनाके मार्गपर अग्रसर होते हैं।

प्रकृतिने प्रजनन-क्रियाकी सिद्धिके निमित्त जिस उद्दाम वासनाको मानव-हृदयमें प्रतिष्ठित किया है, उसकी उच्छृंखलता यौवनमें आकर इतनी तीव्र हो उठती है कि सामाजिक एवं आध्यात्मिक दृष्टिसे उसका संयम आवश्यक है। भारतीय धर्मने उस उद्दाम वृत्तिको स्वीकार किया है तथा विश्वकी स्थिति और सम्पूर्णताकेलिये, मनुष्यके विकासकेलिये जरूरी माना है। अतएव प्रत्येक नागरिकको इस महायज्ञमें प्रवृत्त होनेका आदेश प्रदान किया है।

गृहस्थाश्रम विषय-भोगकी सामग्री नहीं है, स्वार्थमयी लालसा और पापमयी वासनाका विलास मंदिर नहीं, वरन् दो आत्माओंके पारस्परिक सहवास द्वारा शुद्ध आत्मसुख, प्रेम और पुण्यका पवित्र प्रसाद है, वात्सल्य और त्यागकी लीला भूमि है, निर्माण-प्राप्तिके लिए शान्तिकुटीर है। विवाहसे मनुष्य समाजका एक अङ्ग बनता है, अपूर्णतासे पूर्णता प्राप्त करता है, निर्बलतासे सबलताकी ओर अग्रसर होता है। उसे नये सम्बन्ध प्राप्त होते हैं, नये उत्तरदायित्व और नये आनंद प्राप्त होते हैं। भारतीय ऋषियोंने गृहस्थाश्रमको अनेक व्रत, नियम, अनुष्ठान; आतिथ्य-सत्कार इत्यादि पुण्यकर्तव्योंकी लीलाभूमि बनाकर उसकी महिमाको द्विगुणित किया है। उन्होंने पारस्परिक व्यवस्थामें प्रेम और वात्सल्य तथा दूसरी ओर अपनेसे छोटोंके लिए उन्हींके हितमें त्याग तथा तपस्याके द्वारा इस तपोभूमिको समान पवित्र बना दिया है।

एक लेखकका विचार है—"इस तपोभूमिके पुण्यस्वरूप और पुण्यसाधनका मधुर रहस्य जाननेके लिए हम हिमालयकी उस तुषार-मंडित शिलापर चलें जहाँ हिमालयकी किशोरी पार्वती तपश्चर्यामें निमग्न है। यही भारतीय गृहस्थाश्रमके मंगलमय स्वरूपका प्रथम दर्शन है। गृहस्थाश्रममें प्रविष्ट होनेसे पूर्व रमणीको तपोमयी साधनामें प्रवृत्त होना पड़ता है, क्योंकि जिस मंगलमय उद्देश्यकी पूर्तिके लिए वह अपने पवित्र सुन्दर जीवनका उत्सर्ग करती है, उसके लिए तपस्या और त्यागकी परम आवश्यकता है। कुमारकी उत्पत्ति तपस्याकी सिद्धिका मधुर फल है, क्योंकि विश्वके परित्राणकेलिये, देशके मंगलकेलिये, समाजके अभ्युदयकेलिये और मनुष्यताकी मर्यादाको अक्षुण्ण रखनेकेलिए ही कुमारके अवतारकी आवश्यकता है। पुत्र या कन्याका जन्म भी धार्मिक

महत्त्व रखता है। उसके साथ रमणीकी उत्कृष्ट सिद्धि भी सम्मिलित है।"

भारतीय वैवाहिक जीवन मंगलमय है। उसका प्रत्येक व्रत, नियम, अनुष्ठान इत्यादि विशेष महत्त्व रखता है। सतीत्व तथा पत्नीव्रतकी पवित्रतासे समुज्ज्वल, मातृत्वके मृदुल वात्सल्यसे विभूषित, उत्तरदायित्वोंके मनोरम भारसे परिपूर्ण, प्रेमके प्रवाहसे पूज्य भारतीय विवाहित जीवन त्यागका तेजोमय तीर्थ और पुण्य एवं कर्मकी भूमि है। इसीके द्वारा स्त्रियोंमें स्त्रीत्व तथा पुरुषोंमें पुरुषत्वका विकास होता है। नर-नारीके मंगलमय चिर-सम्मिलनके समय भारतीय समाज उन दोनोंको प्रणय सूत्रमें आबद्ध करनेके साथही साथ इस जन्म तथा मृत्युके पश्चात् परलोकमेंभी परस्पर सहायता, सहानुभूति एवं स्नेहमय व्यापारके प्रतिज्ञा-सूत्रमें आबद्ध करता है।

हमारा हिन्दुधर्म जिस मंगलमयी साधनाको लेकर सदा व्यस्त रहता है, वह है "प्रवृत्तिको निवृत्तिके पथपर परिचालित करना।" हमारे यहाँ वासनाकी प्रवृत्तिको माना है, किन्तु साथ ही साथ उसने इस प्रवृत्तिके परिष्कार, उन्नतिकरण और अन्ततः निवृत्तिमें परिणत करना यह फल माना है। वैवाहिक जीवन हमारे जीवनकी एक स्टेज है, जो भावी जीवनके निर्माणमें सहायक है। हम सदासे यह मानते आये हैं कि असंस्कृत और उच्छृंखल प्रवृत्ति साधना और तपस्याके द्वारा परम शान्त और त्यागमयी बनायी जा सकती है, विनाशकी अपेक्षा वृत्तियोंका सही मार्गोंकी बहाव, स्वार्थ और लालसासे निकल कर प्रेम-त्यागके मार्गोंमें उनका प्रवाह हमारे लिये विशेष महत्त्व रखता है।

आदिकविसे लेकर पण्डितराज जगन्नाथने साहित्यमें गृहस्थाश्रमका मनोमोहकरूप प्रतिष्ठित किया है। कौन ऐसा प्रान्त है जिसमें मातृत्वकी मंगलमय मूर्ति, सतीत्वकी त्याग, सौंदर्य और वात्सल्यकी मन्दाकिनी प्रवाहित न हुई हो।

गृहस्थमें प्रविष्ट न होनेवाला व्यक्ति अनेक प्रकारके मानसिक रोगोंका शिकार बनता है। आयु कम रहती है, मानसिक भावनायें विकसित नहीं हो पातीं, संसारके महत्त्वपूर्ण कार्योंमें जी नहीं लगता। मन पुनः पुनः सुन्दर स्त्रियोंके मानसचित्र बनाता और स्वप्नदोष उत्पन्न करता है। अविवाहित पुरुषकी उत्पादनशक्ति क्षीण होती है। विवाहसे उसे नया चाव, उत्साह, स्फूर्ति और प्रेरणा प्राप्त होती है। इसी प्रकार अविवाहित स्त्री कुढ़न, अनिद्रा, प्रमाद, चिन्ता, हिस्टीरिया, प्रजननकी गुप्त भावना, अतृप्त, स्वार्थी और क्रोधी हो जाती है। विवाहित स्त्रीका सौंदर्य बढ़ता है। शरीरके सब अंगोंका नवीन ढंगसे विकास होता है। मृदुल भावनाओं—दया, प्रेम, सहानुभूति, वात्सल्य, करुणाकी अभिवृद्धि होती है।

डाक्टर जेम्स स्टाक, रजिस्ट्रार जनरल आफ स्काटलैंडने अपनी परिगणना द्वारा सिद्ध किया है कि कुंआरेपनसे मनुष्यकी आयु क्षीण होती है। विवाहित व्यक्तियोंमें से ४० और २० वर्षके मध्य १४०७ व्यक्ति प्रति वर्ष मरते है, किन्तु इसी अवस्थामें कुँवारे एक लाखमें से १८३५ प्रतिवर्ष मरते हैं। २५ से ४० के मध्यम मरनेवाले कुंवारों का मृत्यु-अनुपात विवाहितोंसे दुगुना है। बीमा कम्पनियां अविवाहितोंकी अपेक्षा विवाहितोंको पसन्द करती हैं।

## विवाहसे पूर्णताकी प्राप्ति

पृथक्-पृथक् स्त्री और पुरुष अपूर्ण हैं। उनके गुण तथा स्वभाव भी अपने अन्दर एक प्रकारकी कमी, हीनताका अनुभव करते हैं और किसी अदृश्य वस्तुकी

कामना करते हैं। जो गुण एकमें नहीं हैं; दूसरोंमें उनकी मौजूदगी आकर्षणका विषय बनती है। स्त्री-पुरुष दोनोंके स्वभावोंका विश्लेषण देखिये—

स्त्रीमें लज्जाशीलता, चारुता, सहजज्ञान, पातिव्रत्य, कोमलता, सूक्ष्मता, भावुकता और और लज्जाशीलता होती है। वे मानसिक संवेगोंको तीव्रतासे अनुभव करती हैं। वे स्नेह-सरोवरकी मीन हैं। उन्हें रूप-लावण्यकी अनुपम राशि प्रदान की गई है। शान्तिप्रियता, सहनशीलता और धैर्य भी बहुत होता है। वे बातें बहुत कम करती हैं, पर सुनती बहुत अधिक हैं।

पुरुष पाशविक वृत्तियों, शक्ति, क्रोध, कार्यदक्षता तथा "अहं" वादी है। क्रियाशीलता और प्रभुताका प्रदर्शन उसके प्रमुख गुण हैं। पुरुषका मस्तिष्क पाशविक वृत्तियोंके क्रममें अत्यधिक बलवान् है। प्रेम, क्रोध और प्रतिशोधके समय वह कुछ कालके निमित्त उद्भ्रान्त-सा हो जाता है। प्रेममें शीघ्रता करता है। वह स्वभावतः मजबूत, निर्णायक, स्वाभिमानी, प्रचंड, उग्र, दाता, उदार, कठिन परिश्रमी, बेलगाम, निग्रहहीन और युद्ध करनेवाला है। उसका मन अस्थिर, चंचल, बेकाबू और एक विस्फोटके समान है।

दोनोंमें स्वतन्त्र यौन प्रभेद मिलते हैं। नर प्रेम करनेमें उन्मत्त, शीघ्र आवेगपूर्ण कामस्थितिमें प्रचण्ड है। वह प्रेमसे पूर्व स्त्रीको हर प्रकारसे अनुभव करनेमें सचेष्ट रहते हैं, तत्पश्चात् प्रेमाराधनामें लापरवाहसे हो जाते हैं। पुरुषके प्रेममें प्रचण्डता है, किन्तु वह शीघ्र ही ठण्ढा हो जानेवाला ज्वालामुखी है। पुरुषके लिए प्रेम एक प्रकारका खेल है। इसके विपरीत स्त्रीका सम्पूर्ण जीवन ही प्रेमसे निर्मित हुआ है। वह प्रेमसे ही जाती है और उसीसे वह अपना भविष्य बनाती है। उसके आन्तरिक हृदयोंका विकास प्रेमके जलसे ही होता है।

सुप्रसिद्ध कवि शयवासनाने सत्य ही कहा है—"प्रेम स्त्रीका सम्पूर्ण अस्तित्व है।"

स्त्रीका प्रेम शान्त पर सतत प्रवाहित होनेवाली सरिताकी तरह गम्भीर है। वह इन्द्रियोंसे प्रारम्भ होकर आत्मिक ज्ञानकी ओर अभिवृद्धिको प्राप्त होनेवाला है। स्त्री एक बार प्रेम दान देकर पुरुषको अपना सर्वस्व दान कर देती है। उसमें भक्तिभाव, पातिव्रत्य और आत्मीक ज्ञान अपेक्षाकृत अधिक है। हेवलाक ऐलिकने सत्य ही निर्देश किया है—"पुरुषोंकी अपेक्षा स्त्रियोंमें यौन क्षेत्र अधिक स्थूल और प्रसारित है, परन्तु उनमें वह उतने प्रधान भावसे व्यक्त नहीं होता। पुरुषोंमें काम-वासनाकी स्वाभाविक प्रवृत्ति शक्तिका अशान्त स्रोत है। वह उछल कर सब प्रकारकी नालियांमें बह जाता है।

स्त्री प्रेमसे शासन करना चाहती है। उसका प्रेम विकेन्द्रित होता है, जिसमें उसके बच्चे, पति, भाई-बहन इत्यादि सम्मिलित हैं। मातृत्वका भार उठानेपर उसका वात्सल्य विकसित होता है। करुणा, सहानुभूति दया, प्रेम, नाना धाराओंमें बहने लगता है। वह अपने बच्चेपर तो प्रेम न्यौछावर करती ही है, सभी बच्चों, पशु-पक्षियों तकको भावुक दृष्टिसे निहारती है। स्त्रीकी भावनायें तीव्र होती हैं। तथा भावनाका उसके हृदयमें राज्य है। सोचमें डूबे रहना प्रतीक्षा करना और सहज ज्ञान—ये स्त्रीके सनातन गुण हैं। वे अपने सहज ज्ञानसे पुरुषकी साधारण और मौन आवश्यकताओंको पहलेसे ही भांप लेती हैं और उसका प्रबन्ध करती हैं। दूसरोंके मनोभावोंको भांपने तथा भविष्यमें आनेवाली विपत्तियोंका अनुमान लगानेके लिये उन्हें विशेष गुप्त मनोवैज्ञानिक शक्तियां प्रदान की गई हैं।

डा० बरनार्ड हालेंडरके अनुसार अधिकांश स्त्रियां

एक तीखी और गहरी दृष्टिसे जान लेंगी कि यह व्यक्ति कैसा है ? धोखेबाज, बदमाश है या सज्जन, नैतिक, बुद्धिमान्। मूर्ख स्त्रियां दुराचारियोंके वशमें आ सकती हैं, किंतु बुद्धिमती स्त्री बड़ी चतुर होती है। वह उसके चेहरेसे अन्दरके मनोभाव पढ़ सकती है। यदि आप अपना दुःख-दर्द स्त्रियोंके सामने वर्णन करें तो वे सहानुभूति प्रदर्शित करेंगी। वे पुरुषोंकी अपेक्षा अधिक भावुक हैं, अधिक प्रकारके मानसिक भावोंका प्रकाश और अनुभव करती हैं। धार्मिक विचारोंमें वे पुराने संस्कारोंसे चिपकी रह जानेवाली हैं। स्त्री पुरुषकी अपेक्षा अधिक व्यवहारकुशल है, अपने व्यवहारमें अधिक उदार होती है, वह पुरुषके प्रेमपर सदा विचार किया करती है और उसके प्रशंसायुक्त प्रेमभरे वाक्य सुननेके लिए सदैव लालायित रहा करती है। संक्षेपमें, पुरुषकी अपेक्षा वह अधिक सहनशील, शान्त, प्रतिभा-सम्पन्न, उदार एवं सहज ज्ञानयुक्त होती है।

विवाहमें स्त्री-पुरुषके उलटे गुण एक-दूसरेसे मिलकर पूर्णताकी सृष्टि करते हैं। दोनोंका संयोग समाजका एक यूनिट बनाता है। वही यूनिट सम्मिलित रूपमें समाजको आगे बढ़ाता है। न तो पुरुष स्त्रीके बराबर है, न स्त्री पुरुषोंके गुणोंका अनुसरण कर अपने अन्दर उन्हें उत्पन्न कर सकती है। सृष्टिकर्त्ताकी रचना ही ऐसी है कि दो विभिन्न गुणवाले प्राणी भाईचारे और पारस्परिक साझेदारीसे, एक-दूसरेके स्वभाव और प्रकृतिको समझकर सम्मिलित रूपसे आगे बढ़ते हैं। स्त्री तथा पुरुषके गुण, दोष एवं प्रकृति एक स्थानपर मिलनेसे 'मनुष्य' बनता है। यदि ये दोनों लिंगोंके प्राणी एक-दूसरेसे पृथक् रहेंगे, या लैंगिक प्रतियोगिताओंमें उलझे रहेंगे तो गृहस्थियोंमें पारस्परिक कलहकी वृद्धि रहेगी। समाजकी समरसता नष्ट हो जायेगी।

श्री सन्तरामजीने लिखा है—"गृहस्थी एक साझेकी दूकान है। इस दूकानके प्रधान साझेदार दो हैं—स्त्री और पुरुष। यह दूकान तभी बढ़ती, फूलती और लाभप्रद होती है। जब वे दोनों साझेदार एक-दूसरेके स्वभाव, प्रकृति, गुण, दोष, आवश्यकता और विशेषताको समझते हों। दूसरेका सम्पर्क ज्ञात न होनेसे उनका साझा भलीभाँति नहीं चल सकता... .. विज्ञानने स्त्री और पुरुषकी तुल्यता की घोषणा की है, न कि उनकी समानता की। बात केवल इतनी ही है कि स्त्री और पुरुष दोनोंके संयोगसे मनुष्य बनता है, ठीक उसी प्रकार जैसे धनात्मक और ऋणात्मक अणुओंके मिलनेसे विश्व बना है।"

विवाहसे पश्चात् पुरुषको स्त्रीके सुखके लिए तथा स्त्रीको पतिके आनन्दके निमित्त कुछ बलिदान करना पड़ता है। दोनों ही एक-दूसरेको सुखी देखना चाहते हैं। अपने जीवन-मित्रके लिये अधिकसे अधिक त्याग करनेको प्रस्तुत रहते हैं। अतः स्वार्थ और संकुचितता नष्ट होकर उदारता और त्यागकी भावनाएँ जाग्रत् होती हैं। जीवनका क्रम है—"सुखकी ओर अग्रसर होना।" इस त्यागका फल यह होता है कि दोनों ही सुखी रहते हैं। एक-दूसरेके लिये सुख खोजनेकी प्रवृत्ति तथा उपकरण प्रस्तुत करनेसे अपने लिये सुख पानेका राज-पथ तैयार किया जाता है। इस प्रवृत्तिका जनक है कर्तव्यनिष्ठ गृहस्थ जीवन। गृहस्थ-जीवन एक ऐसी पाठशाला है जिसमें स्त्री-पुरुषके स्वभाव एक होकर एक दूसरेकी कमीकी पूर्ति करते हुए अधिकसे अधिक सुख-समृद्धि और समाजहितके लिए अग्रसर होते हैं।

विवाहित स्त्री-पुरुष त्याग और आत्म-समर्पणकी प्रतिमूर्ति हैं। पुरुष सिंहके समान बलशाली, क्रोधी और तीव्र मनोविकारोंका लड़ाकू जीव है। लेकिन

अपनी पत्नीके समक्ष वह दयालु हो उठता है। जिस नारीको वह एक पराये घरसे लाता है, अपने घरकी सम्पूर्ण व्यवस्था, गुप्त बातें उसे सौंपकर ठण्डी साँस लेता है। रुपये कमाकर सब उसी लक्ष्मीको अर्पण करता है। वह स्वयं अपने आप कुछ नहीं खाना चाहता। भूखा रहकर पत्नीके लिए अच्छीसे अच्छी सामग्री प्रस्तुत करता है। इसी प्रकार पत्नी स्वयं दुःख उठाकर घरके कार्योंमें लगकर पतिको सुखी देखना चाहती है। वह अपना सुख, खान-पान, पहरावा इत्यादि पतिके सुखपर उत्सर्ग कर देती है। यह पारस्परिक आत्म-समर्पण ही गृहस्थ-जीवनका निर्माण करता है। (श्री वेंकटेश्वरतः)

---

## केन्द्राध्यक्ष महाशयोंसे निवेदन

अखिलभारतीय धार्मिकाध्यात्मिक संस्कृत विद्यापीठके परीक्षाकेन्द्र भारतके प्रायः सब प्रान्तोंमें हैं। भारतीय संस्कृति एवं धार्मिक भावनाके प्रचार तथा प्राचीन शिक्षा—आदर्शका संरक्षण करना ही इस परीक्षा-का प्रधान लक्ष्य है। धर्मभावना विहीन शिक्षाके प्रचारसे मानवजातिका कल्याण संभव नहीं है। प्रत्यूत धर्म-शिक्षाके बिना अनैतिकता अनाचारकी वृद्धि हो रही है, अनुशासनहीनताकी ओर प्रवृत्ति बढ़ रही है। अतए आपसे निवेदन है कि अन्य सज्जनोंको इस परीक्षाके महत्त्वको समझाकर नवीन केन्द्रोंकी स्थापनाके लिये प्रेरणा देवें।

गत परीक्षामें (१९५९) उत्तीर्ण छात्रोंके प्रमाणपत्र प्रेषित हो रहे हैं। नियमानुसार केन्द्राध्यक्षोंके पास प्रेषित किये जायेंगे। केवल इसीके सम्बन्धमें अब पत्र-व्यवहार करनेका कष्ट न करें।

प्रायः देखा जाता है कि परीक्षावेदनपत्र भरते समय परीक्षार्थी अपने नाम-ग्राम अध्यापक नाम, पितृनाम आदि लिखनेमें भूल कर जाते हैं। परीक्षाफल प्रकाशित हो जानेपर किसीकी दृष्टि इस भूलपर पड़ती है, अथवा आवेदनपत्रके अनुसार ही प्रमाणपत्र तैयार होनेपर जब उनके पास भेजा जाता है, तब उसका संशोधन करानेका वे प्रयास करते हैं। इसके लिये—केन्द्राध्यक्ष महाशयोंसे अनुरोध है कि आवेदनपत्र भेजनेसे पहले उसका निरीक्षण अच्छी तरहसे कृपया कर लें कि ठीक-ठीक भरा गया है, या नहीं। यदि कोई त्रुटि हो तो उसको सुधारकर भेजना चाहिये। आगामी परीक्षाके (१९६१) के लिये कितने आवेदनपत्रोंकी आवश्यकता है कृपया सूचित करें।

—परीक्षामन्त्री

# ❋ सुरभारतीका प्रचार और राष्ट्रके लिए आवश्यक प्रसार ❋

रचयिता :—हरिपाल द्विवेदी "श्रीहरि" विशारद"
( वाराणसेय संस्कृत विश्वविद्यालय वाराणसी )

कविवर्य राजा भोजका वह शान्ति-राज्य कहाँ गया।
हाय! सुखका धाम भारत आज कैसा हो गया॥

थासमय कैसा जब यहाँ सुरभारतीका राज्य था।
अनुपम अखंड अजेय था न विभाज्य था अविभाज्य था॥

लहलहाता भारतीका केतु था इस देशमें।
जगतका गुरु यह बना था अतिविनीत सुवेशमें॥

सारे जगतको प्रेमसे था ज्ञान सिखलाया अहा!।
फिर ज्ञानका क्या तत्व है, इसको भी बतलाया अहा॥

किन्तु इन सब करतबोंका सार है—सुरभारती।
सुरभारती थी देशकी पर-देशकी भी आरती॥

"वसुधैव कुटुम्बकम्" का मंत्र है—सुरभारती।
"अहिंसा परमधर्मः" का भी तंत्र है सुरभारती॥

इस मंत्रसे प्रत्यक्ष है यह राष्ट्र आज स्वतंत्र है।
ऐसा अनोखा विश्वमें सुरभारतीका मंत्र है॥

किन्तु इसको इस समय हा! हम भूलते हैं जा रहे।
मातृका ही हम अनादर आज करते जा रहे॥

मालूम नहीं संसद सुदिल्लीकी भी है क्या सोचती।
जो देववाणी राष्ट्रभाषाको नहीं अवलोकती॥

विनय है यह "श्री हरी" की इस देशकी सरकारसे।
होगा अवश उत्थान बस, इक संस्कृत - विस्तार से॥

# श्री भारतधर्म महामण्डल द्वारा संचालित अखिल भारतीय धार्मिकाध्यात्मिक संस्कृतविद्यापीठ परीक्षाफल सन् १९६० ई०

प्रधान कार्यालय, जगतगंज वाराणसी ।

—❀—

## व्याकरण प्रथमा

प्रथम श्रेणी—रोल नं० ३६५—दीनानाथ झा, ४३१—अर्धेन्दुशेखर उपासनी, ४९८—मिरचूगिर योगी, ४९९—बाबूलाल कुशवाहा, ५००—ख्यालीरामशर्मा।

द्वितीय श्रेणी—१६०—अयोध्या प्रसाद मिश्र, १६१—सुन्दरलालशुक्ल, २६९—राधाचरणदास, २७०—विश्वनाथ त्रिपाठी, ३५९—त्रिभुवननाथ पाण्डेय, ४३२—युगलकिशोर शर्मा, ४३३—अजितकुमार शर्मा।

तृतीयश्रेणी—६३—रामप्यारे पाण्डेय, ६४—कृष्णशंकरगिरि, १८८—प्रेमलाल शुक्ल, २७२—योगेन्द्र सिंह।

## साहित्य प्रथमा

द्वितीय श्रेणी—४२७—हरकाली उपासनी, ४७७—मनोरमा देवी।

तृतीय श्रेणी—६५—बद्रीनारायण द्विवेदी, ४०६—रामप्रकाश प्रसाद करन, ४०७—हरिवंश पाण्डेय।

## कर्मकाण्ड प्रथमा

द्वितीय श्रेणी—४३५—इन्द्रनाथमिश्र शर्मा, ४३६—प्रवणकिशोर मिश्र, ४३८—सुधीरचन्द्र वन्द्योपाध्याय, ४३९—शताक्षीचरण छान्दोगी।

तृतीय श्रेणी—४३७—श्रीविष्णुपदमिश्र।

## पुराण प्रथमा

द्वितीय श्रेणी—११३—कैलाशपति पूजारी, २३६—विद्याराम शर्मा, २३७—कपूरी देवी शर्मा, २३८—ओमप्रकाश कुलश्रेष्ठ, २३९—दयाशंकर गुप्त, २४१—घनश्यामदास जैन।

तृतीय श्रेणी—४३०—श्रीहरिपदवाग।

## हिन्दी प्रथमा

द्वितीय श्रेणी—११२—सुशीलादेवी गुप्ता, ११७—विद्यावती देवी, २०४—यतीन्द्रनाथ मिश्र, २०७—प्रभुनाथसिंह, २१२—सैयद नीसार अहमद, ३१८—सिंहेश्वर प्रसाद पाल, ४८८—पतिराज कुर्मी, ४८९—राजपति मिश्र, ४९०—दयाशंकर पाण्डेय।

तृतीय श्रेणी—१०८—उमरदेवी, १०९—श्रीमती देवी, १८७—विश्वम्भरप्रसाद शुक्ल, २०५—शैलेन्द्रकुमार तिवारी, २०६—रामानन्द तिवारी, २०८—पारसनाथ दीक्षित, २०९—राजेन्द्र दीक्षित, २१०—कृष्णकुमारद्विवेदी, २१३—कलावतीकुमारी, २२३—नाथूलाल, २२१—सुशीला देवी, २२५—चन्द्रकान्ता देवी, २२६—गोरधन शर्मा, २२७—जयराम वर्मा, २२८ कृष्णाबाई शिन्दे, २५६—शान्ता देवी, २७३—सुग्रीवझा, २७४—छबिनाथ झा,

३१५—भोलाप्रसाद, ३१६—मोतीराम, ३१७—हीरालाल वर्मा, ३१८-अखिललोकप्रसाद, ३१९—शंकर प्रसाद, ३२०—मिथिलेशकुमार, ३२२—महम्मद रसूल, ३२३—परमेश्वर राम, ३६७—महेश्वरी प्रसाद सिंह, ६९३—प्रेमवती देवी ।

## सार्वजनिक धार्मिक प्रथमा

द्वितीयश्रेणी—१३४—हीरालाल व्यास कानोड़, १३५—जयवल्लभ शर्मा, १३६—मनोहर सिंह राजपूत, १३७—भगवतीप्रसाद श्रीमाली, १३८—जीतमल कुलभी, १३९—नर्मदाशंकर चौबीसा, १४०—छगललाल लुहार 'श्याम' १४१—रघुनाथ लाल कलहर 'रघु', १४२—हीरालाल महात्मा, १४३—श्री भवरलाल शर्मा कानौड़, १४४—इन्द्रलाल आमेठा, १४५—नरेन्द्र सिंह 'बावलानरेन्द्र', १४६—किशन सिंह राठौर ।

## व्याकरण मध्यमा

प्रथम श्रेणी—१४—नारायण प्रसाद उपाध्याय, १५—जगन्नाथ उपाध्याय, १६—लेखनाथउपाध्याय, ३९७—टीकारामसुवेदी, ४०४—सवितृनन्दन मिश्र।

द्वितीयश्रेणी—६६—राजधर पाण्डेय, ६७—शशिप्रभाकर पाण्डेय, ६८—रामप्यारे मिश्र, ३६०—महावीरप्रसाद चिरानियाँ, ३६६—जगदीश ठाकुर, ३९६—टीकाप्रसाद उपाध्याय, ५१६—भागवतदास सारस्वत ।

## साहित्य मध्यमा

प्रथम श्रेणी—४०६—मनोरमा कुमारी मिश्रा ।

द्वितीय श्रेणी—२४—अम्माप्रसाद मिश्र, २५—सेवक राम शर्मा, २६—शालिग्राम द्विवेदी ।

तृतीय श्रेणी—१—देवीप्रसाद पराजुली, २—छविराज उपाध्याय, ३—कलाधरशर्मा, ४—प्रेमप्रकाश उपाध्याय, ५—नूतनप्रकाश उपाध्याय, ५१—पुरुषोत्तमदास वैष्णव, ३८८—पीताम्बरप्रसाद उपाध्याय, ३९५—पारसनाथ पाठक, ४०८—सरस्वती देवी, ४११ झलकदत्तउपाध्याय ।

## कर्मकाण्ड मध्यमा

तृतीयश्रेणी—१७३—चुन्नू राम, २२२—मिश्रीलाल शर्मा ।

## पुराणमध्यमा

प्रथम श्रेणी—१९ शालिग्राम पाण्डेय ।

तृतीय श्रेणी—२३५—डिप्टी सिंह ।

## हिन्दी मध्यमा (विशारद)

प्रथम श्रेणी—रामराव वामनराव ।

द्वितीयश्रेणी—३८—कृष्णकुमार सिंह, ३९-विजयप्रताप सिंह, १८४—मिथिलेशप्रसाद, २०३—मो० हसनरजा, २१६—माँगीलाल वर्मा, २२०—उदय सिंह चावड़ा, २४२—दीनदयाल शर्मा मुदगल, २६०—सुभाषचन्द्र सिंह, २६१—सूबेदार सिंह, २६२—महीपाल सिंह, २६३—अवधबिहारी सिंह राठौर, २८८—रामानन्द चतुर्वेदी, ३३२—वच्चेकान्तराय, ३३४—बालमुकुन्दप्रसाद यादव, ३४४—शिवकुमारप्रसाद साही, ३४८—रमाकान्त प्रसाद, ३५३—रामव्यास पाण्डेय, ३५५—सीताराम जयसवाल, ३७०—विश्वनाथ प्रसाद सिंह, ३७१—बालेश्वर प्रसाद सिंह, ३९८—शिव-

पूजन राय भट्ट, ४०१—हरिशंकर ठाकुर, ४०२—रामसुन्दर सिंह, ४८२—बालस्टर सिंह, ४८३—भगवान सिंह, ४८४—हरिनाथ कुर्मी, ४८५—सत्यदेव यादव, ४८६—रामडजागिर मिश्र, ४८७—तिलकधारी कुर्मी।

तृतीय श्रेणी—१८५—माधोप्रसाद, १९९—ईश्वरशरण पाठक, २००—उमाशंकर पाण्डेय, २०१—सर्वदेव प्रसाद, ३०२—प्रभाकर पाठक, २१४—विद्यादेवी, २१८—बाबूलाल पण्डित, २१९—मनोहरलाल शर्मा, ३४६—उमाशंकर प्रसाद, ३४७—बिन्दुलाल पाटवा, ३५४—हरगोविन्दलाल, ३५६—रामनरेशलाल जयसवाल, ३९९—वैद्यनाथप्रसाद साही, ४००—रामअवधशर्मा भट्ट।

## व्याकरण शास्त्री

प्रथमश्रेणी—रोल नं० ३१—वासुदेव उपाध्याय, ३६३—भोलानाथ पाण्डेय।

द्वितीय श्रेणी—३२—रामसुन्दर उपाध्याय।

## साहित्य शास्त्री

प्रथम श्रेणी—रोल नं० २०—रविशंकर द्विवेदी।

द्वितीय-श्रेणी—११—हरिप्रसाद उपाध्याय, १२—कृष्णप्रसाद शर्मा पौण्ड्याल, ७३—दुर्गाप्रसाद मिश्र, ११८—कृष्णप्रसाद तिवारी, १९५—राधेश्याम द्विवेदी, १९६—रमाशंकर मिश्र, १९७—रामगोपाल पाण्डेय, २३४—योगेन्द्रप्रसाद त्रिपाठी, १७१—बालकृष्ण मिश्र, १७२—नाथूराम पाठक, २५७—मधुसूदन भट्ट, २५८—नारायणदत्त शर्मा उपाध्याय, ५०२—रघुबीर सिंह।

## कर्मकाण्ड शास्त्री

द्वितीय श्रेणी—५०७—गोपाल शर्मा।

## ज्यौतिष शास्त्री

द्वितीय श्रेणी—५१२ गौरीशंकर शर्मा।

## वेदशास्त्री

प्रथम श्रेणी—५०९—सोमनाथ दीक्षित, ५१०—लक्ष्मीकान्त दीक्षित।

## हिन्दी-साहित्य शास्त्री

द्वितीय श्रेणी—रोल नं०—३३७—सुशीलप्रसाद सिंह, ५१३—अर्जुन चौधरी।

## व्याकरणाचार्य

प्रथम श्रेणी—रोल नं० रामपरीक्षित पाण्डेय, ७२—रामकुमार मिश्र, ५१७—बुझावन मिश्र।

## साहित्याचार्य

प्रथम श्रेणी—४८०—आर्येश्वर शर्मा।

द्वितीय श्रेणी—५१५—चन्द्रिकानन्दन द्विवेदी।

## वेदाचार्य

प्रथम श्रेणी—५११—मनोहरलालद्विवेदी, ५०८—गणेशराम त्रिवेदी।

## साहित्यरत्न

प्रथम श्रेणी—४९२—कीर्त्यानन्द झा 'किरण'।

द्वितीय श्रेणी—३६४—बलभद्रनारायण वर्मा, ३४१—नरेशमोहन झा, ३४२—वीरेन्द्रप्रसाद सिंह, ५१८—कामेश्वर मिश्र।

# आयुर्वेद परीक्षाफल

## प्रथमा

तृतीय श्रेणी—१५०—रमाकान्त पुरोहित, १५१—बाबूलाल छिपा, २४३—भवानीशंकर त्रिवेदी, ३१० घूरेलाल शर्मा।

## आयुर्वेद मध्यमा

द्वितीयश्रेणी—१९२—मुन्नालाल द्विवेदी, ५०३—भगवानदास वैद्य, ५०४—चेतराम शर्मा।

तृतीयश्रेणी—२७—जयराम शुक्ल, २८—परशुराम शुक्ल, २९—शिवदयाल त्रिपाठी, ५९—प्राणशंकर, १२१—शिवलोचन प्रसाद पाण्डेय, १५४—बाबूलाल चतुर्वेदी, १५६—लक्ष्मणदास सुरोठिया, १५७—केशरीप्रसाद सूरोठिया, १५८—किदारीलाल सूरोठिया, १५९—मयंकमोहन यादव, १६२—सुन्दरलाल शर्मा, १७३—बद्रीप्रसाद गुप्ता, १६४—युगलकिशोरगुप्ता, १७९—रघुनन्दन प्रसाद, १७२—(क) हीरालाल वैश्य, १९३—ओंप्रकाश सिंह, २२१—श्रीहार, २५२—शिवनारायण, २७९—रामधनी शुक्ल, २८०—रामेश्वर प्रसाद पाण्डेय, २८१—रामविश्वास गर्ग, २८९—लिखनलाल, २९०—मनसाराम, २९१—हरिकृष्ण गुप्त, २९३—शैलेन्द्रकुमार वर्मा, २९४—श्री जितेन्द्र प्रसाद, २९५—साहूदास, २९६—भाग्याजु बुराडे, २९७—श्रीनारायण विसेन, २९९—पारसनाथ सरकार, २९८—परमानन्द कुलश्रेष्ठ, ३०१—हीरालाल, ३०२—टीकाराम राहांगडाले, ३०३—परसराम, ३०४—चन्दनलाल पारधी, ३०५—डा० कालीचरणसिंह, ३०६—बलिराम शर्मा, ३०७—टीकमसिंह सिसोदिया, ३०६—सरवनलाल, ४४१—संकटाप्रसाद त्रिपाठी, ४४२—रामशंकर माली, ५०२—हुकुमचन्द्र जैन।

## आयुर्वेद शास्त्री

द्वितीय श्रेणी—२६५—हरिशंकरचतुर्वेदी, २६७—बद्रीनारायण, ४४५—रामावतार वर्मा, ४४९—राधेकृष्ण श्रीवास्तव, ४५१—मुरलीधर राठौर, ४५२—रामचन्द्रशर्मा, ४५४—राजनारायण अवस्थी, ४५५—भवानीशंकर मिश्र, ४५६—हरिप्रसाद द्विवेदी, ४६०—मोहनलाल, ४६३—कृष्णनारायण श्रीवास्तव, ४४७—रामनारायण सैन, ४४८—अबदुल रहमान खाँ, ४५७—रमाशंकर त्रिपाठी, ४५८—रामसिंह, ४५९—बाबूराम त्रिपाठी, ४६६—श्रीकृष्ण शर्मा, ४६७—रामचरण, ४६८—चित्तरंजनदास राठी, ४६९—तुलसीराम मिश्र।

## आयुर्वेदाचार्य

द्वितीयश्रेणी—१२४—बद्रीप्रसादद्विवेदी, १२५—शंकरलाल भट्ट, ३२४—राधेश्याम शर्मा 'दीक्षित' ३२६—चन्द्रशेखरशर्मा, ४७१—रामनारायण अवस्थी, ४७३—श्यामस्वरूप सक्सेना, ४७४—गणेशप्रसाद त्रिपाठी।

तृतीय श्रेणी—३२५—रघुनाथ प्रसाद शर्मा।

परीक्षामन्त्री

**अवधेशप्रसादशर्मा**

**अ० भा० धार्मिकाध्यात्मिक संस्कृत विद्यापीठ**

महामण्डल-भवन, वाराणसी।

# The Culture of Sanatanitsts

*(By His Holiness Pujyapad maharshi Shri Gyananand ji maharaj)*

—❋—

The Dharma of Sanatanists is all pervading and conducive to good of all. Their sociology is unique and of a singular type to all other sociologies of the civilized world. Their sociology has peculiarities of its own. Their Adhyatmik ( spiritual ), Adhidaivik ( occult ) and Adhibhowtik (worldly) beliefs, their hoary culture and their civilization built on religious grounds have all their own peculiarites. The former Acharyas (Spiritual guides) had given their full consideration to Kama (sensual pleasures), Artha ( wealth ), Dharma (Religion) and Moksha ( salavation ) and the Sanatanists regard Dharma to be the main objective of life and they believe in the principle that it is through Dharma that the other three objects can also be achieved. The Sanatan Dharmis always have a spiritual aim in view and it is in keeping with this main aim of theirs that they are ordained to have a Shikha (truft of grown hairs) on the top of their heads. They consider the Shikha to be a Devamandir (temple) and they make it an abode of Devas (the occult Governors) by their 'Dharma' ( devotional practice ). It has also been said by Bhagwan Shri Krishna in Shrimad Bhagwatgita that one should always keep one's mind on higher planes and never allow it to fall down. The Sanatanists believe in the principle that those endowed with Daivi Sampatti ( occult properties ) have their minds attached towards spiritual progress whereas those with Asuri sampatti (Devilish properties) devote their minds to sensual pleasures. It is with a view to increase the Daivi Sampatti ( occult properties ) that the Sanatanists devote their lives to Yajna ( sacrifices ). The sacred thread which twice-born classes wear is an emblem of this kind of dedication ef their life to Yajna means those religious and secular activities which are undertaken for the propitiation of Shri Bhagwan, God and the fruits of which reaches the occult world and becomes source of strengthening the Devas—the occult governors. The ideal is that all secular deeds of Sanatanists should be by way of Yajna It is a sin for the Sanatanist

women to think of any other man except her own husband. In them is always preserved the seed of Satittwa ( chasty ). This is because the Sanatan Dharma sttictly prohibits the acceptance of second husband a in higher castes. Tha Arya Mahila Sati, who regards her husband as her very life, purifies the three Lokas (the whole universe). Consequently a virgin is worshiped as Jagadamba (the Almighty Mother) A Subhashini, *i. e.*, a married Aryamahila is not only an object of worship but the Dharma shastras enjoin us to pay obesance in our mind to married Arhamahilas wearing different coloured apparel as special deities. A widowed Aryamahila deserves to be respected as a Sannyasi. Just as Sannyasis do not join the secular ceremonies, viz., marriage etc , the widows also refrain from doing so. They are regarded as recluse Sannyasinis. Though the purity of the married is respected in some nations in the present age yet the extreme purity of married couple is preserved in the Aryans the progressive spirtual race of humanity by means of the restrictions regarding marriage system and caste system (household duties) according to Dharma Shastras. The prayars prevalent in other nations of the world often consist of prayers for worldly objects of enjoyment such as food etc. but for the Sanatanist Aryans even Gayatri which is the stepping stone of Upasana contains a prayer for the purification of Buddhi-tattwa (the Intellect) only. The idea of purity is at a very high level among the Sanatanists. They have to observe it even in respect of their own body in order to maintain the prominence of Sattwa guna ( purifying element ) in their daily routine of life; for instance, a napkin which has been once used to rub dry the parts of body lower than the naval connot be used to rub dry tbe parts above nayel without first cleansing it by washing it with water. The Dwijas (Brahmins, Kshattriyas and Vaishyas) wear the sacred consisting of three threads with a view to commemorate the three kinds of purity, viz., Adhyatma ( spiritual ), Adhidaiva ( occult ) and Adhidhuta (physical). Thoughtful people alone can comprehend how have the imperative needs of service to their motherland and punctuality of time been emphasized amongst the the Sanatanists in the form of purity of household life and the observance of Sandhya three times a day. The Sanatani Aryan culture recognises; many kinds of Vriddhas ( venerables ). Thus there are Jnan-

Vriddhas (people to be respectd for there knowledge), Tapovriddeas (people to be respected for their austerities), Paryaya Vriddhas (people to be respected for seniority) Shilvriddhas (people to be respected for modesty), Vayovriddhas (respectable only for age) etc. The Jnan-Vriddhas out of them are regarded the most venerable ones. All other nations of the world are simply astonished to see the special worship which is enjoined for parents and elders according to the culture of Sanatanists. The present civilized nations of the world cannot even dream of the highly religious and cultural behaviour enjoined strictly on the Sanatanists even with respect to their enemies during the time of actual hostilities. To illustrate this it will suffice to quote an instance form the Puranas. When the unparalleled warrior Aryuna set fire to the Khandawa forest through his fire-arms, Maya-Danawa, the king of Asuras was encircled with the blazing fire and he began to cry aloud for help compassionately, Thereupon Bhagwan Shri Krishanachandra directed Aryuna the best among warriors to save the king of Danawas through his water-arms. When Maya-Danawa was thus saved of his life he was very grateful to Aryuna and begged his leave to present some Danawastras (weapons peculiar to Danawas) to Aryuna in token of his gratefulness to him for saving his life. On being enquired by Aryuna the Danawaraj told him that through the help of those Danawastras (weapons) he could destroy his enemies while keeping himself invisible in the sky, could wreck every-thing above water while keeping himself hidden under the water, and could even cause the world to perish keeping himself away unseen at a distance of many miles. These were weapons of war very similar to those in use during the present warfare. But Aryuna replied smilingly : "I am an Arya and do not carry on warfares in a hidden manner, neither do I attack an enemy when he is retreating nor do I carry on warfares against he sanction of Dharma. Hence these weapons are of no use to me" This story from Purana reveals the high principles followed by the Sanatanists Arya nation on the battle-field. Though the present Ministry or our benign Emperor is carrying on the present European War with great patience for which they deserve the praise and sympathy of every wise person, but it is easy to imagine the opinion of the Sanatanists on the present method of warfares in view of the religious

war policy of the Sanatanists which is evident from the above story. According to the hoary culture of the Sanatanists man is regarded as seed and woman as field. Consequently the rights, Dharma (duties) and education of both man and woman differ. the Vedas and Dharma Shastras and other Shastras of the Sanatanists have been supported and strengthened by the seven systems of philosophy. The seven planes of knowledge and the seven systems of philosophy of the Sanatanists are held at a very great esteem. It is belived that through the help of the seven systems of philosophy an Atmajnani ( knower of self ) can realies the various aspects of the subtle world just as a man can see everything in the objective wrold through his eyes. The Atmajnani can also realise the Paramatma, God. The acquisition of the fourfold forces, viz. physical, financial, educational and religious —and the desie of the fourfold objects,, viz.,, Kama (sensual pleasures), Artha ( wealth) , Dharma ( religion ) and Moksha ( Salvation ) are according to the Sanatanists all meant for the realization of Paramatma, God.

---

## श्री भारतधर्म महामण्डलके उपदेशक महाविद्यालयकी परीक्षामें उत्तीर्ण छात्रोंकी नामावली :—

### सम्वत् २०१७ तदनुसार १९६० ई०

| | | | |
|---|---|---|---|
| **उपदेशक प्रथम वर्ष :—** | | | **श्रेणी** |
| १—श्री बजरङ्गदेव द्विवेदी | ... | ... | प्रथमश्रेणी |
| २—श्री अवधेश कुमार शास्त्री | ... | ... | द्वितीय ,, |
| ३—श्री रामनारायण उपाध्याय | ... | ... | ,, ,, |
| ४—श्री देवीप्रसाद शुक्ल | ... | ... | ,, ,, |
| ५—श्री सन्मुख ब्रह्मचारी | ... | ... | प्रथम ,, |
| ६—श्री भागवतदास शर्मा | ... | ... | द्वितीय ,, |
| **उपदेशक द्वितीय वर्ष—** | | | |
| १—श्री गौरी शंकर एम० ए० | ... | ... | प्रथम श्रेणी |
| **महोपदेशक प्रथम वर्ष—** | | | |
| १—श्री सन्तदास श्रीवैष्णव | ... | ... | प्रथम श्रेणी |
| २—श्री अभिरामदास श्रीवैष्णव | ... | ... | ,, ,, |
| **महोपदेशक द्वितीय वष—** | | | |
| १—श्री आर्येश्वर शर्मा | ... | ... | द्वितीय श्रेणी |
| २—श्री रामानुज पाण्डेय | ... | ... | उत्तीर्ण |

**हरिवल्लभदास शास्त्री**
प्रधानाचार्य

# श्रीभारतधर्म महामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशितपुस्तकानि

## श्रीस्वामि दयानन्द महाराज द्वारा रचितानि—

| | |
|---|---|
| १—धर्मकल्पद्रुम प्र० ख० | २) |
| २—धर्मकल्पद्रुम द्वि० ख० | १।।) |
| ३—धर्मकल्पद्रुम तृ० ख० | २) |
| ४—धर्मकल्पद्रुम च० ख० | २) |
| ५—धर्मकल्पद्रुम प० ख० | २) |
| ६—धर्मकल्पद्रुम ष० ख० | ३।।) |
| ७—धर्मकल्पद्रुम स० ख० | २) |
| ८—धर्मकल्पद्रुम अ० ख० | ३।।) |
| ९—धर्मकल्पद्रुम, प्रथम द्वितीय खण्ड एक साथ रायल एडी० | ५) |
| १०—प्रवीण दृष्टिमें नवीन भारत प्र० ख० | २) |
| ११—प्रवीण दृष्टिमें नवीन भारत द्वि० ख० | २) |
| १२—नवीन दृष्टिमें प्रवीण भारत | १) |
| १३—साधनचन्द्रिका | १।।।) |
| १४—शास्त्रचन्द्रिका | १।।) |
| १५—धर्मचन्द्रिका | १) |
| १६—आर्यगौरव | ।।) |
| १७—नीतिचन्द्रिका | ।-) |
| १८—धर्मप्रश्नोत्तरी | ।) |
| १९—चतुर्दशलोक रहस्य | ।) |
| २०—गीतार्थचन्द्रिका सजिल्द ३) अजिल्द | २।।) |
| २१—सनातनधर्मदीपिका | ।।।) |
| २२—धर्मविज्ञान प्र० ख० | ५) |
| २३—धर्मविज्ञान द्वि० ख० | ४) |
| २४—धर्मविज्ञान तृ० ख० | ४) |
| २५—सती चरित्रचन्द्रिका | २) |
| २६—नित्यकर्म चन्द्रिका | ।) |
| २७—धर्मसोपान | ।) |
| २८—धर्मकर्म-दीपिका | ।) |
| २९—सदाचार सोपान | —) |
| ३०—कन्याशिक्षा सोपान | —) |
| ३१—ब्रह्मचर्य सोपान | ।) |
| ३२—साधन सोपान | ।।) |
| ३३—शास्त्र सोपान | ।) |
| ३४—उपदेशपारिजात | ।।) |
| ३५—कल्किपुराण | १।।) |
| ३६—पातञ्जलयोगदर्शन | २) |
| ३७—महामंडल रहस्य | १।।) |
| ३८—मन्त्रयोगसंहिता | १) |
| ३९—हठयोगसंहिता | ।।) |
| ४०—तत्वबोध | =) |
| ४१—स्तोत्र कुसुमाञ्जलि | ।) |
| ४२—भगवद्गीता प्रथम खंड | १) |
| ४३—विष्णुगीता | १) |
| ४४—सूर्यगीता | ।।) |
| ४५—शक्तिगीता | १) |
| ४६—धीशगीता | ।।।) |
| ४७—शंभुगीता | १) |
| ४८—संन्यासगीता | १) |
| ४९—गुरुगीता | ।) |
| ५०—कर्ममीमांसादर्शन प्र० ख० | १।।) |
| ५१—कर्ममीमांसादर्शन द्वि० ख० | २) |
| ५२—कर्ममीमांसादर्शन तृ० ख० | ५) |
| ५३—कर्ममीमांसादर्शन ( संस्कृत ) | २) |
| ५४—रामगीता | २।।) |
| ५५—कहावत रत्नाकर साधा० राय० | १०) |
| ५६—रामायण तुलसीकृत | १।।) |
| ५७—दैवीमीमांसादर्शन प्र० भा० | ३।।) |
| ५८—दैवीमीमांसादर्शन द्वि० भा० | ५) |
| ५९—त्रिवेदी सन्ध्या | ।=) |
| ६०—गोव्रत-तीर्थमहिमा | ।-) |
| ६१—मार्कण्डेय पुराण प्र० ख० | १) |
| ६२—मार्कण्डेय पुराण द्वि० ख० | १) |
| ६३—मार्कण्डेय पुराण तृ० ख० | १) |
| ६४—ऋजुपाणिनीयम् | ।।) |
| ६५—संगीत सुधाकर | ।) |
| ६६—पुराणरहस्य | १।।) |
| ६७—संन्यासधर्मपद्धति | १।।) |

सम्पादकः प्रकाशकश्च—अवधेशप्रसादशर्मा, श्रीभारतधर्ममहामण्डल, जगतगंज, वाराणसी कैंट।
मुद्रक :—श्रीपरेशनाथ घोष, सरला प्रेस, बनारस—१.



# सूर्योदयः

( श्रीभारतधर्ममहामण्डलस्य मासिकं मुखपत्रम् )
( वार्षिकमूल्यम् अग्रिमं मुद्रात्रयम् )

## चिरं किं कुर्यात् ?

चिरेण मित्रं बध्नीयाच्चिरेण च कृतं चरेत् ।
चिरेण हि कृतं मित्रं चिरं धारणमर्हति ॥

रागे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥

बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥

चिरं वृद्धानुपासीत चिरमन्वास्य पूजयेत् ।
चिरं धर्मान्निषेवेत कुर्याच्चान्वेषणं चिरम् ॥

चिरमन्वास्य विदुषश्चिरशिष्टानुपास्य च ।
चिरं विनीय चात्मानं चिरं चात्यनवज्ञताम् ॥

ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम् ।
चिरं पृष्टोऽपि च ब्रूयाच्चिरं न परितप्यते ॥

—श्रीमहर्षिर्वेदव्यासः—

( महाभारतम्, शान्ति० २६६, ६९-७१, ७५-७७ )



# संक्षिप्तमितिवृत्तम्

# स्वर्गीय श्रीयमुनाप्रसादत्रिपाठिमहोदयानाम्

—श्री केदारनाथ त्रिपाठी—

[ प्राध्यापकः राजकीय संस्कृत महाविद्यालयः, भागलपुरम् ]

अनाद्यनन्तेऽस्मिन् संसारप्रवाहे कोऽसौ लोको यो भगवता कालेन नास्ति समाक्रान्तः ? कोऽसौ देशो यत्र न दृश्यतेऽनुल्लङ्घनीय आदेशः कालशासकस्य ? किं तद्राज्यं यत्र न राजते महाकालसाम्राज्यम् ? को नाम जनो यो नानुसरति कालनृपनीतिम् ? को वाऽसौ प्राणी यः क्षणमपि प्राणिति कालपरिपीतायुष्कः ? तस्मिन्नेव प्रभवति भगवति महाकाले एतदितिवृत्तविषयभूताः स्वनामधन्याः पण्डितशिरोमणयः श्रीयमुनाप्रसादशर्मत्रिपाठिनोऽब्देऽस्मिन् कार्तिक-शुक्लाष्टम्यां मायामयमिमं संसारं नश्वरञ्च कायं विहाय दिवङ्गता अभूवन्निति नूनमयं पण्डितसमाजस्य भूयान् मर्मन्तुदो विषयः । मृत्युकाले ते पञ्चसप्ततिवर्षायुष्का अभूवन् ।

स्मरणीयाभिधाना अनुकरणीयाचरणाः विश्रुतवैदुष्यास्च ते पण्डितमहानुभावाः शतशश्छात्रान् विद्याचार-सम्पन्नान् व्यदधुरिति वस्तुतस्तेऽभूवन् गुरुपदवाच्या विद्यार्थिनिवहस्य । विद्वत्सु विरला एव ते भवन्ति भाग्यशालिनो येषामात्मजा अपि त इवैव भवन्ति विद्वांस आचरवन्तश्च । तेषामेक एवात्मजः पण्डितश्रीगङ्गाधरत्रिपाठी विभिन्न-विषयेष्वाचार्यः स्वपितुः स्थान एव धर्मशास्त्रपुराणाध्यापकत्वेन मुजफ्फरपुरस्थे धर्मसमाजसंस्कृतमहाविद्यालये नियुक्तश्चतु-र्दशवर्षाणि यावत्तत्राध्याप्येदानीं भागलपुरस्थराजकीयसंस्कृतमहाविद्यालये प्राध्यापयति । एवं विद्याचारपरम्परा च्वत-मनीषिणां तदात्मजे यथावद् वर्तमानैव तत्पौत्रेष्वपि प्रवर्तमाना नूनमानन्दयति विद्वदन्तःकरणानि । येषु ज्येष्ठो वाचस्पतिरिदानीं धर्मशास्त्रविषये आचार्यपरीक्षाम् आङ्गलविषये च बी० ए० परीक्षां दातुमुद्युङ्क्ते ।

छपरामण्डलान्तर्गत-त्तकीपुराभिधानग्रामवास्तव्याः उक्तपण्डितवर्यास्त्रयश्चत्वारिंशदधिकैकोनविंशतितमस्य वैक्रमसंवत्सरस्य श्रावणकृष्णाष्टम्यां परमसाध्व्यां श्रीरामझड़ीदेव्यां परमभागवतात् पण्डितरामगोविन्दत्रिपाठिनो लब्धजन्मानः पूर्णे पञ्चमे वर्षे कृताक्षरारम्भा गृह एव प्रारम्भिकीं शिक्षां समाप्यैकादशे वर्षे एवायोध्यां गतवन्तस्तत्र व्याकरणादिशास्त्रे विशिष्टविदुषः पण्डितश्रीरामाज्ञात्रिपाठिनो व्याकरणं न्यायशास्त्रञ्च विधिवदधीत्य सप्तदशवर्षावस्थायां १९०२ तमे ख्रीस्ताब्दे स्वपितुरकस्मात् स्वर्गमनादयोध्यां परित्यज्य गृहे समुपागमन् । तत एव तेषामध्ययनबाधा समजनि । एवमुप-स्थितेऽप्यध्ययनविधिविघ्ने १९१६ तमख्रीस्ताब्दं यावत् गृह एव निवसन्तः स्वतन्त्ररूपेण व्याकरणादि विषयेषूपाध्याय-परीक्षाः समुत्तीर्य, स्वाध्यायबलेन धर्मशास्त्राणि च विधिवदालोड्य धर्मशास्त्रविषयेऽप्युपाधिपरीक्षामुत्तीर्णवन्तः । एतद-वधावेव ते कतिपयकालान् पाटलिपुत्रेऽवस्थाय स्वर्गीयात् पण्डितपञ्चाननात् महामहोपाध्यायपदवीकात् श्रीहरिहरकृपालु-द्विवेदिमहोदयाद् वेदान्तशास्त्राध्ययनमपि समपीपदन् । एतदवधावेव च प्राच्यप्रतीच्योभयविद्योदयेनालौकिकप्रतिभासम्पन्न-त्वेन च विश्वविश्रुतनामधेयेभ्यो महामहोपाध्याय-स्वर्गीय-पण्डितश्रीरामावतारशर्ममहानुभावेभ्यो बहुधा तत्सान्निध्यभाज उक्तपण्डितप्रवराः कदाचित् छात्रसंसदि दर्शितनिजप्रतिभाका अत एव परमप्रसन्नेभ्यस्सद्भ्यः सरस्वतीयन्त्ररहस्यमध्यग-

शेषांशः आवरणस्य तृतीय पृष्ठे

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य मासिकं संस्कृतं मुखपत्रम् ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

वर्षम्—३८ ] पौष-माघ-फाल्गुनाः, २०१८ वै० जनवरी, फरवरी, मार्च, १९६२ ई० [ अङ्काः—१, २, ३

## धन्या भारतधर्ममहामण्डलसभा !

-१-

स्वर्गीयेण महर्षिणा भगवता संस्थापिता सादरं
धन्या भारतधर्ममण्डलसभा काश्याञ्च विभ्राजते ।
यस्यामेव सदोपदेशक-महाविद्यालयो राजते,
पत्रं निःसरतीशभक्तिभरितं यस्याश्च 'सूर्योदयः' ॥

-२-

विश्वेऽस्मिन्भयवारणाय कुरुते या धार्मिकाणां सता-
मन्वर्थं सततञ्च यत्नममलं विद्याभिधा देवता ।
यस्याश्चैव निदेशपालनविधौ लग्नाश्च विद्वद्वराः
सेयं भारतधर्ममण्डलसभा मध्ये चिरञ्जीवतात् ॥

श्री चन्द्रिकाप्रसाद पाठकः
साहित्यरत्न, व्याकरण-साहित्य-पुराणाचार्यः

*सम्पादकीयम्*

## पुनश्च मासिकं रूपम्

सनातनधर्मसंरक्षणार्थं धृतव्रतानां संस्कृतानुरागिणां स्वर्गतानां विविधविरुदावलीविराजमानमानोन्नतमहाराजाधिराजकाशीनरेशानाम् आदित्यनारायणसिंहमहोदयानां करकमलेभ्यः सहर्षं ससमारोहं समुद्घटितः सूर्योदयः पञ्चत्रिंशद्वर्षेभ्यः सर्वविधसमृद्धिशीलायाः सर्वभाषाजनन्याः संस्कृतभाषायाः समुन्नतये सर्वत्र प्रचाराय च सततं प्रयतमानस्तिष्ठति। कालगत्या पाक्षिक-मासिक-त्रैमासिकरूपेषु प्रवर्तमानस्यास्य प्रकाशनं नाद्यावधि कदाप्यवरुद्धम्।

अखिलभारतीयविराड्धर्मसंस्था, श्रीभारतधर्ममहामण्डलद्वाराऽयं सञ्चालितः प्रकाशितश्च भवति । संस्कृतप्रणयी भारतीय-राजन्यवर्गोऽस्य संरक्षकः सहायकश्चासीत्। परन्तु सौभाग्यात्-स्वतन्त्रतामुपगतवति भारतवर्षे राज्यानां विलयादयमपि विलयमुपगतप्रायः कञ्चित्संरक्षकं प्रतीक्षमाण एवासीत्तावद्भारतीयशासनेन संस्कृतभाषायाः समुद्धारे ध्यानं दत्तम्। केन्द्रियशासनेन संस्कृतभाषायाः पत्रेभ्यः पत्रिकाभ्यश्चार्थसाहाय्यं दातुं प्रतिज्ञातम्। एतत्फलस्वरूपम् अन्यपत्रपत्रिकाभ्य इव सूर्योदयायापि तेन केन्द्रियशासनेन अर्थसाहाय्यं प्रदत्तम् । अतो द्विषष्ट्युत्तरैकोनविंशतिमितेशवीये वत्सरस्य (१९६२) जनवरीमासत एव सूर्योदयस्य प्रकाशनं पुनः मासिकरूपेण कर्तुमस्य संचालकैर्निश्चितम्। आशास्यते राजकीयसाहाय्यमुत्तरोत्तरं वृद्धिं गमिष्यति, येन सूर्योदयोऽखिलायामिलायां संस्कृतस्याभ्युत्थानं प्रचारञ्च सम्यक्रूपेण विधातुं प्रभविष्यति ।

## आत्म-निवेदनम्

महामण्डलद्वारा सञ्चालितः सूर्योदयः धार्मिकपरीक्षाद्वारा सनातनधर्मस्य संस्कृतभाषायाः संस्कृतानुरागिजनतायाश्च सेवां कुर्वाणः संस्कृतसमाजे बहोः कालात् सम्भावनभाजनतां भजते। सूर्योदयद्वारा भारतस्य प्रतिप्रान्तं प्रतिमण्डलञ्च संस्कृतप्रचारे महत्साहाय्यमुपलब्धम् । समस्ते भारते प्रचलितायाः सर्वमान्यायाः काशिकराजकीय-संस्कृतमहाविद्यालय - ( इदानीं वाराणसेयसंस्कृत विश्वविद्यालय ) - परीक्षायाः परीक्षाफलं पूर्वं प्रतिवर्षं नियमतः सूर्योदये प्रकाशितं भवति स्म। एवमन्यविविधैरुपायैः संस्कृतभाषायाः सनातनधर्मस्य प्रचारप्रसारयोः संलग्नः सूर्योदयः सर्वस्पृहणीयतामुपगतः।

कार्याधिक्याद् वयोबाहुल्याद्रोगाक्रान्तत्वाच्च सश्रमं कार्यं कर्तुमशक्यत्वेन अत्यन्तप्रियकार्ये सूर्योदयप्रकाशने महान् विलम्बो जातः । अतः कृपालुभिः सूर्योदयग्राहकैः कृपालुहितैषिभिश्च कृपया क्षन्तव्योऽयञ्जन इति भूयोऽभूयो निवेदयामि प्रतिजाने च यदितः परं सूर्योदयः प्रतिमासं नियतसमयेऽवश्यं प्रकाशयिष्यते इत्यत्र नास्ति काचित् संशीतिरिति ।

—सम्पादकस्य

# मनोभिलाषः

( श्री रामस्वरूप शास्त्री "अमरः" तालबेहटस्थः )

प्रसरतु लोके संस्कृतभाषा।
देवतुल्या यस्या वै दासाः॥

( १ )

संस्कृति-सम्पोषकाः सुशीलाः, संस्कृतज्ञा दीनाः।
शिवाश्रये तिष्ठन्ति स्वदेशे, यथा निर्जले मीनाः॥
सम्वलं सत्यं केवलमाशा।
प्रसरतु लोके संस्कृत-भाषा॥

( २ )

यस्या भाग्यशालिनो भक्ताः परमदुःखिनो जाताः।
कुत्र जवाहरो लालस्तेषां सन्ति सुरा अवदाताः॥
देवगीर्येषां स्वयं प्रकाशा।
प्रसरतु लोके संस्कृत-भाषा॥

( ३ )

यावत्प्रसरति नैव प्रतिगृहं पूता संस्कृतवाणी।
नैव मिलिष्यति शान्तिरतो विज्ञेया जनकल्याणी॥
दुःखदाऽस्ति पिशाचिनी पिपासा।
प्रसरतु लोके संस्कृत-भाषा॥

( ४ )

अमरभारतीजुषां समाजे भूयादतिसम्मानम्।
विभो! विस्मृतं किं देवानां त्वया साम्प्रतं ध्यानम्॥
एतादृशी क्व मृदुला भाषा?
भोजकालीना कुतो विभा सा?



# संस्कृतज्ञा अध्यापकाः संघीभवन्तु

( श्री रामस्वरूप शास्त्री "अमरः" तालबेहटस्थः )

अस्माकं पूर्वजैः पूतमानसैः पण्डितैर्यदुक्तं तन्नासत्यमिति प्रतीयते। तैर्निगदितं यत्—

"निराश्रिता न शोभन्ते पण्डिता वनिता लताः।"

आश्रयहीनाः पण्डिताः कथं सुखं प्राप्तुं शक्नुवन्ति ? बहूनां विजातीयानां शासनानि जातानि भारते वर्षे। किन्तु नासीदेतादृशी दशाऽस्माकम्, यादृशी शासनेऽस्मिन्वर्तते। तत्र यावद् भवति संस्कृतसमुन्नत्यै तत्र तावद् अस्माकं भाग्येषु न लिखितमस्ति तल्लाभः ? तल्लाभस्तु महाननानां शासकसुहृदां नागरिकमुष्टि-प्रमेयानां संस्कृतज्ञानामेव भवति। शुष्क-रूक्षान्नमु-पभुञ्जानो वयं परदेशवासिन इव परमुखापेक्षिणो भूत्वा यथाकथञ्चिज्जीवाम इति। निर्मिता वाराणस्यां संस्कृतविश्वविद्यालयनाम्नी संस्कृतसंस्था। तस्यां ये सन्ति संलग्नाः सज्जनाः संस्कृतज्ञास्तेषां स्यादेव परमो लाभः। किन्तु ग्रामीणा अर्थविहीनाः संस्कृत-ज्ञास्तु नितान्तमुपेक्षिता इव सन्ति। श्रूयते संस्कृत-पाठशालानां विभागीकरणमपि सञ्जातम्। परन्तु महानगरी-संस्थिताः संस्कृतसंस्था एवं काश्चिद् विभागीकरणेन समुन्नता भविष्यन्तीति प्रतीयते। अस्माकं भाग्यं तु वर्तते पलाशपत्रमिव, यतः "अहर्निशं वर्षति वारिवाहस्तथापि पत्रत्रितयं पलाशः।" यत्र कुत्रापि किञ्चिदपि भवतु, कः पृच्छति दीनान् ग्रामीणान् संस्कृतज्ञान् संस्कृतसेवकान् वा ? ये परस्परं सम्बद्धाः शासकवर्गदृष्टिपथमायाताः सन्ति केचित्संस्कृतपण्डिता-स्तेषामेव भाग्यं जागृतमस्ति। वयं तु—

"स्वयं महेशः श्वशुरो नगेशः
सखा धनेशश्च सुतो गणेशः।
तथापि भिक्षाटनमेव शम्भो-
र्बलीयसी केवलमीश्वरेच्छा॥"

इतिवत् भाग्यहीना दीनाः सन्तः संस्कृतभाषां प्राणधारिणीं जननीमिव गृहीत्वा जीवामः। ये शासनकृपयाऽधिकारिणामनुकम्पया वा साम्प्रतं लाभान्विताः संस्कृतविभागे, तेऽपि दीनानस्मान् विस्मृता एवेति प्रतीयते। नास्ति संस्कृतज्ञानां संगठनम् तादृशं यादृशं वर्ततेऽस्माकमुत्तरप्रदेशे उच्चतरमाध्यमिकविद्यालय-शिक्षकानाम्। अत्र तु "स्वार्थं तु साधयेत् प्राज्ञः" इयमेव पद्धतिः प्रारब्धा इति मन्ये। यदि दशैषा अग्रेऽपि संचलिष्यति तदा ग्रामीणसंस्कृतज्ञास्तु मृता एव स्युः। ग्रामीणसंस्कृत-पाठशालाश्चापि तदा भगवदधीना एव स्युरिति ज्ञेयम्। भो भो !! आशारहिताः ! भूसुराः संस्कृत-संरक्षकाः, नागरिकाश्च सुरभारतीसमुपासका विद्वांसः ! अस्मान् दीनान् विहाय स्वार्थपरम्परा न दूषितव्येति।

"दरिद्रान् भर कौन्तेय !
मा प्रयच्छेश्वरे धनम्॥"

इत्येतदेव शासककर्त्तव्यमस्माकञ्च निवेदनमस्ति। संस्कृतसेवकानामर्थपरम्परा शोचनीया।

संस्कृतपरीक्षोत्तीर्णाश्छात्राः संस्कृतज्ञाश्च राजकीय-पदेषु शिक्षणविद्यालयेषु वा यदा स्थानं न प्राप्नुवन्ति

तदा हताशास्ते स्वसन्ततिं संस्कृतं पाठयितुं नेच्छन्ति। एतादृशो विकरालः कालः संस्कृतस्य संस्कृतज्ञजनानां भाग्येषु लिखित आसीत् किम्? कथितमस्ति यत्—"संघे शक्तिः कलौ युगे"। अतः सर्वैः संस्कृतज्ञैरध्यापकैश्च भारतवर्षे स्वीयः संघः स्थापनीयः। यस्मिन् संघे कर्मठा आशावन्तः सज्जनाः संस्कृतज्ञानां दीनानां समुन्नतये संलग्ना ग्रामे-ग्रामे नगरे-नगरे प्रचारं विधायोपेक्षितानां संस्कृतज्ञानां समुन्नतिं कर्तुं बद्धपरिकरा भवेयुः। यदा संगठनं भविष्यत्यस्माकं तदैव सुखं यशो वा प्राप्स्यतेऽस्माभिर्नान्यथा। अतः सर्वे संस्कृतज्ञा दत्तावधानाः सन्तः संघनिर्माणाय समुन्नताः स्युरित्येषा प्रार्थना।

# मदीया दक्षिणभारत-यात्रा

[ श्री पं० वासुदेव द्विवेदी, साहित्याचार्यः, वेदशास्त्री ]

( क्रमागता )

## पेरुम्बुदूर ( भूतपुरी )

२३-१-५१

विशिष्टाद्वैतमतप्रवर्तकस्य भगवतः श्रीरामानुजाचार्यस्य जन्मभूमिरिदं स्थानम्। अत्र उभयवेदान्तवर्धिनी पाठशाला वर्तते यत्र नामानुसारं संस्कृतवेदान्तशास्त्रस्य तमिलवेदान्तस्य च अध्यापनं भवति। विद्यालयभवनं छात्रावासः छात्राणां भोजनादिव्यवस्था च समीचीना वर्तते।

## काञ्जीवरम् ( काञ्चीपुरी )

२५-१-५१

इयं नगरी मोक्षदायिकासु सप्तपुरीषु अन्यतमा। अस्याः शिवकाञ्ची विष्णुकाञ्ची चेति द्वौ विभागौ वर्तेते। तत्र शिवकाञ्च्यामेव श्रीमदाद्यशङ्कराचार्यभगवत्पादप्रतिष्ठितेषु चतुर्षु पीठेषु अन्यतमं कामकोटिपीठं नाम अत्रैव शिवकाञ्च्यां वर्तते। एतत्पीठाधीश्वराः जगद्गुरवः श्रीचन्द्रशेखरसरस्वतीपादाः एतस्मिन् प्रदेशे वेदशास्त्रसंरक्षणाय निरतिशयं बद्धादराः। दक्षिणभारतस्य बहुषु नगरेषु संस्कृतपाठशालानां सञ्चालनेन, विद्वद्गोष्ठीनां समायोजनेन, वेदभाष्यपरीक्षाप्रवर्तनेन विदुषामाश्रयसम्मानादिप्रदानेन तथा तमिलभाषानुवादेन सह बहूनां संस्कृतग्रन्थानां प्रकाशने च इमे एव मुख्यतमाः संरक्षका इत्यत्र नास्ति संशयलेशोऽपि। एतेषामेव संरक्षणे अत्रापि एका पाठशाला प्रचलति।

विष्णुकाञ्च्यामपि एका वेदवेदान्तपाठशाला वर्तते। अस्याः सञ्चालकाः वैष्णवाचार्याः प्रतिवादिभयङ्करेति विरुदभाजः पण्डितप्रकाण्डाः श्रीअण्णङ्गराचार्यमहोदया वर्तन्ते। एते शताधिकानां संस्कृततमिलतेलगूग्रन्थानां लेखकाः, वैदिकमनोहरानाम्न्या मासिकपत्रिकायाः सम्पादकाः, काव्यकलाप्रवीणाः, प्रवचनपटवः, शास्त्रार्थकुशलाः स्वाभिमानिनश्च महीयांसो विद्वांसः सन्ति। एतेषां गृहे प्रतिदिनं वेद-वाल्मीकिरामायण-श्रीमद्भागवत-दिव्यप्रबन्धादिग्रन्थानां नियमेन पारायणं प्रचलति।

अस्मिन् नगरे संस्कृतएकेडमी-नाम्ना एका परिषदपि वर्तते, यस्याः कार्यदर्शिनः श्रीराजमार्तण्डशास्त्रिणो वर्तन्ते। एते तत्रत्येषु संस्कृतज्ञेषु अतितरामुत्साह-सम्पन्नाः कार्यदक्षाश्च विद्वांसः सन्ति।

अस्मिन् नगरे मया एकस्मिन् दिने प्रतिवाद-भयङ्कराणां तथा एकस्मिन् दिने श्रीराजमार्तण्ड-शास्त्रिणां गृहे निवासो विहितः।

## मदुरान्तकम्

२७-१-२१

अत्र अहोबिलमठकलाशाला-नाम्ना एकः सर्व-साधनसम्पन्नः सर्वाङ्गरमणीयश्च संस्कृतमहाविद्यालयो वर्तते। तत्र वेदव्याकरणसाहित्यदर्शनादिविषयाणा-मध्यापनं भवति। अध्यापकसंख्या द्वादश तथा छात्र-संख्या च पञ्चपञ्चाशत् वर्तते। प्रधानाचार्याः श्रीराम-स्वामी आयङ्गर एम० ए०, एल० टी० महोदयाः कुशलाः अध्यापकाः सन्ति। सहायकाध्यापकेषु वैयाकरणाः श्रीराघवाचार्यशिरोमणयः श्रीरंगशठकोपवैभवसुधा-भिधानकाव्यलेखकाः 'सरल-कविता'-विरुदभाजः प्रवीणाः कवयः सन्ति। अत्रत्या विद्यार्थिनो विशेष-रूपेण अध्ययनशीला उत्साहवन्तः आचारसम्पन्नाश्च। अत्र इयमपि एका विशिष्टा रीतिरवलोकिता यत् छात्रा गृह्यसूत्रोक्तदिशा स्वगोत्रप्रवरशाखासूत्रादि-निर्देशपुरस्सरं गुरुजनानभिवादयन्ते। इदं च तत्र मया एकं नूतनं वृत्तमवलोकितं यत् काव्याध्ययनकाले यस्मिन् दिने यः कश्चन विशिष्टप्रसङ्गः पठ्यते तस्मिन् दिने तदनुरूप एव उत्सवोऽपि विधीयते तत्कक्षास्थितैः छात्रैः। यथा श्रीरामजन्मपठनदिने रामजन्मोत्सव-समारोहः। एवमेव अत्रत्या छात्रसभा तथा तया समर्पितमभिनन्दनपत्रमपि छात्राणामुत्साहविशेषं द्योतयति। अत्रत्ये छात्राध्यापकसमूहे अहोरात्रं निवासेन, सम्भाषणेन सहैवाहारग्रहणेन च अहं नितान्तं प्रमुदितोऽभूवम्।

## चिदम्बरम्

२१-१-२१

इदमेकं मद्रासप्रदेशस्य सुप्रसिद्धं तीर्थस्थानं वर्तते, यत्र विशाले मन्दिरे भगवतो नटराजस्य दिव्या मूर्तिर्विराजते। अत्र एम० एस० पाठशाला-नाम्ना एकः संस्कृतविद्यालयो वर्तते। अत्र एका सुहृत्सभा नाम्नी संस्कृतपरिषदपि वर्तते, यस्या वर्तमानाध्यक्षाः श्रीसोमसेतुदीक्षितमहोदयाः सन्ति। एकं पुस्तकमपि अनया सभया प्रकाशितम्। अत्र सरसकविराजेति विरुदभाजः कविमार्तण्ड श्री एन० एस० चिदम्बरेश्वर दीक्षितमहोदयाः कवयः सन्ति, यैः संस्कृतभाषायां तमिलभाषायां च सुबहूनि सरस-ललितानि कीर्तनपदानि विरचितानि। एवमेवात्र एम० ई० राजगणेश दीक्षिता अपि संस्कृतकीर्तन-प्रणेतारः।

अत्रत्ये अन्नामलैविश्वविद्यालयेऽपि संस्कृत-विभागाध्यक्षाणां श्री डॉ० सी० एस० वेङ्कटेश्वर एम० ए०, पी-एच० डी० महोदयानां नेतृत्वे संस्कृत-भाषाविषयकं कार्यजातं सुचारुरूपेण सञ्चाल्यमानं वर्तते इति एतेषां गृहे निवासेन मया दृष्टं श्रुतं ज्ञातं च।

## कुम्भकोणम्

३०-१-२१

अस्मिन् नगरे एका श्री राजवेदपाठशालानाम्नी संस्था वर्तते, यत्र चतुर्णामपि वेदानामध्यापनं भवति। अत्र पञ्च अध्यापका विंशतिश्च छात्रा अवलोकिताः। नगरेऽस्मिन् द्वे सभे अपि प्रचलतः। एका एत-

नगरस्थितेन श्रीशङ्करमठेन सञ्चालिता वेदशास्त्रधर्म-परिपालकसभा अपरा च अखिलदक्षिणदेशव्यापिनी अद्वैतसभा। उभे अपि इमे संस्थे प्रतिवर्षं वार्षिकोत्सवसमारोहेण वेदशास्त्राणां धर्मस्य च संरक्षणाय अधिकाधिकप्रचाराय च सविशेषं प्रयत्नशीले। अद्वैतसभायाः अद्वैतमन्दिरनाम्ना एकं स्वतन्त्रं विशालं भवनमपि वर्तते, यत्र एतत्सभाध्यक्षाः श्री ए० आर० रङ्गस्वामिशास्त्रिणः स्थवीयांसोऽपि वेदवेदान्तोपनिषदामध्यापनं कुर्वन्ति। अत्रत्ये शङ्करमठे शास्त्रग्रन्थानामेकः पुस्तकालयोऽपि वर्तते। इत एव च शङ्करगुरुकुलनाम्ना एका संस्कृततमिलमयी मासिकपत्रिकाऽपि प्रकाशिता भवति।

## तञ्जावरम्

१-१०-५६

अत्र सरस्वतीमहल-लाइब्रेरी-नामको हस्त-लिखित-संस्कृतग्रन्थानामेको भारतप्रसिद्धः सुविशालतमो ग्रन्थागारो वर्तते, यत्र भूयांसः संस्कृतपण्डिता विविधविषयेषु गवेषणाकार्यं कुर्वन्ति, अनेकानि च अप्रकाशितानि दुर्लभपुस्तकानि सम्पाद्य प्रतिवर्षं प्राकाश्यमानयन्ति। अत्र लक्ष्मीसंस्कृतकलाशाला-नाम्नी एका संस्कृतपाठशालापि वर्तते, यत्र सायंप्रातः द्विशताधिका बालका बालिकाश्च संस्कृतं पठन्ति। अस्याः पाठशालाया नगरस्य अस्मिन्नपि भागद्वये द्वे शाखे प्रचलतः। तयोरपि एकत्र ४९ अपरत्र च ३८ विद्यार्थिनः पठन्ति। अत्र चित्तूरप्रचलिताः परीक्षा गृह्यन्ते।

अत्र संस्कृतसेवासमाजनाम्ना एका परिषदपि श्री टी० वी० शठकोपाचार्यमहोदयानामाध्यक्ष्ये चिरात् प्रचलति।

अत्रैव शङ्करविद्यास्थानं नाम एकः अन्योऽपि लघुविद्यालयो वर्तते, यत्र १० बालका भोजननिवासादि-सर्वविधसौविध्यलाभेन सह संस्कृतमधीयते। एतेषा-मध्यापकाः श्रीमुत्तुस्वामी दीक्षितारमहोदया वर्तन्ते। इमे यथा वेदवेदान्तमीमांसादिविषयाणां विशिष्टा विद्वांसः, तथैव श्रौतस्मार्ताचारपरिपालनपरायणा अपि। एभिः एकः सोमयागः तथा पञ्चपशुबन्धा अपि यथाशास्त्रं समनुष्ठिताः। अद्यापि इमे आहिताग्नयः सन्ति अधिकवार्धक्येन प्रशिथिलकलेवरा अपि समस्तां अग्निहोत्रादिदिनचर्यां यथावन्निर्वहन्ति। अत्र एतेषां गृहे निवासेन आत्मानमपि अहं सौभाग्य-वन्तमिव अमानयम्।

अत्र अन्योऽपि एको विशिष्टसंस्कृताभिमानी महानुभावो वर्तते रिटायर्ड डिप्टीकलक्टर-श्रीरामस्वामी ऐय्यरमहोदयो नाम। अयमत्यन्त-वृद्धोऽपि तरुण इव संस्कृतप्रचारकार्ये परिश्रमं करोति। एतस्य कन्या श्रीमती जगदम्बानाम्नी संस्कृतज्ञा संस्कृतभाषणे कुशला च।

## तिरुवय्यार ( श्रीपञ्चनदक्षेत्रम् )

२-१०-५६

इदं स्थानं मद्रासप्रदेशस्य अतिपुरातनं प्रतिष्ठितं च संस्कृतविद्याकेन्द्रम्। अत्रत्ये कावेरीतटे विराजमाने विशाले विद्यालये पूर्वं शताधिकाश्छात्राः विविधशास्त्राणामध्ययनं कुर्वन्ति स्म। परं सम्प्रति तत्र संस्कृतविभागे अष्टादश छात्रा एव केवलं संस्कृत-विभागे अध्ययनं कुर्वन्ति। अत्र सम्प्रति नवीन-रीत्यनुसारं तमिलभाषायाः आंग्लभाषायाश्चापि अध्ययनस्य व्यवस्था विहिता वर्तते।

## त्रिचिरापल्ली (त्रिशिरापल्ली)

४-१०-५६

इदं नगरं सम्पूर्णेऽपि मद्रासप्रदेशे संस्कृतविषयक-समुत्साहदृष्ट्या किमपि वैशिष्ट्यपूर्णं स्थानं भजते। तथाहि—अत्र एका संस्कृतसाहित्यपरिषत्-नाम्ना संस्था वर्तते या सभासम्मेलनादीनामायोजनेन लघु-लघु पुस्तकप्रकाशनेन विविधपरीक्षाणां प्रवर्तनेन च श्लाघनीयां सुरभारतीसेवां कुरुते। एतदतिरिक्तं बाल-परिषत्, रामेश्वरदेवस्थानम्, संस्कृतपाठशालास्नातक-सङ्घः, अद्वैतसभा संस्कृतभाषाप्रचारिणी चेति चतस्रः सभा अपरा अपि प्रचलन्ति। सभाभवने अत्र कणिपूरबोर्डिंग-हाउस-नामकमेकं स्थानं वर्तते यत्र पञ्चदश छात्रा निवसन्ति संस्कृताध्ययनं च कुर्वन्ति। अत्रत्ये अद्वैत एकः संस्कृतविद्यालयोऽपि प्रचाल्यते यत्र आंग्लकलाशालानामपि अनेके विद्यार्थिनः संस्कृताध्ययनं कुर्वन्ति। अत्र एकं गुरुकुलविद्यापीठ (ओरिएण्टल एलिमेण्टरी स्कूल)-नाम बालकानां शिक्षाकेन्द्रं वर्तते यत्र शतत्रयी छात्राणामनिवार्य-रूपेण संस्कृताध्ययनं कुरुते।

अत्रत्येषु संस्कृतप्रचाराय सविशेषोत्साहशालिषु विद्वज्जनेषु श्री एस. एल. पार्थसारथिमहोदयाः, (रिटायर्ड डिस्ट्रिक्टकलक्टर) अद्वैतसभायाः अध्यक्षाः, वैद्यशिरोमणयः श्री वा० वा० नटराज-शास्त्रिणः आयुर्वेदाचार्याः, सेन्टजोसेफकलाशालायाः संस्कृतप्राध्यापकाः श्री ए० सुब्रह्मण्यम् एम. ए. महोदयाः, ई. आर. हाईस्कूले संस्कृताध्यापकाः श्रीशिवरामकृष्णशर्ममहोदयाः, यू. डी. वी. हाईस्कूले संस्कृताध्यापकाः श्रीरामसुब्रह्मण्यम् बी. ए. व्याकरणशिरोमणिमहोदयाश्च प्रामुख्येन गण-नीयतामर्हन्ति। दिष्ट्या कतिपयैः कविजनैरपि सनाथीकृता इयं नगरी। तेषु श्री क. अ. शृङ्गारसुब्रह्मण्यशास्त्रिणः, श्री एम. एस. राजगोपालाचार्याः, तथा श्री इ. सु. सुन्दरार्य्यमहोदयाः सविशेषमुल्लेखनीया वर्तन्ते।

अत्रत्येषु आङ्ग्लविद्यालयेषु सेन्टजोसेफकालेजस्य संस्कृतपरिषदपि छात्राणामुत्साहबाहुल्येन नितरां श्लाघनीया। अस्या एव कलाशालायाः संस्कृत-प्राध्यापकैः श्री० ए० सुब्रह्मण्यमहोदयैः चित्तूर-भारतीयविद्याभवन बम्बई-पारडीप्रभृतिस्थान-सञ्चालितानां संस्कृतपरीक्षाणामपि व्यवस्था क्रियते, यासु प्रतिवर्षं भूयांसो विद्यार्थिनः प्रविष्टा भवन्ति।

अस्मिन् नगरे श्री ए० सुब्रह्मण्यमहोदयानामेव भवने ममावास आसीत्। एतेषां सुपुत्री मीनाक्षी तथा सुपुत्रो नटराजशर्मा चेति उभावपि संस्कृते सम्यक् बोद्धुं वक्तुं च पारयतः स्मेति मे अन्य-सर्वस्थानापेक्षया महती प्रसन्नता आसीत्। एतेषां धर्मपत्न्या मन्दं मन्दं भाषितानि मृदु-मञ्जुलानि सानुनासिकतया विलक्षणमाधुर्यसम्भृतानि तमिल-भाषापदान्यपि मे चिराय अविस्मरणीयतां गतानि। विशेषतया अत्र, अन्यत्र च क्वचित् क्वचित् तमिलभाषाया विलक्षणं श्रुतिमाधुर्यमनुभूय मया पद्यमिदं लिखितम्—

मन्दं मुदा प्रियजनैः सह भाषितानि
प्रायेण बाल - वनिता - वदनोद्गतानि।
अद्यापि तानि मधुराण्यनुनासिकानि
रम्याणि तामिलपदानि मनो हरन्ति॥

## श्रीरङ्गम्

५-१०-५६

श्रीजम्बुकेश्वरसंलग्नमेव इदं सुप्रसिद्धं वैष्णवानां क्षेत्रमस्ति। अत्र के० एस० तेन्नाचार्यसम्प्रदाय-

पाठशाला तथा मडलीमुदलियारपाठशालेति द्वे पाठशाले स्तः ।

## तिरुवानेक्कावल ( श्रीजम्बुकेश्वर )

६–१०–४६

अत्र श्री काञ्चीकामकोटिपीठाधिपतिभिः स्थापितं श्री जगद्गुरुविद्यास्थानं नाम संस्कृतविद्यालयः प्रचलति । अत्रत्याः प्रधानाचार्याः श्री वी० बालकृष्ण महोदयाः वेदवेदान्तनिष्णाता मीमांसान्याय-शिरोमणयः सुप्रसिद्धः विद्वांसः सन्ति । अस्मिन् विद्यालये सकुटुम्बः वसन्तो बहवः पण्डिता वेद-वेदान्तादीनामभ्यासमनुतिष्ठन्ति । तेषां सर्वोऽपि व्ययभारः श्री शङ्कराचार्यमहोदयैरेव उह्यते ।

## मदुरा

७–१०–४६

यथैव त्रिशिरापल्ली तथैव मदुराऽपि संस्कृत-शिक्षाया एकं प्रतिष्ठितं जागरूकं च केन्द्रस्थानम् । अत्र रामेश्वरदेवस्थानकोशद्वारा सञ्चाल्यमाना एका समीचीना संस्कृतपाठशाला वर्तते यत्र संस्कृत-शास्त्राणां तथा द्राविडदिव्यप्रबन्धानां च अध्यापनं भवति । अत्र द्वादश अध्यापकाः वर्तन्ते । प्रधाना-ध्यापकाः श्री श्रीकण्ठशास्त्रिणः एम० ए० महोदया वर्तन्ते । अत्रैव एका अन्याऽपि पाठशाला वर्तते यत्र भूयांसो बालका बालिकाः प्रौढ़जनाश्च आगत्य संस्कृतभाषायाः वेदान्तोपनिषदाश्च अध्ययनं कुर्वन्ति । अस्या व्यवस्थापका अध्यापकाश्च श्री परमानन्दपुरी महोदया वर्तन्ते ।

संस्कृतसंस्कृतिसम्बन्धिनां सभासम्मेलनादीनां संख्यायां दृष्ट्या अस्य नगरस्य सर्वाधिकं प्रामुख्यं वर्तते । तेषु एका प्रधानतमा संस्था संस्कृतविद्वत्परिषद् वर्तते । अस्या अध्यक्षाः श्री एन० एस० विश्वनाथार्य्याः एडवोकेट साहित्यवाचस्पतयः सन्ति । कार्यदर्शिनश्च श्री डी० राजगोपालन् महोदयाः । अनया परिषदा भारतीनिकेतनं नाम एका रात्रिसंस्कृतपाठशाला सञ्चाल्यते । अत्रत्या विद्यार्थिनः चित्तूरप्रवर्तितासु परीक्षासु सम्मिलिता भवन्ति । अस्मिन्नेव निकेतने प्रतिसप्ताहं चतुर्षु दिवसेषु बालिकानां संस्कृतशिक्षणस्य अपि व्यवस्था वर्तते । बालिकाः संस्कृतभाषायाः सामान्यज्ञानेन सह रामोदन्त-रघुवंश-गीतादि पुस्तकानि तथा भजगोविन्दम्, श्यामलादण्डकम्, गोपिकागीतम्, नारायणीयम्, कामाक्षीस्तोत्रम्, वेङ्कटेश-सुप्रभातम्, कुन्तीस्तुतिः, भीष्मस्तुतिः, कनकधारास्तवः शिवानन्दलहरी चेति बहूनि स्तोत्राणि च पठन्ति । आसां स्तोत्रपाठशैली अपि विशिष्टलय-तालसमन्विततया अत्यन्तमनोरमा अपरिमितानन्द-दायिनी च भवतीति मया स्वयं प्रत्यक्षीकृतम् । अस्य विद्यालयस्य प्रधानछात्र्या जानक्या यत् स्वयं-लिखितमभिनन्दनपत्रं मह्यं समर्पितं तेन तत्रत्य-छात्रीणां संस्कृतभाषाज्ञानसौष्ठवेऽपि न कश्चन संशयः । आसां छात्रीणामध्यापकाः श्री वेङ्कटाद्रिशर्माणो वयोवृद्धा अपि अध्यापने नितान्तमुत्साहसम्पन्ना अनुरागवन्तः परिश्रमशीलाः शिक्षणकलाकुशलाश्च अवलोकिताः ।

अस्य नगरस्य मदुरै हिन्दी प्रचारपाठशालायाः प्रधानाध्यापकाः श्री एस. गुरुस्वामिमहोदयाः तथा सहायकाः श्रीरत्नसभापतिमहोदयाः अपि संस्कृतज्ञाः संस्कृताभिमानिनः तथा संस्कृतप्रचारपरीक्षाणां स्वविद्यालयेऽपि सञ्चालनाय प्रयतमाना वर्तन्ते ।

अत्र ब्राह्मणानामपि एका सुसंघटिता सभा वर्तते । ब्राह्मणद्रोहिणां केषाञ्चित् द्राविडानामुपद्रवै-रात्मरक्षणाय अत्रत्यैर्ब्राह्मणैरियं संस्था संस्थापिता ।

अनया सभया ब्राह्मणबालकबालिकानां संस्कृत-सदाचारादिशिक्षणाय, असहायबालकानां यज्ञोपवीतादि संस्कारसम्पादनाय विविधव्रतयज्ञादि धार्मिककृत्यानामनुष्ठानाय वेदशास्त्रसंरक्षणाय च सुमहान् प्रयत्नः क्रियते। अस्याः सभायाः प्रमुख-सञ्चालकाः श्री एन्० सूर्यनारायण I. M. P. महोदया वर्तन्ते। एते अत्रत्या एके सुप्रतिष्ठिता नेत्रचिकित्सकाः, सम्माननीया नागरिकाः सर्वदैव धर्मसंस्कृतिसंरक्षणे बद्धपरिकरा ब्राह्मणकुलालङ्कार-भूता उदारहृदया महापुरुषाः सन्ति। अत्र नगरे एतेषामेव गृहे स्वगृहनिर्विशेषमेकादशदिनानि मम निवास आसीत्। त्रिचिरापल्ली नगरे कुत्रापि मम उपनेत्रे विनष्टे एभिरेव मम नेत्रपरीक्षणं विधाय उपनेत्रान्तरस्यापि व्यवस्था विहिता। भ्रमणाय स्वकीयं मोटरकारमपि समर्पितम्। एवमवर्णनीया एतेषामुपकाराः। एतेषां सौजन्यमूर्तयो ज्येष्ठभ्रातरः श्री एन्० नागसुन्दरम् महोदया अपि विविधसौविध्य-सम्पादनेन मां भृशमुपकृतवन्तः।

अस्मिन् नगरे सौराष्ट्रविप्रबन्धूनामपि महती संख्या वर्तते। तथा तैरपि धर्म-संस्कृति-संस्कृत-प्रचाराय वेदशास्त्रपरिरक्षणाय अनेकाः सभाः सञ्चाल्यमाना वर्तन्ते। तेषु सौराष्ट्रसभा, वैदिक-विद्वत्सभा, गोविन्ददाससेवासमाजः पुरोहितसभा चेति विशेषत प्रयत्नशीला अवलोकिताः। एभिः सर्वैरपि संघटनैः वेदपारायणयज्ञानुष्ठान-कथाप्रवचन-कीर्तन - स्तोत्रपाठ - गायत्रीपुरश्चरणादिभिरुपायैः संस्कृतभाषायाः वेदशास्त्राणां धर्मानुष्ठानस्य च प्रचाराय सततमेव प्रयत्नोऽनुष्ठीयते। तेषां संघटनं सौहार्दं कर्तृत्वशक्तिः धर्मसंस्कृतिसंस्कृतानुरागश्च नितरां श्लाघनीयः परेषां कृते अनुकरणीयश्चेति मे मतिः।

## रामेश्वरम्

१६–१०–४६

रामेश्वरं नाम दक्षिणभारतस्थितं भारतस्य सुप्रसिद्धं तीर्थं वर्तते। अत्र कश्चन संस्कृतविद्यालयो नास्ति परन्तु अत्रत्य रामेश्वरमन्दिरस्य प्रधाना अर्चकाः श्री पं० नीलकण्ठ महादेव जोशी महोदया एके सुप्रतिष्ठिता विद्वांसः सन्ति। आगमशास्त्रे एतेषां विशिष्टं पाण्डित्यम्, सहृदयास्तथा काव्य-रसिकाश्च। संस्कृतभाषणमपि एतेषामत्यन्तमनोहरं निरर्गलं च। इमे स्वगृहे स्वकन्यया मधुमत्या सहापि संस्कृतं भाषणं कुर्वाणा दृष्टाः। सापि संस्कृतया गिरा उत्तरं ददाति स्म। अत्र एतेषामेव गृहे मम एकदिनं निवास आसीत्। मन्दिरे पञ्च षड्वा वेदपाठिनो नियमेन वेदपाठं कुर्वन्ति। अन्येऽपि कतिपये कर्मकाण्डोपजीविनः साधारणसंस्कृतज्ञाः पण्डिताः सन्ति।

## धनुष्कोटिः

१७–१०–४६

रामेश्वरादनतिदूर एव इदं सुप्रसिद्धं तीर्थस्थानम्। इदं रत्नाकरमहोदध्योः सङ्गमस्थलं वर्तते तेन भूयांसो यात्रिणः पर्यटकाश्च अत्रापि प्रतिदिनं समायान्ति सुविस्तीर्णे सङ्गमस्थले च अवगाहनसुखं लभन्ते। जलमार्गेण लङ्कागमनाय च इत एव जलयानं लभ्यते।

अत्र काचन वसतिर्नास्ति। तेनात्र उच्चशिक्षायाः कृते विद्यालया अपि न वर्तन्ते। संस्कृतज्ञास्तु केवलमत्र द्वित्राः तीर्थपुरोहिता एव अवलोकिताः।

## त्रिनिवेली

१८-१०-५६

ताम्रपर्णी नदीतीरे विराजमानमिदं नगरम् । अत्र करियमाणिक पेरुमालतत्स्थाने एकः संस्कृत-विद्यालयो वर्तते । एतन्नगरमध्ये स्थिताया विवेकवर्धि-नीसभाया भवनेऽपि संस्कृतशिक्षायाः प्रबन्धो विद्यते यत्र केचन बालकाः प्रौढाश्च आगत्य संस्कृतं पठन्ति चित्तूरप्रवर्तिताः परीक्षाश्च ददते ।

एतन्नगरसमीपवर्तिनि पेरुमलपुरं नाम्नि स्थाने एका हिन्दुधर्मपरिपालनसभा प्रचलति । अत्र एतत् सभाद्वारापि संस्कृतशिक्षाया व्यवस्था विहिता वर्तते ।

## नाङ्गुनेरी

१९-१०-५६

इदं स्थानं त्रिनिवेली-कन्याकुमारी नगरयोर्मध्ये वर्तते । अत्रैव वैष्णवसमाजस्य सुप्रतिष्ठितं स्थानं तोताद्रिमठो विराजते । अत्र मठद्वारा श्रीरामानुज-संस्कृतविद्याशाला नाम्नी एका पाठशाला सञ्चाल्यते । अत्र पञ्च अध्यापका अध्यापनं कुर्वन्ति । संस्कृतेन सह तमिलभाषा आङ्गलभाषा च अध्याप्यते ।

## कन्याकुमारी

२०-१०-५६

इदं भारतस्य दक्षिणदेशवर्ति अन्तिमं तीर्थस्थलं वर्तते । अस्य दक्षिणतो हिन्दमहासागरः पूर्वतो वङ्गोपसागरः तथा पश्चिमतः अरबसागरः अस्ति । एवं च इदं स्थानं त्रयाणामपि सागराणां पवित्रं संगमस्थलं वर्तते । अत्र भारतस्य समस्तप्रदेशेभ्यो जना आगत्य अस्य प्रदेशस्य प्राकृतिकीं रमणीयतां पश्यन्ति धार्मिकदृष्ट्या समुद्रस्नानं च कुर्वन्ति ।

अत्र काचन पाठशाला नास्ति । पण्डिता अपि बहवो न सन्ति । केवलमस्य मन्दिरस्य गृहीतावकाशाः प्रधानार्चकाः श्री पं० लक्ष्मीनारायण पोट्टी महोदया ज्यौतिषस्य धर्मशास्त्रस्य कर्मकाण्डस्य च पण्डिताः सन्ति । एतेषामाकुञ्चितकेशकमनीयं स्वरूपं, मधुरा वाणी द्रवतरः स्वभावः स्नेहरसार्द्रमातिथ्यं तथा कन्याकुमारीस्तोत्रसंग्रहप्रकाशनसम्बन्धिवार्तालापेन व्यतीता आनन्दमयी निशा च ।

## त्रिवेन्द्रम् ( अनन्तशयनम् , स्यानन्दूपुरम् )

२०-१०-५६

इदं नगरं प्रकृतिकमनीयस्य केरलप्रदेशस्य रमणीया राजधानी । अत्र एकः सर्वाङ्गपरिपूर्णो राजकीयः संस्कृतमहाविद्यालयो वर्तते । अस्य विद्यालयस्य स्वतन्त्रः पाठ्यक्रमः तथा उपाधी अपि बी० ए०, एम० ए० इत्येव दीयेते । अत्र प्रधानाचार्यं विहाय संस्कृतविभागे एकादश, इङ्गलिशविभागे चत्वारः, मलयालमविभागे त्रयः तथा हिन्दीविभागे द्वाविति आहत्य एकविंशतिरध्यापका विद्यन्ते । अत्र कन्यानामपि संख्या समधिका वर्तते । अस्य महाविद्यालयस्य प्रधानाचार्याः डा० श्री पी० के० नारायण पिल्लई एम० ए०, पी० एच-डी० महोदया वर्तन्ते । एते अंग्रेजीसंस्कृतमलयालमभाषानिबद्धानां बहूनां ग्रन्थानां सम्पादकाः सन्ति । सरलता, सहृदयता, वाग्विलासिता, विद्वज्जनसमादरः, प्रसन्न-मधुरा आलापाः, मनोहारिणी पद्यपाठशैली चेति एतेषां विशेषताः सन्ति ।

अस्मिन् विद्यालये अनेकाः साहित्यपरिषदः प्रचलन्ति। अत्र N. C. C. शिक्षाविभागोऽपि वर्तते तथा २६ छात्राणां समाजसेवा समितिरपि। अस्माद् विद्यालयादेका त्रिभाषामयी वार्षिकी पत्रिकापि प्रकाश्यते। अनेन विद्यालयेन प्रतिवर्षं नवरात्रावसरे एका संस्कृतविद्वत्परिषदपि महता समारोहेण समायोज्यते यत्र भूयांसः केरलवासिनो विद्वांसः सम्मिलिता भवन्ति।

अस्य नगरस्य अग्रगणनीयेषु विद्वत्सु संस्कृत-महाविद्यालयस्य निवृत्ताः प्रधानाचार्याः डा. श्री एन. गोपाल पिल्लई महोदयाः, मलयालममहाकोशसम्पादकाः शूरनाड श्री पी. एन. कुञ्जन पिल्लई महोदयाः तथा यूनिवर्सीटीकालेज-संस्कृतप्राध्यापकाः श्री डा. ए. जी. कृष्ण वारियरमहोदयाः प्रमुखाः सन्ति।

अस्मिन्नगरे केरल संस्कृतपण्डितपरिषन्नाम्ना एका संस्कृतविश्वपरिषदः शाखापि संस्थापिता वर्तते। अस्याः कार्यदर्शिनः संस्कृतकालेजस्य वेदान्तप्राध्यापकाः श्री के. बालकृष्ण पणिक्कर एम. ए. महोदयाः वर्तन्ते।

सम्प्रति अस्य नगरस्य एतत्प्रदेशस्य सर्वाधिकं सौभाग्यमिदं वर्तते यदस्य प्रदेशस्य राज्यपालाः महामहिम श्री रामकृष्णराव महोदयाः स्वयं संस्कृतज्ञाः सन्तः संस्कृतभाषायाः समुन्नतौ संस्कृतविदुषां सम्माने तथा सांस्कृतिकेषु कार्यकलापेषु सत् योगदाने च सर्वदा तत्परास्तिष्ठन्ति।❀

अस्मिन् नगरे संस्कृतकालेजस्य व्याकरणाध्यापकैः शब्दानां पाणिनीयापाणिनीयत्वविषये सततमतितरां दत्तावधानैः परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विलसद्भिः श्री एम. एच. शास्त्रिमहोदयैरखिलसौख्यप्रदानेन अहं नितरामनुगृहीत आसम्।

## त्रिपुन्तुरा (जि० एर्नाकुलम्)

२५-१०-५६

इदं स्थानं केरलप्रदेशस्य सुप्रसिद्धकोचीनराज्यान्तर्गतम्। अत्र श्रीरामवर्मकलालयनाम्ना एकः सुप्रसिद्धः प्राचीनतमश्च संस्कृतमहाविद्यालयो वर्तते। यत्र संस्कृतशास्त्रविभागेन सह हाईस्कूलविभागोऽपि प्रचलति। शास्त्रविभागे नव अध्यापकाः तथा हाईस्कूलविभागे षोडश अध्यापका वर्तन्ते। प्रधानाध्यापकाः श्री टी० के० रामचन्द्र ऐय्यर एम० ए०, बी० ओ० एल०, साहित्यशिरोमणि महोदयाः सन्ति। एते प्रचुरोत्साहसम्पन्ना व्यवहारकुशलाः कलानुरागिणः सहृदयाश्च। अत्रत्या विद्यार्थिनोऽपि सुयोग्याः तथा काव्यनाट्यसंगीतरसिका अवलोकिताः। अत्र बालकैः बालिकाभिश्च मलयालयमभाषायाः बहूनि मनोहराणि पद्यानि दण्डकानि तथा ओणप्पाटम्, वञ्चिप्पाटम्, कथकली इति नाम्ना केरलप्रसिद्धानि बहूनि गीतानि च श्रावितानि। प्रधानाचार्याणां लघुबालिकया श्री सीतया कथकली-अभिनयोऽपि एकः प्रदर्शितः।

अस्मिन् विद्यालये हस्तलिखितसंस्कृतग्रन्थानामपि एको महान् संग्रहो वर्तते। प्रतिवर्षं पत्रिकारूपेण सुदुर्लभानि संस्कृतपुस्तकानि अपि प्रकाश्यन्ते। अनेन विद्यालयेन प्रतिवत्सरमेकस्याः परिषदोऽपि आयोजना क्रियते यत्र केरलप्रदेशस्य विभिन्नभागेभ्यो भूयांसो मनीषिणः सम्मिलिता भवन्ति।

❀ साम्प्रतं श्री "राव" महोदया उत्तरप्रदेशस्य राज्यपालपदं विभूषयन्तीति उत्तरप्रदेशवासिनामस्माकं संस्कृताभिमानिनां महत् सौभाग्यम्।

अस्मिन् नगरे अन्येऽपि एके विशिष्टा विद्वांसो विराजन्ते। एते वर्तमानकोचीनराज्याधिपतयः श्री रामवर्मपरीक्षिततम्बुरानमहोदया वर्तन्ते। इमे क्षत्रियकुलोत्पन्नाः तथा शासका भूत्वापि न्यायशास्त्रस्य सुप्रसिद्धा विद्वन्मान्याः पण्डिताः सन्ति। सम्प्रति एतेषां वयः त्र्यशीतिवर्षमितम्। तथापि स्फूर्त्युत्साह-समन्विताः स्वस्थकलेवराश्च एते अद्यापि शास्त्रचर्चायामेव दिनान्यतिवाहयन्ति। अन्यच्च इमे नितान्तं विनम्रस्वभावाः सौजन्यमूर्तयश्च। एवं च इमे कुलेन, वयसा, विद्यया, शीलेन, विदुषां समादरेण च न केवलं केरलेषु प्रत्युत समस्ते भारतेऽपि किमपि अनन्यसाधारणं वैशिष्ट्यं बिभ्रति। तदेतत् सर्वमपि साक्षात्कृत्य इमे भावाः प्रादुरभूवन्मे मनसि—

दिव्या दक्षिणदेशभूमिरखिला दृश्यैर्मनोमोहनै-
र्दिव्यास्तत्र च नारिकेल-कदलीरम्यान्तराः केरलाः।
दिव्यस्तेषु च कोपि कोचिनकुलालङ्कारभूषामणि-
र्विद्वद्वन्द्यपदः परीक्षितमहाराजः सुधी राजते॥

अस्मिन् स्थाने श्री पं० टी० के० रामचन्द्र ऐय्यर महोदयानामेव विविधतरुलताकुञ्जमञ्जुलभवने तेषां दुहितॄणां श्री सीताजानकीपद्मावतीनां हृद्यतमैः संस्कृतपद्यपाठैः केरलीयगीतैश्च मनोविनोदयन् द्वित्राणि दिनानि स्वपरिवार निर्विशेषं सुखेन न्यवसम्।

## एर्नाकुलम्

अस्मिन् नगरे एका संस्कृतपरिषन्नाम्नी संस्था संस्कृत-प्रचाराय संस्थापिता वर्तते। अस्याः कार्यदर्शिनः श्री पं० विश्वनाथशर्माणः त्रिपुन्तुरापैलेस गर्ल्स-हाईस्कूल संस्कृताध्यापकाः सन्ति।

## त्रिचूर

सम्पूर्णकेरलप्रदेशे संस्कृतशिक्षाया विशेषरूपेण प्रचाराय संस्कृतस्नातकानां जीविकासमस्यासमाधानाय च केरलीयसंस्कृतपरिषन्नाम्नी एका संस्था एतस्मिन्नेव वर्षे संस्थापिता वर्तते। अस्या अध्यक्षाः कविरत्नं श्री आट्टूरकृष्ण पिशारडी महोदयाः तथा कार्यदर्शिनः श्री सी० के० वारियर एम० ए० महोदयाः सन्ति। इयं संस्था केरलेषु किमपि उल्लेखनीयं संस्कृतप्रचार-कार्यं सम्पादयिष्यतीति सम्भाव्यते।

## कालडी

२७-१०-५६

इदं स्थानं जगद्गुरु श्रीमदाद्यशङ्कराचार्याणां जन्मभूमिः। अत्र एकः श्रीशृङ्गेरिमठाधीशैः संचाल्यमानो मठो वर्तते। मठे एकः संस्कृतविद्यालयः प्रचलति यत्र वेदवेदान्तयोरध्यापनं भवति। अत्र द्वौ अध्यापकौ वर्तेते कतिपये च विद्यार्थिनः।

एतन्मठसमीपे एव एकं द्वितीयं महत्त्वपूर्णं दर्शनीयं च स्थानं वर्तते श्रीरामकृष्णपरमहंसाश्रमो नाम। अस्मिन् मठे प्राथमिककक्षात आरम्भ उपाधिकक्षा (कालेज) पर्यन्तं शिक्षा दीयते। सर्वत्र संस्कृताध्ययनमनिवार्यं वर्तते। अस्य मठस्य सञ्चालकाः संस्थापकाश्च परमश्रद्धेयाः श्रीमन्तः आगमानन्द-स्वामिमहोदया वर्तन्ते। एते यथैव उत्कृष्टा विद्वांसस्तथैव समधिकसरलस्वभावाः सहृदयाः सौजन्यमूर्तयश्च। एभिः संस्कृत-अंग्रेजी-मलयालमभाषासु च अनेके प्रौढपाण्डित्यपूर्णा अनुत्तमा ग्रन्था बह्व्यश्च प्रचारोपयोगिन्यः पुस्तिका लिखिताः सन्ति। एते यथा सिद्धहस्ता लेखकाः तथैव वक्तारोऽपि। एभिर्गुणाति-

शयैरस्य प्रदेशस्य इमे सर्वमान्याः सुप्रसिद्धाश्च महात्मानः सन्ति ।

एषः प्रदेशः इदं स्थानं च बाहुल्येन ईसाईधर्मावलम्बिभिः सर्वतः समाक्रान्तमासीत् परं सम्प्रति श्री स्वामिमहोदयानां प्रयत्नेन शनैः शनैः हिन्दुधर्मस्य संस्कृतशिक्षायाश्च प्रचारो वर्धमानो वर्तते । किमधिकं वा कथनीयम् ।

विद्यासौजन्यशीलेषु धर्मसंरक्षणे तथा ।
केरलेष्वागमानन्दस्वामितुल्याः सुदुर्लभाः ॥

## गुरुवायूर ( जिला त्रिचूर )

२७-१०-४६

इदं स्थानं केरलेषु भूलोकवैकुण्ठनाम्ना एकं प्रसिद्धं तीर्थस्थानं वर्तते ।❀ अत्र कश्चन संस्कृतविद्यालयो नास्ति परं कतिपये संस्कृतविद्वांसो वर्तन्ते । तेषु एके पी० कृष्णन् नवीशन् नामानो वैद्यमहानुभावाः । एभिः गीताया गीतगोविन्दस्य च मलयालमभाषायां सुविस्तृता महत्वपूर्णा च व्याख्या लिखिता । द्वितीयो विद्वान् श्री उन्नी कृष्णन् इलियत महोदयः । अयं पावर्टीसंस्कृतकलाशालायां व्याकरणाध्यापकः । तृतीयो विद्वान् श्री श्रीधर नम्बूदरी महाशयः । अयं मन्दिरे श्रीमद्भागवतप्रवचनं करोति । अत्र श्रीमद्भागवतपारायणपाठे प्रवीणा अन्येऽपि अनेके पण्डिताः सन्ति ये प्रतिदिनं मन्दिरे पारायणपाठं प्रवचनादिकं च कुर्वन्ति । अत्रत्येषु विद्वत्सु इलियतमहोदयाः संस्कृतप्रचारकार्येषु सविशेषमुत्साहसम्पन्नाः सहृदयाश्च ।

अस्मिन्नेव स्थाने भजगोविन्दं स्तोत्रस्य मलयालमभाषया अनुवादकर्तारः साहित्यसङ्गीतरसिका श्री टी० कृष्णन् भट्टतिरीमहोदयः अपि सौभाग्यवशात् स्वयमागत्य मिलिताः । अत्र एषां सहवासेन तथा श्री इलियतमहोदयानां सहयोगेन च सानन्दमतिवाहिता एका रात्रिः ।

## पावर्टी ( जि० त्रिचूर )

२६-१०-४६

अयं ग्रामो गुरुवायूरस्थानात् चतुर्षु क्रोशेषु अवस्थितः । अत्र एकेन खृष्टमतानुयायिना श्री पी० टी० कुरियाक्वुनामकेन संस्कृतविदुषा सञ्चालितः साहित्यदीपिकासंस्कृतकालेज नाम्ना प्रसिद्धः संस्कृतविद्यालयो वर्तते । सम्प्रति अत्र ओरिएण्टल हाईस्कूलविभागोऽपि प्रचलति । उभयोराहत्य अध्यापकसंख्या एकोनविंशतिमिता तथा छात्रसंख्या सार्द्धद्विशतमिता । पूर्वमत्र श्री कुरियाक्वुमहोदया एव प्रधानाध्यापका आसन् परन्तु सम्प्रति तेषां ज्येष्ठपुत्रः श्री पी० के० फ्रान्सिस साहित्यशिरोमणिः प्रधानाध्यापकपदं भजते । तेषां कनिष्ठपुत्रः श्री पी० के० जोस संस्कृतविद्वान् अपि अत्र सहायकाध्यापकः, सहायकाध्यापकेषु अपरे पञ्च अध्यापका हिन्दवो वर्तन्ते ।

विद्यालयस्य अध्ययनाध्यापनव्यवस्था समीचीना वर्तते । अत्र विद्यार्थीनां हिताय द्वे सभे अपि परिचाल्यते । एका साहित्यनन्दिनीसभा उच्चवर्गीयाणां तथा अपरा विवेकदायिनीसभा निम्नवर्गीयाणां

❀ अत्रैव वायुरोगपीडितेन श्रीनारायणभट्टेन श्रीमद्भागवतकथासंक्षेपरूपं श्रीमन्नारायणीयं नाम नितान्तरमणीयं ग्रन्थं विरचय्य नैरुज्यमासादितमिति प्रसिद्धिः वर्तते ।

छात्राणां कृते। सभासञ्चालनकार्ये छात्रा अध्यापकाश्च उत्साहवन्तः । संस्कृतप्रचारकार्येऽपि अत्रत्यानामध्यापकानां साधीयसी प्रवृत्तिः।

एतद्विद्यालयसञ्चालकैः श्री कुरियाक्कुमहोदयैः मलयालमभाषाया माध्यमेन संस्कृतशिक्षणार्थं "संस्कृतशिक्षाक्रम" इति नाम्ना चत्वारि पुस्तकानि अपि प्रकाशितानि सन्ति । संस्कृतज्ञानां कृते मलयालमभाषाशिक्षणार्थमपि इमानि अत्यन्तमुपयुक्तानि। केरलवासिभिश्च संस्कृतज्ञैस्तानि अवश्यं द्रष्टव्यानि।

## उडुपी

३१-१०-६१

माध्वसम्प्रदायस्य इदं प्रसिद्धं तीर्थस्थानं वर्तते। अत्र अष्टौ माध्वसम्प्रदायाचार्या मठाधीशाः सन्ति। तेषामेव सम्मिलितेन सहयोगेन अत्र एका माध्वसिद्धान्तप्रबोधिनी नाम महती पाठशाला प्रचलति। अत्र वेदान्त-व्याकरण-साहित्य-ज्योतिष-न्याय-माध्ववेदान्तादिशास्त्राणामध्यापनं भवति। अत्र पञ्चविंशतिरध्यापका वर्तन्ते तेषु षोडश संस्कृताध्यापकाः तथा इतरे इतरविषयाणामध्यापकाः सन्ति। अत्र प्राथमिककक्षायां ६४, माध्यमिककक्षायां १८५ तथा उच्चकक्षायां १९ छात्रा अध्ययनं कुर्वन्ति। अत्रत्याः प्रधानाचार्याः श्री कौलगि शेषाचार्य एम. ए. महोदयाः सहृदया विद्वांसः सन्ति। एतेषां धर्मपत्नी अपि संस्कृतज्ञा वर्तते।

अस्मिन् विद्यालये माध्वमतामृताब्धिलहरी नाम पाक्षिकी सभा प्रचलति। अत्रत्यैश्छात्रैः निबन्धलहरी नाम हस्तलिखिता एका वार्षिकी पत्रिकापि प्रकटीक्रियते। इयं पत्रिका समीचीनतमैरक्षरैरङ्किता, सचित्रा समयोचितसामग्रीसमन्विता चेति अस्याः पाठशालाया इदं वैशिष्ट्यं वर्तते।

भवनमपि अस्याः पाठशालाया अतीव विशालं दर्शनीयं च। अस्यैव भवनस्य एकदेशे एकं सभाभवनमपि वर्तते। इदमपि अतिविस्तृतं विविधचित्रविभूषितं रङ्गमञ्चादिसमुचितसन्निवेशरमणीयं च मनोरमं स्थानमस्ति। इयमपि अस्याः पाठशालाया एका विशेषता वर्तते।

अत्रत्येषु मठाधीशेषु अधमारुमठाधीशाः श्री विबुधेशतीर्थस्वामिनः तथा पेजावरमठाधीशाः श्री विश्वेशतीर्थ श्रीपादा विशिष्टा विद्वांसः प्रवचनपटीयांसश्च वर्तन्ते।

एतत्स्थानसमीपवर्तिनि कारकलानामके स्थाने एका अन्यापि संस्कृतमहापाठशाला वर्तते।

अस्मिन् नगरे अधमारुमठे एव मया त्रिणि दिनानि सानन्दमावासः कृतः। यद्यपि तदानीं स्वामिमहोदया बहिर्गता आसन् तथापि मम गमनकाले तत्र ममैव सौभाग्यवशादुपस्थितानां तत्रत्य भूतपूर्वप्रधानाध्यापकमहोदयानां सौजन्येन सर्वविधं सौविध्यमासादितं मया। तत्र निरतिशयं सौम्यमूर्तिना सहृदयेन च श्रीरघुनाथअडिगानामकेन एकेन न्यायशिरोमणिना युवकपण्डितेनापि मे महती सहायता विहिता।

## मैसूर ( महीशूर )

२-११-६१

इयं भारतस्य एका सुप्रसिद्धा दर्शनीया च राजधानी। अत्र महाराजसंस्कृतमहापाठशाला नाम्ना एकः सुप्रसिद्धो विशालतमश्च संस्कृतमहा-

विद्यालयो वर्तते। अत्र अध्यापकसंख्या चत्वारिंशदधिका तथा छात्रसंख्या च भूयसी वर्तते। अत्रत्ये छात्रावासे सम्प्रति पञ्चचत्वारिंशत् छात्रा निवसन्ति। अत्र विद्यार्थिसंघः प्रदोषसंघश्चेति द्वे सभे अपि प्रतिपक्षं प्रचलतः। विद्यार्थिसंघेन समये समये संस्कृतनाटकानां तथा सभासम्मेलनादीनामपि आयोजना क्रियते। अत्रत्याः प्रधानाचार्याः श्री एस० कृष्णमूर्ति महोदयाः। अस्माद् विद्यालयात् पूर्वमेका त्रैमासिकी संस्कृतपत्रिकापि प्रकटीभवति स्म। अत्र हस्तलिखितानां मुद्रितानां च संस्कृतग्रन्थानामेको महान् पुस्तकालयोऽपि वर्तते। अस्मिन् नगरे वीरशैवसम्प्रदायेन सञ्चाल्यमाना एका अन्यापि संस्कृतपाठशाला वर्तते।

अत्र अखिलभारतमाध्वमहामण्डलीय विद्यार्थिनिलयनामकः एकश्छात्रावासो वर्तते यत्र माध्वमतानुयायिनो बहवश्छात्रा निवसन्ति। एते विभिन्नविद्यालयेषु आङ्गलभाषामधीयानां अपि अत्र नियमेन संस्कृतमधीयते तथा सायंप्रातः स्तोत्रपाठं सन्ध्यावन्दनादिकं च अनुतिष्ठन्ति। अस्य विद्यार्थिनिलयस्य अध्यक्षाः श्री के० विट्ठलोपाध्याया एव अत्र संस्कृताध्यापकाः सन्ति। इमे उपाध्यायमहोदया अत्यन्तं मधुरस्वभावा स्मितभाषिणः सहृदयाश्च। अत्र एतेषामेव सौजन्येन विद्यार्थिनिलये मया दिनत्रयं सानन्दमावासः कृतः।

अस्मिन् नगरे एका संस्कृतविद्यासमितिरपि वर्तते यस्याः कार्यदर्शिनः श्री वी० एस० कृष्णप्पा महोदयाः सन्ति।

एतन्नगरवर्तिषु आङ्गलकलाशालाध्यापकेषु महाराजसंस्कृतकालेजसंस्कृतप्राध्यापकाः श्री टी० एस० कृष्णमूर्ति एम० ए० महोदयाः, कन्नडविभागाध्यक्षाः श्री टी० एन० श्री कण्ठय्या महोदयाः तथा सम्पूर्णस्य कालिदासीयसाहित्यस्य कन्नडभाषायां पद्यानुवादकर्तारः श्री परमेश्वर भट्ट एम० ए० महोदया विशेषरूपेण उल्लेखनीया वर्तन्ते।

अत्र ओरिएन्टल लाइब्रेरी नाम्ना संस्कृतग्रन्थानामेको महान् संग्रहालयो वर्तते। इतः संस्कृतपण्डितानां सम्पादकत्वे बहूनि उत्तमोत्तमानि पुस्तकान्यपि प्रतिवर्षं प्रकाश्यन्ते।

## बैंगलोर

४-११-५१

भारतप्रसिद्धेषु नगरेषु इदमेकं मनोहरं स्वास्थ्यवर्द्धकं च स्थानं अस्ति। अत्रापि मैसूर इव श्रीचामराजेन्द्रसंस्कृतकालेजनाम्ना एको विशालः शोभनीयश्च संस्कृतमहाविद्यालयो वर्तते। एतस्य विद्यालयस्य भवनं तत्रत्यं सभास्थानम्, पुस्तकालयः, कार्यालयः छात्रावासश्चेति सर्वमपि सर्वाङ्गपूर्णं विस्तृतं रमणीयतमञ्च। अत्र चत्वारिंशत्संख्यका अध्यापकाः सन्ति। सर्वेषां विषयाणामध्यापनं भवति। छात्रसंख्याऽपि सन्तोषावहा वर्तते।

अस्य महाविद्यालयस्य अध्यापकेषु श्री एन० एस० अनन्तरङ्गाचार्याः श्री एच० वी० नारायणशास्त्रिणस्तथा डा० वीरराघवाचार्याश्चेति अनेके विद्वांसः साहित्यसङ्गीतरसिकाः कवयः प्रबन्धलेखकाश्च विद्यन्ते। तेष्वपि डा० वीरराघवाचार्या एके अद्भुतव्यक्तित्वसम्पन्ना विद्वांसः सन्ति। एते अत्र विशिष्टाद्वैतवेदान्ताध्यापकपदं विभूषयन्ति। परं वेदान्तिनोऽपि इमे सङ्गीतशास्त्रस्यापि प्रवीणा

वेत्तारः। न च केवलं सङ्गीतशास्त्रस्य ज्ञानमेव एतेषां वर्तते प्रत्युत विभिन्नरागतालनिबद्धानां गीतानां गानविधावपि इमे विशारदाः सन्ति। एतेषां स्वरतानसमन्विता सुललिता हृदयहारिणी श्लोकपाठशैली तु भारतवासिनः समस्तानपि पण्डितान् पराभवितुं शक्नोतीति मे विश्वासः। पण्डितसमाजे प्रचलितया स्वरज्ञानहीनया श्लोकपाठपद्धत्या विक्षुब्धहृदया एते सर्वानपि पण्डितान् श्लोकशत्रूनिव मन्यन्ते। अथ च इमे शरीरेण समुन्नताकृतयः, स्वभावेन स्वाभिमानिनो वचसा च सुतरां स्पष्टवादिनो वर्तन्ते। एतेन कदाचिदिमे उपर्य्युपरि नीरसा इव भान्ति तथापि एतेषां हृदये या सरस्वतीव निगूढा मधुमयी स्नेहसौजन्यधारा प्रवहति तस्या रसास्वादनं त एव कर्तुं प्रभवन्ति ये तत्र अवगाहनं कर्तुं पारयन्ति इति मया तैः सह एकमहोरात्रमुषित्वा प्रत्यक्षमनुभूतम्।

सम्प्रति इमे एव महाविद्यालयीय छात्रावासस्यापि अध्यक्षा वर्तन्ते। अतएव एतेषां सहवासेन छात्रावासस्थिता विद्यार्थिनोऽपि विनयान्विताः साहित्य-संगीतकलासु च कुशलिनः सन्तीति मया तेषां सह वासेन तत्प्रदर्शित-नाट्य-संगीत-पद्यपाठादिना च स्वयं साक्षात्कृतम्। अत्रैव एकया छाया "संकल्प-सूर्योदय" नाटकस्य एको गद्यभागोऽपि अतीव हृद्यतमेन लयेन श्रावितः। गद्यपाठस्य इयं रमणीया रीतिर्मम अश्रुतपूर्वा एव आसीत्।

एतद्विद्यार्थिनिलयनिवासिनां छात्राणामेकं द्वितीयमपि वैशिष्ट्यं वर्तते। एभिश्छात्रैः छात्रलिखितानां निबन्धानां संग्रहरूपमेकं 'प्रबन्धपारिजात' नामकं पुस्तकमपि प्रकाशितम्। अस्मिन् पुस्तके प्राचीनेषु अभिनवेषु च विषयेषु चतुस्त्रिंशत् प्रबन्धा लिखिताः सन्ति। सर्वेऽपि निबन्धा अत्यन्तं सारगर्भिता सरल-सुललित-प्राञ्जलसंस्कृतनिबद्धतया वाचनेऽपि प्रचुरप्रमोदावहास्तथा विद्यार्थिनां कृते नितान्तमुपयोगिनो ज्ञानवर्द्धकाश्च वर्तन्ते। पृष्ठसंख्या अस्य १२८ वर्तते। मूल्यांक एकं रूप्यकम्। विद्यार्थिभिः लिखितं विद्यार्थिभिरेव च प्रकाशितमिदं पुस्तकं सर्वैरपि विद्यार्थिभिरवश्यमेव पठनीयमिति मे साग्रहं निवेदनं वर्तते। एतस्यापि प्रेरकाः सम्पादकाश्च श्री वीर-राघवाचार्य्यमहोदया एव वर्तन्ते। उपसम्पादकौ च द्वौ छात्रौ वै० नारायण शर्मा तथा जे० वि० सत्य-नारायण शर्मा च।

अथैतस्मिन्नगरे माध्वसम्प्रदायानुयायी पूर्णप्रज्ञविद्यापीठो नाम एको द्वितीयोऽपि विद्यालयो वर्तते। अत्र त्रयोऽध्यापकाः तथा चत्वारिंशदधिकाश्च छात्रा वर्तन्ते। अत्रत्या विद्यार्थिनः समस्तसाम्प्रदायिकाचारपरिपालनपुरस्सरं व्याकरण-साहित्य-न्यायादिविषयाणां तथा माध्ववेदान्तस्य च अध्ययनं कुर्वन्ति। विद्यार्थिनो यथा सदाचारसम्पन्ना भूत्वा धर्मोपदेशका भवेयुरित्येव अस्य विद्यापीठस्य मुख्यमुद्देश्यं वर्तते। एतदतिरिक्तमत्रत्ये शंकरमठेऽपि बहवः पण्डितकल्पा विद्यार्थिनो निवसन्ति वेदान्तशास्त्रस्य च अध्ययनं कुर्वन्ति।

अस्मिन्नगरे एका संस्कृतार्यप्रेममण्डली नाम्नी अपि संस्था वर्तते। अनया संस्थया आधुनिकान् विषयानवलम्ब्य सरलसंस्कृतभाषया संवादरूपेण बहूनि पुस्तकानि प्रकाशितानि सन्ति तथा सभा-सम्मेलनादिद्वारापि संस्कृतप्रचाराय साधीयान् प्रयत्नोऽनुष्ठीयते।

अत्रैव गोखले इन्स्टीट्यूट नाम्ना एका सर्वलोक-सेवायै सञ्चालिता संस्था वर्तते। अस्याः सञ्चालकाः श्री वी० डी० गुण्डय्या महोदया वर्तन्ते। एते

स्वयमपि संस्कृतज्ञाः संस्कृताभिमानिनः संस्कृत-प्रचाराय बद्धादरा एके सामाजिकाः सहृदयाः वाग्विलासरसिकाश्च सुप्रतिष्ठिता विद्वांसः सन्ति। एतेषां प्रयासेन अस्यां संस्थायामपि प्रतिसप्ताहं केषुचिद् दिवसेषु संस्कृतकक्षाः प्रचलन्ति।

एतन्नगरवास्तव्येषु विद्वत्सु संस्कृतपाठशाला-निरीक्षकाः श्री एस० शंकरप्पा एम० ए०, बी० टी० महोदयाः, गान्धीनगर-हाईस्कूलप्रधानाध्यापकाः श्री एम० पी० एल० शास्त्रिणः एम० ए०, एम० एल० सी० महोदयाः, अनेक संस्कृतपुस्तकप्रणेतार श्री के० एस० नागराजन् महोदयाः ( सुपरिन्टेण्डेन्ट एजेंसि आफिस ) तथा संस्कृत अकेडमी-अध्यक्षाः श्री के० गुरुदत्त महाशयाः ( चेयरमैन एलेक्ट्रिक सीटी बोर्ड ) अग्रगणनीया वर्तन्ते।

## धारवाड

७-११-५६

अस्मिन् नगरेऽपि एकः संस्कृतविद्यालयो वर्तते। परन्तु अवकाशदिने गमनात् तत्र कस्यापि अध्यापकस्य छात्रस्य वा मम साक्षात्कारो नाऽभूत्। विद्यालये कमपि अनवाप्य एतन्नगरस्य सुप्रसिद्धविदुषां श्री प० वुर्ली बिन्दुमाधवाचार्य्यमहोदयानां गृहं गतवानहम्। परं तस्मिन् दिने तेऽपि बैंगलोरनगरं गता आसन्। ततस्तेषामभावेऽपि तद्गृहिणीभिः एकस्य हिन्दीभाषाविदो बालकस्य माध्यमेन मम परिचयं लब्ध्वा अतिशयस्नेहसमादरपुरस्कृतेन आतिथ्येन भृशं सम्मानितोऽहं यथेच्छं निवासाय निवेदितश्च। परन्तु तत्र पण्डितमहोदयानामभावे एकाकी स्थातुमशक्नुवानः कञ्चित् समयं यापयित्वा, ताभ्यश्च आदर्शगृहिणीभ्यः तासामसामान्यसौजन्य-मवलोक्य स्वयं विनयावनतेनेक प्रणतेन मूर्ध्ना सश्रद्धमनेकाः प्रणतीर्निवेद्य, कञ्चित् क्लेशमनुभवन्निव विमना एव ततः पुण्यपत्तनाय प्रस्थानमकरवम्।

## पूना ( पुण्यपत्तनम् )

८-११-५६

इदं नगरं संस्कृतभाषायाः भारतीयसंस्कृतेश्च स्वाभिमान-संरक्षणदृष्ट्या वस्तुतः पुण्यभूमिरिति अद्यापि स्वनाम्नो यथार्थतां प्रगटीकरोति। संस्कृत-शिक्षाया ह्रासकालेऽपि एतस्मिन् तिलकमहाराष्ट्र-विद्यापीठ, गीर्वाणमहाविद्यालय, संस्कृतपाठशाला, वेदपाठशाला, बालमुकुन्दसंस्कृतमहाविद्यालय, मीमांसाविद्यालयश्चेति अनेके विद्यालया वर्तन्ते। बह्वो विद्वांसः स्वगृहेऽपि अनेकान् विद्यार्थिनो वेदकर्मकाण्डादिविषयान् अध्यापयन्ति। यथा वेदमूर्ति श्री घैसास गुरुजी महोदयाः तथा वेदान्तो-पनिषत्तीर्थ श्री पं० अण्णा शास्त्री पण्ढरपुरे प्रभृतयः।

एतदतिरिक्त १७९७ शकाब्दे संस्थापिता वेद-शास्त्रोत्तेजकसभा यथापूर्वमद्यापि वेदादिविविध शास्त्रीयविषयेषु प्रतिवर्षं बहून् विदुषः परीक्ष्य सम्मानेन अर्थदानेन च पुरस्कुर्वन्ती चिरात् शास्त्र-संरक्षणविषये प्रयतमाना वर्तते। एका अपराऽप्यत्र गीर्वाणवाग्वर्द्धिनीसभा बहुभ्यो वर्षेभ्यः प्रचलति यस्याः पाक्षिकमधिवेशनमविच्छिन्नरूपेण प्रतिपक्षं वार्षिकमधिवेशनं च महता समारोहेण सम्पद्यते। अस्याः सञ्चालकाः विद्वद्वर्य्य श्री प० गणेशशास्त्री शेण्ड्ये महोदया वर्तन्ते।

अत्रैव वैदिकसंशोधनमण्डल, भण्डारकर रिसर्च इस्टीट्यूट, डेकनकालेजप्रभृतयो भारतप्रसिद्धाः संस्था वर्तन्ते यत्र संस्कृतसाहित्यविषयकं महत्त्वपूर्णं गवेषणाकार्यं प्रचलति। आनन्दाश्रमः, पूना

ओरिएन्टलिस्ट नाम्ना सुप्रसिद्धे प्रकाशनसंस्थे च अत्रैव विराजेते।

संस्कृतप्रचाराय सोत्साहं बद्धपरिकरेषु नवीनेषु विद्वत्सु डा० पलसुले, डा० राहुरकर, डा० सहस्रबुद्धे, श्री पं० गणेशशास्त्री लोंढे, श्री पं० वसन्त गाडगिल-प्रभृतयो विशेषरूपेण उल्लेखनीया वर्तन्ते। अत्रैव श्री श्रीपादशास्त्री किंजवडेकरनामानोऽपि एके विशिष्टा विद्वांसो विराजन्ते। मीमांसायां तन्त्रशास्त्रे च एतेषामसाधारणं वैदुष्यम्। धर्मसंस्कृति-सम्बन्धिनां विषयाणां विवेचने प्रवचने चापि इमे अत्यन्तं प्रवीणाः। भाषणशैली अपि एतेषां बाह्य-विनोदबहुलतया नितान्तं हृदयाह्लादिनी।

भारतवाणी शारदा चेति द्वे पाक्षिकपत्रिकेऽपि इतः प्रकटीभवतः। तयोः प्रथमा डा० पलसुले-महोदयैः सम्पाद्यमाना पुणेसंस्कृतसभातो बहुवर्षेभ्यः प्रकाशते। अपरा च शारदा श्री वसन्तगाडगिल-महोदयैरधुनैव सम्पादयितुमारब्धा।

अथ च अत्र केचन विद्वांसः प्राचीनधार्मिक-परम्परायां परिवर्तनं विधाय स्वविचारानुसारं एकस्या नूतनपरम्परायाः स्थापनाय प्रचाराय च प्रयतमाना वर्तन्ते। एतदर्थं तैः पुण्यपत्तने धर्मनिर्णयमण्डल नाम्ना एका संस्थापि सञ्चालिता वर्तते तथा तत एव स्वपक्षपोषणाय बहूनि पुस्तकान्यपि प्रकाशितानि सन्ति। एतत्परिवर्तनवादपुरस्कर्तृषु विद्वत्सु डा० काणे, तर्कतीर्थ प० लक्ष्मणशास्त्री जोशी, श्री पं० महादेवशास्त्री दिवेकर तथा पं० रघुनाथशास्त्री कोकजे चेति विद्वांसः अग्रगण्याः सन्ति। परन्तु एतेषां नवमतवादिनो विचारतुरङ्गमा यथा उच्छृङ्खला भूत्वा विपथगामिनः समाजविघातकाश्च नभवेयुरिति तेषां निरोधाय अपि सुबद्धपरिकरा अत्र एके वयोवृद्धा विद्वांसो विराजन्ते। ते खलु विद्वत्समाजे सुगृहीत-नाम श्री पं० गोविन्द महादेव जोशीमहोदयाः सन्ति। एते सम्प्रति नितान्तं वयोवृद्धा अपि वृद्धकेशरी इव गर्जन्तो नवमतवादिनो विद्वद्वर्गस्य विचाराणां परीक्षणे खण्डने च लेख-व्याख्यानादिना पुस्तकप्रकाशनेन च निरन्तरं समुद्यतास्तिष्ठन्ति। एवं च धर्मसंस्कृति-विषयेऽपि अन्यस्थानापेक्षया इदं नगरं विशेषतया जागरूकं दृश्यते।

एतदतिरिक्तमस्य स्थानस्य अन्या अपि काश्चन विशेषता वर्तन्ते। अद्यापि अस्मिन् नगरे द्वौ आहिताग्नी वर्तेते। अनेके घनान्तवेदपाठिनो वैदिका विद्वांसः सन्ति। स्वाहाकारस्य वेदपारायणपाठस्य च पावनपरम्परा अद्यापि अविच्छिन्नतया प्रचलन्ती दृश्यते। संस्कृतसंस्कृतिसम्बन्धीनि सभासम्मेलनानि अपि अत्र अव्यवहितरूपेण स्थले स्थले अनुष्ठीय-मानानि वर्तन्ते। ब्राह्मणविद्वत्समाजे आचारनिष्ठापि साधीयसी।

अस्मिन् नगरे गीर्वाणवाग्वर्द्धिनीसभायाः प्रधानसञ्चालकानां श्री पं० गणेशशास्त्रि शेण्डे-महोदयानां गृहे स्वगृहनिर्विशेषमहमेकादशदिनानि निवासं कृतवान्। एतेषां परिवारे वयोवृद्धा युवानो बालका बालिकाश्चेति सर्वेऽपि यथायोग्यं संस्कृतं व्यवहरन्ति स्मेति मे महानानन्दविषय आसीत्। अपि च संस्कृतप्रचारकाणां कृते एतेषां गृहं सर्वदा उन्मुक्तद्वारं तिष्ठति तथा सर्वेऽपि परिवारजना अतिथये स्निह्यन्ति इति मया साक्षादेवानुभूतम्। अत्र निवासकाले अन्यच्च यद्यन्मया सौख्यमासादितं तधस्तने पद्येन विज्ञेयम्।

वासो राजपथे, गृहस्य पुरतो यानानि, रात्रौ कथाः
शय्या-भोजन-पान-सौख्यमखिलं स्वेच्छानुकूलं सदा।
स्नानश्चोष्णजलेन नित्यमुभयोरुष्णा च टी सन्ध्ययो-
र्विद्वद्वर्य-गणेशशास्त्रिसदने किं किं न लब्धं सुखम्॥

### बम्बई ( मुम्बापुरी )

१६-११-५६

अत्र भारतीयविद्याभवनसञ्चालितः श्री मुम्बादेवी संस्कृतमहाविद्यालयः ( चौपाटी ), श्री जे० टी० संस्कृतमहाविद्यालयः ( ग्वालियर टैंक ), श्रीकृष्ण संस्कृतविद्यालयः ( फणसवाडी ), श्री देवनायकाचार्य सं० विद्यालयः ( बड़गादी ) जे० वी० एम० संस्कृत-विद्यालयः ( कालवादेवी रोड ), वाणीविहार संस्कृत विद्यालयः ( माटुङ्गा ), श्री संस्कृतमहाविद्यालयः ( विलेपारला ) इत्येते संस्कृतविद्यालया वर्तन्ते ।

अस्मिन् नगरे सर्वप्रधानं संस्कृतप्रचारकेन्द्रं भारतीयविद्याभवनमेव वर्तते। अस्यैव क्रोडे संस्कृत-विश्वपरिषदोऽपि कार्यालयो विराजते। आभ्यामु-भाभ्यामपि संस्थाभ्यां महाविद्यालयसञ्चालनेन देशे विदेशे च विश्वसंस्कृतपरिषदः शाखास्थापनेन, सम्पूर्णेऽपि भारते सरलसंस्कृतपरीक्षाणां प्रवर्तनेन, विविधपुस्तकपत्रपत्रिकादीनां प्रकाशनेन, बहूनां व्रतपर्वोत्सवजयन्तीनां ससमारोहमायोजनेन च सुमहती सुरभारतीसेवा विधीयते। अनयोरुभयोरपि संस्थयोः प्रधानसञ्चालकाः श्री के० एम० मुंशीमहोदयाः तथा प्रधानमन्त्रिणः श्री जे० एच० दवे महोदया वर्तन्ते ।

अस्मिन् नगरे संस्कृतविश्वपरिषदा मुम्बापुरी संस्कृताध्यापकसंघनाम्नापि एका संस्था संस्थापिता वर्तते। एवमेवात्र एका ब्राह्मणसभा नाम्नापि संस्था प्रचलति या प्रतिवर्षं बहूनां संस्कृतनाटकानामभिनयं बहुषु स्थानेषु अतीव कौशलेन सह सम्पादयति। अस्याः सभायाः संस्कृतप्रचारपक्षे इयमेका सर्वाति-शायिनी विशेषता ।

अनेकोपनगरसमन्वितेऽस्मिन् विशाले नगरे यत्र तत्र भूयांसो विद्वांसः संस्कृतप्रणयिनश्च महानुभावा वर्तन्ते। तेषु भारतीयविद्याभवनस्थ-संस्कृतमहा-विद्यालयप्रधानाचार्याः श्री दीक्षितारमहोदयाः, भारतीयविद्याभवनस्थपरीक्षामन्त्रिणः श्री महेशचन्द्र शास्त्रिमहोदयाः, श्री एल० एन० चन्द्रदेवमहोदयाः, सिद्धार्थकालेजे संस्कृताध्यापकाः श्री माधवाचार्य महोदयाः, बडामन्दिराधिपतयः श्री दीक्षितजी महा-राजाः, "बालसंस्कृत" पत्रसम्पादका वैद्यवर्य्याः श्री रामस्वरूपशास्त्रिणः तथा माटुङ्गास्थित वाणीविहार संस्कृतविद्यालयस्य प्रधानाचार्याः श्री महाहुलि सविशेषमुल्लेखनीयाः सन्ति ।

बम्बईनगरे निवासार्थ स्वल्पमपि स्थानं महता काठिन्येन लभ्यते इति सर्वप्रसिद्धं वर्तते। तदनुसारं प्रथमं मयापि दिनद्वयं यावत् किञ्चिदसौविध्यमनु-भूतम्। परं तत्पश्चात् विलेपारलास्थितस्य संस्कृत-महाविद्यालयस्याध्यापकैः श्री पं० जीवेश्वर झा महोदयैः सर्वविधं निवासभोजनादिसौविध्यमुपकल्पितम् ।

### पारडी ( जि० सूरत )

२६-११-५६

वेदमूर्तीनां श्री श्रीपाद दामोदर सातवलेकर महोदयानां शुभाभिधानेन, तेषां वैदुष्येन, तथा शताधिकवैदिक साहित्यविषयक पुस्तकप्रकाशनात्मकेन पुरुषार्थेण च सर्वेऽपि भारतीया विद्वांसः परिचिताः सन्ति। एतेषां स्वाध्यायमण्डलनाम्नी संस्था या पूर्वं सतारामण्डलान्तर्गते औंधस्थाने आसीत् सा एव इदानीं पारडीग्रामे प्रतिष्ठिता वर्तते ।

अनया संस्थया बहुभ्यो वर्षेभ्यः हिन्दी-गुजराती-मराठीतिभाषात्रये मासिकपत्राणां प्रकाशनेन, विविध-संस्कृतपरीक्षाणां प्रवर्तनेन, धर्मसंस्कृतिसम्बन्धिनां ग्रन्थानां प्रकाशनेन, मूल-सटीक-सानुवाद-सभाष्य-वेदग्रन्थानां सम्पादनेन सम्प्रति "दैवतसंहितानां"

प्रकाशनेन च संस्कृतभाषाया भारतीयसंस्कृतेः वैदिकसाहित्यस्य च अवर्णनीया सेवा विधीयते।

श्रीमन्तः सातवलेकर महोदया इदानीमासन्नशतायुषोऽपि प्रातरारभ्य रात्रौ नववादनपर्यन्तमविरतं परिश्रमं कुर्वन्ति। किमधिकम्, मदर्थं चायपानं, सन्ध्यायै काष्ठपीठम् अर्घाय जलपात्रं च स्वयं तैरेव उभयोः सन्ध्ययोरानीयते स्म। सङ्कोचवशान्मया वारं वारं निवार्य्यमाणा अपि ते "एतदर्थमेव इदं शरीरं वर्तते, अतिथिसत्कारस्तु अस्माकं वैदिको धर्मः" इत्यादिकं मन्दं मन्दमभिधाय सर्वमिदं स्वयं विदधत्येव।

ऋषिकल्पानामेषां तपस्विनां पुण्याश्रमे यन्मया दिनद्वयमवस्थितेरवसरो लब्धस्तदहं परं सौभाग्यमात्मनो मन्ये।

## बडौदा (वटपत्तनम्)

३-१२-५६

इदं नगरं गुर्जरप्रदेशस्य प्रधानं विद्यास्थानम्। अत्र महाराजा संभाजीराव विश्वविद्यालयान्तर्गतः एकः संस्कृतमहाविद्यालयो वर्तते। अत्रत्यः पाठ्यक्रमः स्वतन्त्रो विद्यते। अस्मिन् विद्यालये सम्प्रति त्रयोदश अध्यापका वर्तन्ते। प्रधानाचार्यः श्री हरिप्रसाद मेहता एम० ए०, बी० टी०, काव्यतीर्थ महोदया वर्तन्ते। इमे अध्यापनकलाकुशला उत्साहसम्पन्नास्तथा सहृदया विद्वांसः सन्ति। न्यायव्याकरणाचार्यः श्री शोभित मिश्र महोदयः तथा ज्योतिषाचार्यः श्री लक्ष्मीकान्त झा महोदयश्चेति इमावपि अस्य विद्यालयस्यालङ्कारभूतौ विशिष्टौ विद्वांसौ। अस्मिन् विद्यालये एकं वैशिष्ट्यमपि विलोकितम्। अत्र सर्वासु कक्षासु सर्वेषामपि पाठ्यग्रन्थानां परिचयात्मकं चित्रपटं शोभनाक्षरैर्लिखित्वा संस्थापितं वर्तते। चित्रपटेषु तत्तद्ग्रन्थानां सर्वेऽपि विषयोपविषयाः रचयितॄणां नाम-धाम-जन्मकालादि विवरणञ्च सम्यक् सम्मुल्लिखितं वर्तते। सर्वेषामपि विद्यालयानां कृते अनुकरणीया इयं रीतिः। समये-समये विद्यालयेऽस्मिन् संस्कृतव्याख्यानानामपि आयोजनं क्रियते। प्रतिवर्षमत्र आश्विननवरात्रावसरे शारदोत्सव समारोहः सम्मान्यते यस्मिन् कविसम्मेलन-वादविवाद - वक्तृत्व - नाट्य - सङ्गीतादीनां मनोरमाः कार्यक्रमा उपस्थाप्यन्ते।

रामप्रसादीयसंस्कृतविद्यालयनाम्ना एका अपराऽप्यत्र संस्कृतपाठशाला प्रचलति तथा एतन्नगरात् किञ्चिद्दूरे सियातलावनामके स्थाने एकः ऋषिकुलब्रह्मचर्याश्रमोऽपि वर्तते।

अस्य नगरस्य इदमेकं विशेषरूपेण उल्लेखनीयं वैशिष्ट्यं वर्तते यदत्र एका अनेकवर्षेभ्यः संस्कृतविद्वत्सभा नाम्नी सभा सुव्यवस्थितरूपेण प्रचलति। अस्याः संस्थापकाः प्रमुखसञ्चालकाः स्थायिनोऽध्यक्षाश्च एतन्नगरस्य विद्वत्समाजशिरोमणिस्वरूपाः श्री पं० बदरीनाथशास्त्रिणः सन्ति। सरस-सुललित संस्कृतगीतप्रणयनेन इमे "अभिनव जयदेव" नाम्ना विख्याताः सन्ति। वैदुष्ये "विद्यासुधानिधि" इति विरुदमिमे विभूषयन्ति। परन्तु न केवलमिमे विद्यासुधानिधयः अपितु सौहार्दसुधानिधयः सौजन्यसुधानिधयः औदार्यसुधानिधयस्तथा आतिथ्यसुधानिधयोऽपि वर्तन्ते। एतेषामेव प्रेरणया प्रयत्नेन च अत्रत्या विद्वत्सभा नियमितरूपेण स्वकीयं मासिकं वार्षिकञ्च सम्मेलनं महता समारोहेण सम्पादयति विविधैर्मनोरञ्जनैः कार्यकलापैश्च दर्शकाणां मनो हरति। अनया सभया सारस्वतसौरभमिति नाम्ना पत्रिकाऽप्येका काले काले प्रकाश्यते।

एतस्मिन् नगरे आङ्गलसंस्कृतोभयभाषासाहित्य-विशारदेषु विद्वत्सु रामायणसमितिसंशोधनाध्यक्षाः श्री गोविन्दलालभट्ट महोदयाः श्री रामस्वामीशास्त्रिणः एम० ए०, श्री जगन्नाथ श्रीधर परेशास्त्रिणः एम० ए०, श्री शानभाग महाशयाः, श्री लक्ष्मीनाथ वद्रीनाथ शास्त्री बी० ए० महोदयाः तथा श्री डा० अरुणोदय नटवरलाल जानीमहोदयाश्च सविशेषमुल्लेखनीयाः सन्ति ।

एतन्नगरवर्तिनि विद्वत्समाजे सङ्गीतविषयेऽपि श्लाघनीया निपुणता सुमहान् आदरश्च दृश्यते। उपरि चर्चिताः श्रीबदरीनाथशास्त्रिमहाभागाः सरस-सुललितानां संस्कृतगीतानां प्रणयनेन "अभिनव जयदेव" इति नाम्ना विख्याताः सन्ति । एतदतिरिक्तं पं० जयनारायण रामकृष्ण पाठकाः तथा डा० ए० एन० जानीमहोदया अपि गीतलेखकास्तथा गाय-काश्च । अत्र एका ईदृशी बालिकाऽपि वर्तते या संस्कृतगीतानां गाने अनुमानतोऽप्यधिकं कौशलं भजते ।

विद्वत्सभाया वर्तमानमन्त्रिणो विद्याभास्कर श्रीमणिशङ्कर वसन्तराम उपाध्यायमहोदया अत्रत्येषु विद्वत्सु धार्मिकाणां दार्शनिकानाञ्च विषयाणामेके तत्त्वविवेचका मनीषिणः सन्ति । एभिः प्रणीतं तथा ह्यतमै एकत्रिंशत्पर्धैः महात्मने श्रीगान्धि-महोदयाय समर्पितं "ईश्वरस्वरूपम्" नाम पद्यात्मकं पुस्तकं तत्त्वालोचनात्मकं नितान्त रमणीयं विचारो-त्तेजकं धार्मिककुरीतीनां सुस्पष्टवर्णनविधायकमेकं क्रान्तिकारि पुस्तकमस्ति ।

अस्मिन् नगरे श्रीवदरीनाथशास्त्रिणामेव सदने मया दिनचतुष्टयं निवासः कृतः । यद्यपि तस्मिन् समये श्रीशास्त्रिमहोदया बम्बईनगरे आसन् तथापि श्रीवटुकनाथशास्त्रिणां प्रसन्नमधुरेण स्वभावेन स्नेह-सद्भावपरिपूर्णेन व्यवहारेण च अहं महान्तं सन्तोषमन्वभवम् ।

## अहमदाबाद

६-१२-४६

अस्मिन् नगरे श्री काशीविश्वनाथसंस्कृतमहा-विद्यालयः, स्वामीनारायणसंस्कृतमहाविद्यालयः, श्री ब्रह्मचारीसंस्कृतपाठशाला, संस्कृतपाठशाला तथा हिरापुरजीसंस्कृतपाठशालेति पञ्च संस्कृतविद्यालयाः सन्ति । एषु सर्वाङ्गपूर्णतया अध्यापकविद्यार्थिबाहुल्येन च श्री काशीविश्वनाथसंस्कृतमहाविद्यालय एव प्राथम्यमर्हति । अत्रत्याः प्रधानाचार्याः श्री पं० दीनानाथ झा महोदयाः न्यायवेदान्ताचार्या अस्य नगरस्य प्रमुखेषु पण्डितेषु अग्रगण्या वर्तन्ते । अत्र च एतेषामेव महोदयानां स्थाने सर्वसुखान्यनुभवन्नहं पञ्चसप्तदिनानि निवासमकरवम् ।

एतन्नगरवर्तिनां विद्यालयानामध्यापकेषु छात्रेषु वा छात्रसभासञ्चालने संस्कृतसङ्गीतनाटकव्याख्याना-दीनामायोजने अन्येषु वा सांस्कृतिकेषु कार्यकलापेषु काचिदुल्लेखनीया अभिरुचिर्नास्ति ।

अस्मिन् नगरे एका बृहद्गुजरातसंस्कृतपरिषन्नाम्ना प्रदेशव्यापिनीसभा प्रचलति यस्याः कार्यालयः श्री काशीविश्वनाथमहाविद्यालये वर्तते । अनया सभया निखिलेऽपि गुर्जरप्रदेशे सरलसंस्कृतपरीक्षाणां प्रवर्तनेन तदनुरूप-पाठ्यपुस्तकानां प्रकाशनेन संस्कृत-परीक्षाणां सञ्चालनेन तथा अन्यैश्च बहुविधैः सङ्कल्पितैरुपायैः सुरभारतीसेवायाः प्रशंसनीयः कार्यक्रमः समारब्धो वर्तते ।

एतन्नगरस्य नवयुवकेषु आङ्गलविद्यालयाध्यापकेषु श्री भगवतीप्रसाद पण्डया एम० ए०, व्याकरणाचार्याः

सविशेषमुल्लेखनीया वर्तन्ते। इमे यथा अध्यापने तथैव साहित्य-सङ्गीत-नाटक-भाषण-सभासम्मेलनादि विषयेऽपि नितरामधिगतपाटवा वर्तन्ते। एते स्वरूपेण मनोहराः, वचसा मधुवर्षिणः, हृदयेन स्नेहसौजन्यनिधयो, धर्मेण परहितसम्पादनपरा एके भविष्णवो विद्वांसः सन्ति।

अत्र एतन्नगरालङ्कारभूतावन्यावपि द्वौ भारत-प्रसिद्धौ वयोवृद्धौ विद्वांसौ वर्तेते। तयोरेके जैन-विद्वांसः प्रज्ञाचक्षुषः श्री पं० सुखलालजी संघवी महोदया वर्तन्ते यैर्गुर्जरभाषायां धर्मसंस्कृतिसाहित्य-सम्बन्धिनः पाण्डित्यपूर्णा अनेके निबन्धा लिखिता सन्ति।

अपरे महानुभावाः रामानन्दसम्प्रदायाचार्येषु विश्रुतनामानः पण्डितराजेति विरुदविभूषिताः श्री प० भगवदाचार्यमहोदया वर्तन्ते। एतेषां बहुविधं व्यक्तित्वं दर्शकानां हृदये अमन्दमानन्दं परं कौतूहलं च जनयति। तथा हि—एते न केवलं साम्प्रदायिक ग्रन्थानामेव आचार्या अपितु वेद-व्याकरण-साहित्य-दर्शन-धर्मशास्त्र-पुराणेतिहासादिविषयाणामपि विशिष्टा विद्वांसः। न केवलं विद्वांसः प्रत्युत प्रवचनेऽपि सुतरां पटीयांसः। अपि च भारतपारिजातनामक गान्धिचरित्रात्मकमहाकाव्यस्य प्रणेतारोऽपि इमे। एतदतिरिक्तं संस्कृत - हिन्दी - गुर्जरभाषायामेभिः षडशीतिपुस्तकानि लिखितानि प्रकाशितानि च। इदानीमपि कानिचिन्नूतनानि पुस्तकानि लिख्यन्त एव। भाषासु अंग्रेजी - फारसीभाषयोरपि एतेषां प्रभूतं प्रभुत्वम्। इयं पाण्डित्यचर्चा। अथ विचाराः स्वभावश्च एते प्राचीनपाण्डित्यजुषोऽपि न रूढिपरि-पोषकाः अपितु सदसद्विवेचकाः, समुचितपरिवर्तन-वादिनो रामानन्दसम्प्रदाये क्रान्तिकारिणो निर्भीकाः साहससम्पन्नाश्च मनस्विनो मनीषिणः सन्ति। धर्माचार्या अपि इमे आडम्बरविहीनाः सेवकसेविका-शिष्यशिष्यादि संग्रहपराङ्मुखाः एकाकिन एव निवसन्ति स्वहस्तेनैव च स्वीयं सकलमपि गृहकृत्यं समागतानामातिथ्यं च सम्पादयन्ति। एकान्त-वासिनोऽपि न इमे मौनधारिणो नापि नीरसा न च प्रदर्शनार्थं कल्पितगम्भीरमुखमुद्राः प्रत्युत प्रसन्न-मुखमण्डला मधुरभाषिणो विनोदिस्वभावानिश्छल-हृदयाश्च महात्मानः सन्ति। एभिः स्वकीयः सर्वोऽपि अनेकभाषामय-विपुलतरामूल्यग्रन्थपरिपूर्णः साहित्यभण्डारोऽपि बहुजनहिताय गुजरातविद्यापीठ-संस्थायै स्वेच्छया समर्पितः। एवं च इमे विद्वच्छब्दार्थं साधुशब्दार्थं च समीचीनतया चरितार्थयन्ति।

एतन्नगरनिवासिषु संस्कृतानुरागिषु व्यापारि-जनेषु श्री नारायणभाई लालाभाई ठकरमहोदया अपि एके अनुपमाः सत्पुरुषाः सन्ति। विद्यया सह विनयः, प्रियवचनेन सह दानम्, धर्माचरणेन सह उत्तमा विचारास्तथा वाणिज्येन सह सुवक्तृत्व-मित्यनेकेषां सुदुर्लभानां गुणानां समन्वयस्य इमे प्रत्यक्षमुदाहरणम्।

## जयपुर

१२-१२-५६

राजस्थाने जयपुरं नाम संस्कृतविद्याया एकं भारतप्रसिद्धं केन्द्रं वर्तते। अत्र महाराजासंस्कृत-कालेजनाम्ना एकः सर्वावयवपरिपूर्णो बृहत्तमः संस्कृत-विद्यालयः प्रचलति। अस्मिन् महाविद्यालये सर्वेषा-मपि विषयाणामध्यापनं भवति। एतदतिरिक्तमत्र अन्यावपि द्वौ विद्यालयौ वर्तेते। एकः स्वामीनारायण-संस्कृतमहाविद्यालयः तथा अपरो जैनसंस्कृतमहा-विद्यालयः। इमावपि विद्यालयौ प्रतिष्ठितौ सर्वाङ्ग-

परिपूर्णो च। परन्तु सभासम्मेलनादिविषये अत्रापि विद्यालयेषु शिथिलता अवलोकिता।

अस्मिन् नगरे एका संस्कृतवाग्वर्धिनीपरिषत् वर्तते यस्याः मन्त्रिणः आयुर्वेदकालेजस्य संस्कृताध्यापकाः श्रीनारायणशास्त्री कांकर महोदया वर्तन्ते। संस्कृतसेवायै सदा समर्पितमनोवाक्काया इमे अत्यन्तमुत्साहसम्पन्नाः कार्यकुशलाः सहृदयाश्च। एतेषामेव प्रयत्नेन परिषदा एका रात्रिपाठशालापि सञ्चाल्यते। समये-समये परिषदा प्रतिवर्षं विशिष्टान्यपि सम्मेलनानि आहूयन्ते। अस्याः परिषदः अध्यक्षाः श्री पं० मथुरालाल शर्माणः एम० ए०, डी० लिट् महोदयाः प्राधान्येन आङ्गलभाषाया एव विद्वांसः तथापि संस्कृताध्ययने नितरामनुरागवन्तः संस्कृतभाषणप्रणयिनः संस्कृत प्रचारौपयिकेषु कार्यकलापेषु सश्रद्धं दत्तचित्ता अस्य नगरस्य एके महान्तः संस्कृतसंरक्षकाः सन्ति। एते प्रतिदिनं रात्रौ स्वपरिवारं स्वकीयान् भृत्यांश्च तुलसीकृतरामायणं श्रावयन्ति। इदमपि एकमनुकरणीयं वैशिष्ट्यमवलोकितं मया एतेषु।

अस्य नगरस्य अपरे आकर्षणभूता महाविद्वांसः भारतीपत्रिकायाः सम्पादकाः श्रीभट्ट मथुरानाथशास्त्रि महोदया वर्तन्ते। हिन्दी-उर्दू छन्दस्सु संस्कृतकाव्यप्रणयनपरिपाटी प्रवर्तनाचार्या इमे निजकवित्वकौशलेन भारतीयसंस्कृतकविजनेषु निस्संशयं कनिष्ठिकामधितिष्ठन्ति। एतैरिमामभिनवां शैलीमङ्गीकृत्य साहित्यवैभवम्, जयपुरवैभवं गोविन्दवैभवञ्चेति त्रीणि नवनवविषयभावभङ्गिमविभूषितानि अपूर्वरमणीयानि काव्यानि विरचितानि। इमानि अभिनवसंस्कृतसाहित्यरसिकैरेकवारमवश्यमेव विलोकनीयानि। सर्वेषु संस्कृतविद्यालयेषु रक्षणीयानीति मे बलवती अभ्यर्थना।

सम्प्रति जयपुरनगरनिवासिनः एकस्यापरस्यापि महापुरुषस्य परिचयं दातुमिच्छामि। इमे महानुभावा न केवलं जयपुरस्य अपितु समस्तभारतराष्ट्रस्य विशिष्टगौरवस्वरूपाः वेदब्राह्मणागाधमहोदधिमन्थनमन्दरायमानाः श्री पं० मोतीलालशर्माणः सन्ति। एभिः स्वर्गीय स्वगुरुवेदवाचस्पति श्रीमधुसूदन झा महोदयानामभिनवां वैज्ञानिकीं व्याख्यानसरणिमनुसृत्य वेदानां ब्राह्मणग्रन्थानां च अपूर्वं ज्ञानविज्ञानसमन्वितं भाष्यं अशीतिसहस्रपृष्ठेषु लिखितं वर्तते। एतेषां वेदविज्ञानविषयिणोऽनेके महान्तो निबन्धग्रन्थाः प्रकाशिताः सन्ति। अपरे च शनैः शनैः प्रकाशपदवीमारोहन्ति। एभिर्लिखितानां प्रकाशितानां च निबन्धग्रन्थानां पृष्ठात्मकानि सप्त सूचीपुस्तकानि मूल्यं विनैव लभ्यन्ते। तानि वैदिकैर्विद्वद्भिरवश्यमेव द्रष्टव्यानि। एभिरेव "भारतीय संस्कृति और सभ्यता" नाम्ना अपरोऽप्येको महान् ग्रन्थः प्रणीतोऽस्ति। भारतीयसंस्कृतेः सभ्यतायाश्च तत्वं वास्तविकं स्वरूपं च जिज्ञासमानैरेषा संस्कृत्युपनिषद् अचिरेणैव द्रष्टव्या मन्तव्या चेति मम हार्दिकं निवेदनम्।

एवं च इमे जयपुरसन्निहिते एव दुर्गापुराञ्चले मानवाश्रमनाम्ना एकमाश्रमं कल्पयित्वा तत्रैव लोककोलाहलेभ्यो दूरीभूता विलुप्तप्रायवैदिकविज्ञानज्योतिषां प्रकाशेन वेदब्राह्मणार्थविषयक गाढान्धकारविध्वंसनतपश्चर्यायां निलीना वर्तन्ते।

अस्मिन् नगरे महाराजा संस्कृतविद्यालये ज्योतिषविभागाध्यक्षाणां श्रीमतां पं० विन्ध्याचल प्रसाद पाण्डेय महोदयानां भवने मम निवास आसीत्। इमे मम सम्बन्धिनोऽपि विद्यन्ते। तस्मादत्र यन्मया सुखं सौविध्यञ्च समासादितं तद्वर्णनं पाठकानां नातिविस्मयकरं जायेत।

च्छन् । यत् प्रभावादिमे प्रत्युत्पन्नमतयः परनिर्दिष्टविषयानुसारं परसङ्केतितकोष्ठानुसारञ्चाक्षराणि विन्यस्य क्षण एव विना विलम्बं श्लोकरचनां प्रदर्शयन्ति स्म । एतच्च स्वयं मयाऽपि बहुधाऽन्वभावि ।

अनन्तरञ्च १९१७ तमे खीस्ताब्दे जनवरीमासे प्रथमप्रथमं स्थाप्यमाने मुजफ्फरपुरस्थे विहारस्यैकमात्रराजकीय-धर्मसमाजसंस्कृतमहाविद्यालये धर्मशास्त्रपुराणप्राध्यापकपदे ते न्ययुज्यन्त । प्रायः सप्तविंशतिवर्षाणि यावत् शास्त्राण्य-ध्यापयन्त आर्षर्णादुन्मुक्ताः १९४४ तमे खीस्ताब्दे राजकीयसेवातो लब्धपूर्णावकाशाः पुनर्गृह एवाध्यात्मिकचर्चाभिः समयानयापयन् । एतद्वैदुष्यप्रभाविता विहार-संस्कृतसमितिर्निजदीक्षान्तसमारोहावसरे "प्रधानाचार्य" इत्युपाधिनैतान् पण्डितमहोदयान् व्यभूषयत् ।

एतेषां वैदुष्यविद्यासेवाभिः परितुष्टो विहारशासनं पुनरपि १९५४ तमे खीस्ताब्दे दरभङ्गास्थसंस्कृत-विद्या-पीठे सोपायनमेनान् तत्र शास्त्रीयान्वेषणकार्यकर्तृभ्यो निर्देशप्रदानेन साहाय्यमाचरितुं नियुक्तवान् । विद्यापीठकार्यं कुर्वाणा एव ते कतिपयमासेभ्योऽस्वस्थाः सन्तः १९६१ तमखीस्तवर्षस्य नवम्बरमासे पञ्चदशतारिकायां तदनुसारं २०१८ वैक्रमसंवत्सरस्य कार्तिकशुक्लाष्टम्यां दिवङ्गता अभूवन् । तदीयात् स्वर्गमनादिदानीं पण्डितसमाजो निजां महती हानिमनुभवन् तदीयात्मनः शान्त्यर्थं तत्परिवाराय धैर्यप्रदानार्थञ्च भगवन्तमभ्यर्थयति ।

---

## शुभाशंसनम्

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥
अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥
स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ता सुखिनो भवन्तु ॥

---

# श्रीभारतधर्म महामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशितपुस्तकानि

## श्रीस्वामि दयानन्द महाराजद्वारा रचितानि

१—धर्मकल्पद्रुम प्र० ख० २)
२—धर्मकल्पद्रुम द्वि० ख० १॥)
३—धर्मकल्पद्रुम तृ० ख० २)
४—धर्मकल्पद्रुम च० ख० २)
५—धर्मकल्पद्रुम प० ख० २)
६—धर्मकल्पद्रुम ष० ख० ३॥)
७—धर्मकल्पद्रुम स० ख० २)
८—धर्मकल्पद्रुम अ० ख० ३॥)
९—धर्मकल्पद्रुम, प्रथम द्वितीय खण्ड एक साथ रायल एडी० ५)
१०—प्रवीण दृष्टिमें नवीन भारत प्र० ख० २)
११—प्रवीण दृष्टिमें नवीन भारत द्वि० ख० २)
१२—नवीन दृष्टिमें प्रवीण भारत १)
१३—साधन चन्द्रिका १।॥)
१४—शास्त्रचन्द्रिका १॥)
१५—धर्म चन्द्रिका १।)
१६—आर्यगौरव ॥)
१७—नीतिचन्द्रिका ॥)
१८—धर्मप्रश्नोत्तरी ।)
१९—चतुर्दशलोक रहस्य ।)
२०—गीतार्थचन्द्रिका सजिल्द ३) अजिल्द २॥)
२१—सनातनधर्मदीपिका ।॥)
२२—धर्मविज्ञान प्र० ख० ५)
२३—धर्मविज्ञान द्वि० ख० ४)
२४—धर्मविज्ञान तृ० ख० ४)
२५—सती चरित्रचन्द्रिका २)
२६—नित्यकर्म चन्द्रिका ।)
२७—धर्मसोपान ।)
२८—धर्मकर्म-दीपिका ।)
२९—सदाचार सोपान —)
३०—कन्याशिक्षा सोपान —)
३१—ब्रह्मचर्य सोपान ।)
३२—साधन सोपान ॥)
३३—शास्त्र सोपान ।)
३४—उपदेशपारिजात ॥)
३५—कल्किपुराण १॥)
३६—पातञ्जलयोगदर्शन ३)
३७—महामंडल रहस्य १॥)
३८—मन्त्रयोगसंहिता १)
३९—हठयोगसंहिता ॥)
४०—तत्त्वबोध =)
४१—स्तोत्र कुसुमाञ्जलि ।)
४२—भगवद्गीता प्रथम खंड १)
४३—विष्णुगीता १)
४४—सूर्यगीता ॥)
४५—शक्तिगीता १)
४६—धीशगीता ।॥)
४७—शंभुगीता १)
४८—संन्यासगीता १)
४९—गुरुगीता ।)
५०—कर्ममीमांसादर्शन प्र० ख० १॥)
५१—कर्ममीमांसादर्शन द्वि० ख० २)
५२—कर्ममीमांसादर्शन तृ० ख० ५)
५३—कर्ममीमांसादर्शन ( संस्कृत ) २)
५४—रामगीता २॥)
५५—कहावत रत्नाकर साधा० रायल १०)
५६ रामायण तुलसीकृत १॥)
५७—दैवीमीमांसादर्शन प्र० भा० ३॥)
५८—दैवीमीमांसादर्शन द्वि० भा० ५)
५९—त्रिवेदी सन्ध्या ।=)
६०—गोव्रत-तीर्थमहिमा ॥)
६१—मार्कण्डेय पुराण प्र० ख० १)
६२—मार्कण्डेय पुराण द्वि० ख० १)
६३—मार्कण्डेय पुराण तृ० ख० १)
६४—ऋजुपाणिनीयम् ।॥)
६५—संगीत सुधाकर ।)
६६—पुराणरहस्य १॥)
६७—संन्यासधर्मपद्धति १॥)

सम्पादकः प्रकाशकश्च—अवधेशप्रसादशर्मा, श्रीभारतधर्ममहामण्डल, जगतगंज, वाराणसी कैन्ट।
मुद्रकः—विश्वनाथ भार्गव, मनोहर प्रेस, जतनबर, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्

वर्षम् ३८

अङ्काः ७–९

सम्पादकः
**गो० न० वैजापुरकरः**

जुलाई–अगस्त–सितम्बर
१९६२

वार्षिक-मूल्यम्
५) रुप्यकाणि



## पृथ्वी केषां प्रभावैर्धृता ?

दोषहेतूनशेषांश्च वश्यात्मा यो निरस्यति ।
तस्य धर्मार्थकामानां हानिर्नाल्पापि जायते ॥
सदाचाररतः प्राज्ञो विद्याविनयशिक्षितः ।
पापेऽप्यपापः परुषे ह्यभिधत्ते प्रियाणि यः ॥
मैत्रीद्रवान्तःकरणस्तस्य मुक्तिः करे स्थिता ।
ये कामक्रोधलोभानां वीतरागा न गोचरे ।
सदाचारस्थितास्तेषामनुभावैर्धृता मही ॥

( विष्णुपुराणात्
३।१२।४०–४२
समुद्धृतम् )

—महर्षिः और्वः

# अनुक्रमः



● ● ●

---

**ग्राहका विनिवेद्यन्ते**

यद्द्यावधि बहूनां प्रत्नग्राहकाणां वार्षिकं शुल्कमस्माभिर्नाधिगतम् । कृपया तैरङ्कममुं समुपलभ्य पञ्च रूप्यकाणि वार्षिकशुल्कं त्वरितं प्रेषणीयमिति ।

—व्यवस्थापकेन

96-८४०


# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य मासिकं मुखपत्रम् ।


रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥


३८ वर्षे ] आषाढ-श्रावण-भाद्रपदाः २०१९ : जुलाई, अगस्त, सितम्बर : १९६२ [ ७–९ अङ्काः


## चिदानन्दरूपं भजेम स्वरूपम् !

अनेकान्तिकं द्वन्द्वशून्यं विशुद्धं नितान्तं सुशान्तं गुणतीतमेकम् ।
सदा निष्प्रपञ्चं मनोवागतीतं चिदानन्दरूपं भजेम स्वरूपम् ॥ १ ॥
सदा स्वप्रभं दुःखहीनं ह्यमेयं निराकारमत्युज्ज्वलं भेदहीनम् ।
स्वसंवेद्यमानन्दमाद्यं निरीहं चिदानन्दरूपं भजेम स्वरूपम् ॥ २ ॥
अहंप्रत्ययत्वादनेकान्तिकत्वादभेदस्वरूपात् स्वतःसिद्धभावात् ।
अनन्याश्रयत्वात् सदा निष्प्रपञ्चं चिदानन्दरूपं भजेम स्वरूपम् ॥ ३ ॥
अहं ब्रह्म भासादिमत् कार्यजातं स्वलक्ष्येऽद्वये स्फूर्तिशून्ये परे च ।
विलाप्य प्रशान्ते सदैवैकरूपे चिदानन्दरूपं भजेम स्वरूपम् ॥ ४ ॥
अहंब्रह्मभावो ह्यविद्याकृतत्वात् विभिन्नात्मकं भोक्तृभोग्यात्मबुद्ध्या ।
जडं सम्बभूवाथ पुंस्त्व्यात्मना यत् चिदानन्दरूपं भजेम स्वरूपम् ॥ ५ ॥
अनित्यं जगच्चिद्विवर्तात्मकं यत् विशोध्य स्वतःसिद्धचिन्मात्ररूपम् ।
विहायाखिलं यन्निजाज्ञानसिद्धं चिदानन्दरूपं भजेम स्वरूपम् ॥ ६ ॥
स्वभासा सदा यत्स्वरूपं स्वदीप्तं निजानन्दरूपाद्यदानन्दमात्रम् ।
स्वरूपानुभूत्या सदा यत्स्वमात्रं चिदानन्दरूपं भजेम स्वरूपम् ॥ ७ ॥
जगन्नेति वा खल्विदं ब्रह्मवृत्त्या निजात्मानमेवावशिष्याद्वयं यत् ।
अभिन्नं सदा निर्विकल्पं प्रशान्तं चिदानन्दरूपं भजेम स्वरूपम् ॥ ८ ॥
निजात्माष्टकं ये पठन्तीह भक्ताः सदाचारयुक्ताः स्वनिष्ठाः प्रशान्ताः ।
भवन्तीह ते ब्रह्म वेदप्रमाणात् तथैवाशिषा निश्चितं निश्चितं मे ॥ ९ ॥

—समर्थानुगृहीत-महात्मा श्री श्रीधरस्वामी

# श्रीसद्गुरुज्ञानानन्दस्मृतिः

१७.

वेदान्तदर्शनमहो बहुभेदवादैराकृष्यमाणमतिनष्टनिजप्रभावम् ।
दृष्ट्वाऽकरोद् ऋजु समन्वयभाष्यमस्माद् व्यासं भवन्तमपरे विबुधा वदन्ति ॥

१८. संन्यासिभिर्जगदिदं परिपूर्णमास्ते
तत्पद्धतिर्ध्रुवमहो नहि काचिदासीत् ।
तस्याः प्रकाशनपरं परिचिन्त्य लोके
त्वां याज्ञवल्क्यमपरे निगदन्ति सन्तः ॥

१९. बोभूयमानभुवनभ्रमभञ्जकैस्तैः
सद्भिर्महामहिमशालिभिरप्रमेयैः ।
अध्यायकैर्द्विगुणविंशतिभिः प्रशस्तैः
संयुक्तयाऽखिलजगद्धितयाऽऽप्तया च ॥

२०. विज्ञानयोगगुरुवर्यमहर्षि-दत्ता-
त्रेयाभिधानसमलङ्कृतयाधिहन्त्या ।
तत्सर्वजीवहित-शाश्वतरूप-धर्म-
मीमांसया रचितयाऽप्रतिमप्रभावम् ॥

२१. त्वत्पादपद्ममकरन्दनिषेवणेन
विध्वस्तमानसमलीमसदोषशुद्धाः ।
धीराः करामलकवत् कृततत्त्व-दत्ता-
त्रेयावतारमिह केचिदुशन्ति विज्ञाः ॥

२२. ऊर्ध्वं ह्यधश्च भुवनानि चतुर्दशैव
देवासुरैर्नियमितानि च सप्त सप्त ।
चत्वारि हन्त सकलोपरि संस्थितानि
यात्यात्मजिद्धि महरादिसमाह्वयानि ॥

२३. नादश्च बिन्दुरपि पिण्डमथाक्षरं च
ब्रह्माण्डमित्यपि च पुस्तकपञ्चकं हि ।
तेष्वक्षरं निगदितं भुवि नाशशीलम्,
अन्यच्चतुर्विधमनश्वरनित्यरूपम् ॥

२४. सृष्टिस्थितिप्रलयकृद्विधिविष्णुरुद्रै-
र्ब्रह्माण्डमुक्तमथ देवगणैश्च पिण्डम् ।
आर्षं च बिन्दुरुत मानवमक्षरं च
नादश्च नित्यपरमात्मविनिर्गतं हि ॥

२५. जैवं तथा सहजमैशमुदाहृतानि
कर्माणि, तत्र सहजः किल मुक्तिहेतुः ।
ऐशं मुवीशपदवीं वितरत्यमोघां
जैवं गतागतमिदं परिपातिचक्रम् ॥

२६.

वेदान्तशास्त्रसुनिरूपितपञ्चकोषा अञ्चन्त्यशुद्धिमथ पञ्चभिरेव शुद्धिम् ।
इत्यादिकं भगवतश्च मया श्रुतं यत् तत्सर्वमेव तव बोधविजृम्भणोत्थम् ॥

— श्रीविन्ध्येश्वरीप्रसादशास्त्री —

# पाठ्यक्रमतो रामकृष्णयोर्बहिष्कारः

'कल्याण'–मासिकपत्रस्य ऐषमेऽङ्के (सितम्बर '६२) १२११ पृष्ठे 'पाठ्यक्रमतो रामकृष्णयोर्वहिष्कारः' इति शीर्षकेण उल्लिखितमस्ति—"वृत्तमिदं मुद्रितमास्ते यदुत्तरप्रदेशीय-शिक्षा-विभागेन राजकीय-पाठ्य-पुस्तकेभ्यः सोंऽशो वर्जयितुमादिष्टो यत्र-यत्र राम-कृष्णयोरुल्लेखः स्यादिति। इदं मन्तुं चेतो न प्रवर्तते। एवं तु यावन-राज्यकालेऽपि (केवलमौरङ्गजेबीय-शासनं विहाय) न सञ्जातम्। सनातनधर्मावलम्बिनो हिन्दवस्तु राम-कृष्णं परमेश्वरमेव मन्यते। परं यैस्तौ परमेश्वरौ न मन्येते, तेऽपि महापुरुषत्वेन तु तौ मन्येत एव। एवं तयोर्जीवनं परमादर्शभूतं मन्यत एव। भारतीयप्राच्येतिहासतो यदि नाम रामकृष्णौ वर्ज्येते चेत्किमवशिष्येत? एतादृशानि कृत्यानि कोटिकोटि-भारतीयानां हृदि भीषणमाघातकारीणि तु सन्त्येव, देशस्योत्थानविधावपि सर्वथा घोरतमं बाधकानि। एतादृश्या मनोवृत्तेः प्रवृत्तेश्च शीघ्रातिशीघ्रं निरोधः परमावश्यकः। देशवासिभिरस्य घोरतमो विरोधः करणीयः" इति।

यदीदं वृत्तं तथ्यं भवेत्तदा नूनं तद्देशस्य दुर्भाग्यं वक्तव्यं भवेत्। विषयेऽत्र 'कल्याण'पत्रेण कृतो हितोपदेशोऽयं को नाम मतिमानुपेक्षितुं शक्नुयात्? अद्य शासनं राम-कृष्णं पाठ्यवाङ्मयात् निष्कासयितुं प्रयतते, श्वस्तत् मुहम्मद-यीशुमपि बहिष्कर्तुं प्रवर्तेत। किमिदं मुसलिमेशवीयमतानुयायिभिः सह्येत? नो चेत्सर्वधर्मानुयायिभिरद्य विषयस्यास्य घोरतरविरोधेऽस्माकं हार्दिकं साहाय्यं विधेयम्। कैकेय्या श्रीरामभद्र आचतुर्दशवर्षं गृहान्निष्कासितः। तेन च सोऽद्यावधि विश्वचेतसि दृढं पदं धत्ते। केवलं निष्कासयित्री जननी एव जनमानसेभ्यः सुदूरं गता। किमनेन अव्यापारव्यापारेण भारतीय शासनमपि स्वात्मानमेतादृशं कर्तुं वाञ्छति? नूनं शिक्षायाः शासनाधीनीकरणस्य महानयमभिशापः। अत एव पूर्वं सा केवलं वीतरागाणां समाजोन्नायकानां महर्षीणामेव स्वाधीनासीत्। शासनस्य नाममात्रमपि तस्यां नियन्त्रणं नाभूत्। तत्कालीनाः शासका विद्यालयभूतेषु गुरुकुलेषु आचार्याणामनुमतिं गृहीत्वैव प्रविशन्ति स्म। पुनस्तत्र राजपुत्र-ब्राह्मणपुत्रौ सहैवाविशेषं गुरुसेवा-विद्याध्ययने समाचरन्तः स्म। तेन च ध्रुव-मार्कण्डेय-भीष्म-द्रोण-कल्पानि विद्यातेजस्विनश्छात्ररत्नानि वसुमत्यामस्यामाविर्बभूवुः। किन्तु यदा प्रभृति कूटनीतिज्ञैर्वैदेशिक-शासकैरियं शिक्षा स्ववशे यन्त्रिता, तत एवासित-दलीयसुधांशुवदस्या अपि कलाः उत्तरोत्तरं ह्रासमुपगच्छन्त्यो दरीदृश्यन्ते। स्यान्नाम तेन शासनस्य आपेक्षिकं स्थायित्वम्, परं राष्ट्रस्य तु महती हानिरेव जाता, जायते च। प्रतिविपर्यं वैदेशिकचरणचिह्नानुगमशीलैः साम्प्रतिकैः शासकैरपि तदेव क्रियेत चेदीदृश एव भारतं पायात्। धार्मिकशिक्षाभावेन साम्प्रतिकाश्छात्रा घोरतमानुशासनहीनाः सन्तो भस्मासुरकल्पाः संवृत्ता इत्यस्माभिरुक्तपूर्वम्। इदं पुनस्तत्र हविषा कृष्णवर्त्मेव नूनं भवेत्। अतः साग्रहं सूच्यते यच्छासनेनात्र विषये अचिरात् पश्चात्पदेन भाव्यम्।

तत्त्वतो विचार्यमाणे श्रीरामचन्द्रः श्रीकृष्णचन्द्रो वा न केवलं भारतस्य, हिन्दूनां सनातनधर्मीयाणां वा विभूती, एतौ पुनर्निखिलस्य विश्वस्य सुदृढाधारस्तम्भौ। न केवलं दाशरथी रामः, अपि तु रमन्तो योगिनोऽस्मिन्निति परं ब्रह्म, यस्य किलेदं जगज्जातं विलसति। यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तदेव ब्रह्म



श्रीरामतत्त्वम्। सर्वसाधारणानां बुद्धावगन्तुं केवलं दाशरथीरूपेण तत्साकारतां गतम्। तत्राप्यनेन व्यावहारिक्यां सत्तायां कथं रेखामात्रमप्यक्षुण्णा मर्यादा पालनीया इत्यस्यानन्यसुलभ आदर्श उपस्थापितः, यस्य राज्यमद्यतनीयराज्यस्य पितृभूता महात्मागान्धिनः भृशं कामयन्ते स्म। एवं श्रीकृष्णतत्त्वमपि न साधारणम्। 'कृष्णस्तु भगवान् स्वयम्।' षोडशकलापूर्णस्य भगवतो यदि कश्चिदवतारोऽत्र भुवि भूतः स्यात्स कृष्ण एव। नहि श्रीकृष्णेन कदापि नवावापरपर्यायाणामनियन्त्रितराजभोगभोगिनां जीवनमतिवाहितम्। तेन कारागारे जन्म गृहीतम्, आजीवनमत्याचारिभिः सङ्गरः कृतः, अन्ते च सर्वान् कुटुम्बिनः घातयित्वा व्याधमुखेनात्मनोऽवसानं कारितम्। एवं श्रीरामभद्रेणापि सर्वं यौवनं वने एव विवासितम्, प्रजापीडकानामुन्मूलनं कृतम्, राज्ये प्रतिष्ठिते पुनः प्राणाधिका जानकी अपि लोकाराधनाय त्यक्ता। भवभूतिशब्दैः स भणति—'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि। आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा॥' न केवलमत्र तेन वाक्शूरत्वमात्रं व्याख्यानकोविदत्वं वाऽभिव्यञ्जितम्, प्रत्युत सक्रियरूपेण तदनुकरणमपि कृतम्।

एतादृशौ यावज्जीवं परार्थजीविनौ लोकतन्त्रस्यादर्शभूतौ रामकृष्णौ यदि नाम राजकीयपाठ्यक्रमतो बहिष्कृतौ क्रियेताम्, तदा तस्मिन् पाठ्यक्रमे केषां महाविभूतिनामुल्लेखः काम्यते? इत्यस्य समाधानमपि यदि शासनेन तदादेशे कृतं स्यात्तदाऽऽदेशोऽयं कथञ्चिद् विचारणीयः स्यात्। अन्ते वयं साग्रहं निवेदयामो यदेतादृशो घोरतम आदेश शीघ्रमेव प्रत्यावर्तनीयः शासनेति। भारतीयजनेभ्योऽपि निवेदयामो यत् यावच्छासनमादेशममुं न प्रत्यावर्तयिष्यति, तावत् शान्तिमयस्तस्य सुदृढं विरोधः करणीयः, येन विवशं भूत्वा तदेनं प्रत्यावर्तितुं प्रभवेदिति।

## स्वर्गीया अवधेशप्रसादशास्त्रिणः!

महान् क्लेशावसरो यदस्माकं 'सूर्योदय'स्य भूतपूर्वसम्पादकाः श्रीपण्डितावधेशप्रसादशास्त्रिणो विगतागस्तमासस्य अष्टाविंशद्दिनाङ्के हजारीबागस्थरुग्णालये स्वर्गताः। कस्या अपि संस्थाया काममुपरितनं संघटनं सुदृढं भवतु, परं यावदङ्गभूताः कार्यसंचालकाः सुदृढा न स्युस्तावत् तत्कार्यं सुचारु न प्रचलति। भारतधर्ममहामण्डलसंस्थाया एतादृशेषु सक्षमेषु कार्यसंचालकेषु एके श्रीगोविन्दशास्त्रिदुगवेकरमहोदया अचिरादेव स्वर्गताः। इदानीं पुनरवधेशप्रसादशास्त्रिणोऽपि तेषामेव पदमनुसरन्तो गता इति महत्खेदास्पदम्। अवधेशप्रसादशास्त्रिवर्यैर्भारतधर्ममहामण्डलीयं प्रायो निखिलं प्रवृत्तिजातम् (यथा—उपदेशक-महाविद्यालयः, परीक्षाविभागः, विशुद्धसंस्कृताध्यात्मिकविश्वविद्यालयः, सूर्योदयः एवमादि) अनन्यसाधारणया निष्ठया चिरात् आदेहपातं संचाल्यते स्म। बहोः कालाद् रुग्णैः सद्भिरपि तैः सर्वोऽयं कार्यभारो यथाकथमपि वोढ्यते स्म। अत एव 'सूर्योदय'स्य प्रकाशनमपि विलम्बितम्। अन्ते विवशा भूत्वा चिकित्सार्थं स्वगृहं गतास्ते पुनरत्र वाराणस्यां नागताः, नागमिष्यन्ति च कदाप्यनेन पाञ्चभौतिकेन देहेन। तेषां स्वर्गमनात् महामण्डलस्य तु महती अपूरणीयैव हानिः संवृत्ता, काशिकविद्वत्समाजस्यापि अन्यूना क्षतिः समजनि। शास्त्रिवर्यसदृशाः सरला मधुराचाराः सदैव परोपकारनिरताः स्वधर्मैकव्रतिनो ये विद्वांस इतो यान्ति, तेषां स्थानपूर्तिस्तु कथमपि न जायते। भगवन्तं विश्वनाथं तेषामात्मने शाश्वतिं शान्तिं प्रदातुं प्रार्थयन्तो वयं तेषां पारिवारकैः सह हार्दिकीं समवेदनामनुभवाम इति।

---

# पौराणिकानां ताराहरण-कथानां वैज्ञानिकं रहस्यम्

— श्रीकलाधरप्रसादः त्रिपाठी —

[ ज्यौतिषधर्मशास्त्राचार्यः, प्राध्यापकः—राजकीय संस्कृत विद्यालयः, मोतिहारी, बिहार ]

कथानकञ्चेदं पुराणेषु प्रकारत्रयेण वर्णितं दृश्यते। यथा चैकत्र–अत्रिनेत्रादमृतमयश्चन्द्रः समुद्भूतः। स च ब्राह्मणौपधितारागणानामधिपतिः ब्रह्मणा कल्पितः। स कदाचिद् गुरोर्बृहस्पतेः भार्यां तारामतिरूपवतीं दृष्ट्वा कामेनाजहार। गुरुणा याच्यमानोऽपि दातुं न स्वीचकार। तदा बृहस्पतिः विक्षुब्धः क्रोधकलुषितो भूयोभूयः विचार्य मघोनः साहाय्यं याचयामास। उवाच च—'हे देवेश! अयं दुरात्मा चन्द्रः मदीयां भार्यां तारामपजहार, भूयसा प्रार्थितोऽपि न ददाति। तर्हि त्वमेव नः शरणम्।' इन्द्रश्च बृहस्पतिमाश्वास्य चन्द्रं प्रति दूतं प्रेषयामास। अथापि चन्द्रः गुरोर्भार्यां प्रत्यावर्तितुं नैच्छत्।

तदा महेन्द्रः सेनोद्योगं कृतवान्। तद् दृष्ट्वा गुरुद्वेषात् शुक्रः सोमस्य पार्ष्णिं जग्राह। शङ्करोऽप्येवं गुरुदाराभिमर्शनमाकर्ण्य बृहस्पतेः साहाय्यमकरोत्। इन्द्रद्वेषाद्वरुणोऽपि सोमपक्षे बभूव। इत्थं वरुणसम्बन्धान् शुक्रसम्बन्धाच्च सर्वेऽप्यसुराः देवसेनाभिः योद्धुं सन्नद्धाः बभूवुः। ततः देवदानवयोः संग्रामः प्रारब्धः। एवं युद्ध्यत बहूनि वर्षाण्यतिक्रान्तानि।

ततो ब्रह्मा स्वयमागत्य चन्द्रं प्राह—'गुरुभार्यां मुञ्च। अन्यथा विष्णुं समाहूय ते संक्षणं करिष्यामी'ति। अत्रान्तरे शुक्रस्य पिता भृगुरपि समागत्याकथयत्—'हे अत्रिनन्दन! तव पित्रा प्रेषितोऽहं त्वां निर्देशयितुम्, झटिति गुरुभार्यां मुञ्च' इति। इत्थं पितृ-पितामहगौरवेणानिच्छन्नपि चन्द्रस्तारामर्पयामास।

एवं ब्राह्मे १५२ अध्याये चेयं कथा इत्थं स्मर्यते-चन्द्रः बृहस्पतेः सर्वां विद्यामधीत्य शिक्षासमाप्तौ 'किं मया गुरुदक्षिणा देये'ति प्रार्थयामास। गुरुश्च 'न मया कश्चनार्थोऽपेक्ष्यते, गुरुपत्नीं पृच्छ, सा यदिच्छति तत्तस्मै दत्वा निवर्तयस्व' इत्यकथयत्। गुरुणाऽऽज्ञप्तश्चन्द्रोऽन्तर्वेश्म प्रविष्टः। तत्र रतिसमप्रभां गुरुपत्नीं तारामवलोक्य स्मराक्रान्तश्चन्द्रस्तां करेण जग्राह। बलादाकर्षयन् गुरुणा निवारितः शप्तोऽपि स्वगृहं नीत्वा स तया सह बुभुजे। गुरुः बहून्युपायान्यकरोत्। परन्तु केनाप्युपायेन यदा भार्यां न लेभे, तदा मानं परित्यज्य शुक्रं निवेदयामास। शुक्रश्च गुरुं सन्तोष्य 'तव भार्यामवश्यमानयिष्यामी'ति घोरं प्रतिज्ञातवान्। यथा—

तदा भोक्ष्ये तदा पास्ये तदा स्वप्से तदा वदे।
यदाऽऽनये प्रियां भ्रातस्तव भार्यां परार्दिताम्॥

इत्थं प्रतिज्ञाय शुक्रः शङ्करं सन्तोष्य तस्मात् वरं प्राप्य चन्द्रात् तारामादाय शुक्रो गुरवे प्रादात्। यथा—

सर्वान्वेदांश्च विधिवद्धनुर्वेदं यथाविधि।
अधीत्य जीवात्सर्वांश्च विद्याश्चान्या महामते।
गुरुपूजां करोमीति जीवमाह स चन्द्रमाः।
बृहस्पतिस्तदा प्राह चन्द्रं शिष्यं मुदान्वितः।
मम प्रिया तु जानीते तारा रतिसमप्रभा॥

इत्यादि। अत्र गुरुगृहतः दक्षिणाकाले चन्द्राक्रमणम्। शुक्रश्च तारां गृहीत्वा बृहस्पतये समर्पयदिति विशेषः।

मत्स्यपुराणस्य त्रयोविंशेऽध्याये पाद्मस्य सृष्टि-प्रकरणे द्वादशाध्यायेऽपि कथानकमिदमस्ति, परन्तु तत्रोद्यानगतां तारां दृष्ट्वा चन्द्रः सहसा कामातुरो

बभूव। सापि मनोविकारितचेष्टावन्तं तं दृष्ट्वा स्मरार्ता जाता। तत्रैतां गृहीत्वा चिरं विहृत्य पुनर्गृहीत्वैव विधुः स्वगृहं जगाम। गुरुणा याच्यमानोऽपि यदा स नार्पयति स्म; तदा गुरोरनुरोधात् रुद्रः सोमेन युद्ध्वा तारामानेतुं कृतप्रयत्नोऽभूत्। घोरं संग्रामं दृष्ट्वा पितामहः सोमं निर्भर्त्स्य ततस्ताराञ्च गृहीत्वा बृहस्पतये ददौ। यथा—

कदाचिदुद्यानगतामपश्यदनेकपुष्पाभरणैश्च शोभिताम्।
बृहन्नितम्बस्तनभारखेदात् पुष्पस्य भङ्गेऽप्यतिदुर्बलाङ्गीम्।
भार्याञ्च तां देवगुरोरनङ्गबाणाभिरामायतचारुनेत्राम्।
तारां स ताराधिपतिः स्मरार्तः केशेषु जग्राह विविक्तभूमौ।
सापि स्मरार्ता सह तेन रेमे तद्रूपकान्त्या हृतमानसेन।
चिरं गृहीत्वाऽथ जगाम तारां विधुर्गृहीत्वा स्वगृहं ततोऽपि॥

इत्यादि। अत्र तारायाः क्वचिदुद्यानप्रदेशे चन्द्राक्रमणं स्मर्यते। रुद्र एव गुरुपक्षपाती भूत्वा युद्धं चकार। ब्रह्मा तु तारां गृहीत्वा बृहस्पतये समर्पयदिति विशेषः।

एवं त्रिविधं ताराहरणं पुराणेषु दृश्यते। तत्र ताराहरणमेकदाऽनेकधा वेत्यनेन नास्ति ममाभिप्रायः। किन्तु मनुष्यविधस्य गुरोः बृहस्पतेः पत्नी मनुष्यविधेन केनचिच्चन्द्रेणापहृतेत्यर्थो नोपनेयः। यतो गुरुदाराहरणकर्मणोऽत्यन्तनिकृष्टतया तेन चन्द्रस्य कलङ्कनमनर्हम्। वस्तुतस्तु पुराणेषु वैज्ञानिकरहस्यस्याप्याधिभौतिकरूपेण आख्यानं यत्र तत्र कृतमस्ति। अत्रापि तादृशमेव खचारिणोः बृहस्पति-चन्द्रयोः नक्षत्रभोगसम्बन्धी किञ्चिद् वैज्ञानिकं रहस्यं प्रकटितम्, न तु मनुष्यचरितम्।

तथाहि—रेवत्यन्तप्रदेशः कोऽपि स्थिरबिन्दुर्नियम्य तत आरभ्य क्रान्तिवृत्ते सप्तविंशतिविभागाः कृताः। तेषां स्थानपरिचयार्थं तत्तद्प्रदेशस्थैस्तारापुञ्जैः यथासम्भवमूर्तयोऽश्विनीभरणीकृत्तिकादयः कल्पिताः। तत्र अश्वमुखाकृतिः अश्विनी, मधुकोषाकृतिः भरणी, कृत्ता शस्त्रविशेषस्तदाकृतिः कृत्तिकेत्यादि। तेषु नक्षत्रपुञ्जेषु चैकैका योगतारा भवति। सैव मुख्या नक्षत्रतारेति कथ्यते। एवमेकैकताराणामचलनात् न क्षरतीति व्युत्पत्तेः नक्षत्रशब्दो मुख्यः। अत्रैव प्रतिनक्षत्रवर्तिस्थूलतारोपपन्नज्योतिस्तु तत्तन्नक्षत्रदेवताश्च कल्पयन्ति। तद्यथा रामदैवज्ञः—

नासत्यान्तकवह्निधातृशशभृद्रुद्रादितीज्योरगा-
ऋक्षेशाः पितरो भगोऽर्यमरवीत्वष्टाशुगाश्च क्रमात्।
शक्राग्नी खलु मित्रशक्रनिर्ऋतिक्षीराणि विश्वे विधि-
गोविन्दो वसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः॥ इति।

अत्र पुष्यतारायाः स्वामी बृहस्पतिः सिद्ध्यति। तस्य सन्निधावेव लुब्धकबन्धुनामैका रुद्रस्थानीयाऽतीव प्रकाशरूपा तारा दृश्यते।

अथ च चन्द्रबृहस्पतयो हि द्विविधाः दृश्यन्ते—चराः स्थिराश्चेति। तत्र ग्रहरूपास्तावच्चराः प्रसिद्धा एव। स्थिरेषु चन्द्रः मृगशीर्षनक्षत्रे तारारूपो दृश्यते। पुष्यनक्षत्रे च बृहस्पतिः स्थिरोऽस्ति। कृत्तिका-रोहिणी-पुष्य-मघा-चित्रादीनां कतिपययोगताराणाञ्च चन्द्रश्चलन् आच्छादयति। तत्रापि पुष्यस्य शून्यशरत्वात् यदैव पुष्ये पातः सम्भवति, तदैव बृहस्पतिस्वामिकां पुष्यतारां चन्द्रश्चलन् सर्वतोभावेनाऽऽच्छादयति।

किं वा—यस्मिन् काले पुष्ये पातः तत्रैव गुरुचन्द्रौ चास्तः। एवञ्च चन्द्रस्योत्तरः शरः गुरोः दक्षिणशरश्च स्यात्तदा रात्रौ दर्शनेन स्पष्टमेव ज्ञायते यद् चन्द्रगृहस्थोऽपि गुरुरेव बहिरस्ति। चन्द्रश्च पुष्यतारां सर्वतोभावेनाच्छादितवान्—इति दृष्टैव तस्मिन्काले गुरुगृहं गतश्चन्द्र एवैतां तारां भुङ्क्ते इति कथ्यते। बृहस्पतिसहचरो लुब्धकबन्धुमृगव्याधश्चात्र रुद्रो नाम बृहस्पतिपक्षपाती भवति। तस्मिन्समये स्वच्छाकाशे स्थितिरियं स्पष्टमेव दृश्यते यत् मृगव्याधः धनुरुद्यम्य चन्द्रेण सह

युद्ध्यति तथा खरत्वाद्बलवत्त्वाच्च तद्बलमपक्षपति। एतदेवावलोकयन्तः आचार्याः कौतुकादिवशेन ताराविज्ञानस्य बालावबोधनार्थैव ताराहरणरूपमाख्यानं सरसतयोपकल्प्य प्रदर्शितवन्तः। ब्राह्मादिपुराणेष्वपि तस्य युद्धस्य तारकामयमेव संज्ञा। यथा चोक्तम्—

तत्र तद् युद्धमभवत् प्रख्यातं तारकामयम्।

(ब्राह्मे ६। २३)

अभूत् समरस्तारकामयम्। (भागवते ९-१४-७)

किं वा—बृहस्पतिः द्वादशभिः वर्षैः सर्वं भूमण्डलं भुङ्क्ते, तावता कालेन रविः द्वादशावृत्त्या तस्य परिक्रमणं करोति। तथा च सूर्यसान्निध्यादस्तं गत्वा बृहस्पतिः यदा कृत्तिकायामुदेति तदाऽसौ कार्तिको नाम संवत्सर उच्यते। पुनरस्तं गत्वा यदा मृगशीर्षे उदेति तदा मार्गशीर्षं संवत्सरं कुरुते। एवमेव पौषमाघादयो संवत्सरा जायन्ते। यथा च बार्हस्पत्यवर्षलक्षणम्—

मासाः कार्तिकतोऽग्निभादियुगलैः स्युः फाल्गुनोऽथाश्विनौ
भाद्रस्त्रिस्त्रिभिरत्र दैवतगुरुर्यद्भस्थितोदेति वै।

तन्मासाह्वयवत्सरः......

अपि च—

स्यादूर्जादिषु मासेषु वन्हिभादिद्वयं द्वयम्।
उपान्त्यपञ्चमान्तेषु नक्षत्राणां त्रयं त्रयम्।
यस्मिन्नभ्युदितो जीवस्तन्नक्षत्राख्यवत्सरः॥

अर्थात् कृत्तिकादिनक्षत्रद्वये कार्तिकाद्याः मासाः स्युः। तत्र फाल्गुनः आश्विनः भाद्रपदश्च त्रिभिर्नक्षत्रैः स्युः। यथा—कृत्तिकारोहिणीभ्यां कार्तिकः, मृगशीर्षाद्राभ्यां मार्गः, पुनर्वसुपुष्यभ्यां पौषः, आश्लेषामघाभ्यां माघः, पूर्वोत्तराफाल्गुनीहस्तैः फाल्गुनः, चित्रास्वातीभ्यां चैत्रः, विशाखानुराधाभ्यां वैशाखः, ज्येष्ठामूलाभ्यां ज्येष्ठः, पूर्वोत्तराषाढाभ्यामाषाढः, श्रवणधनिष्ठाभ्यां श्रावणः, शतभिषापूर्वोत्तराभाद्रपदाभिर्भाद्रपदः, रेवत्यश्विनीभरणीभिराश्विनः।

अथ च द्वादशभिर्मासैर्यथा चान्द्रवर्षं भवति तथैव द्वादशभिर्वर्षैरेकं गुरोरब्दं भवति। एवञ्च पञ्चभिश्चान्द्रवर्षैर्यथैको युगस्तथैव पञ्चभिर्बार्हस्पत्यवर्षैरेकं षष्टिसंवत्सरात्मकं बार्हस्पत्ययुगं भवति। क्षयमासाधिमासवत् लुप्ताब्दाधिकाब्दौ च भवतः।

इत्थं सर्वोऽपि व्यवस्था पुरा सूर्य-बृहस्पतेः सम्बन्धेन पुरातनैः दृष्टाऽऽसीत्। सा चेदानीं रविचन्द्रसम्बन्धेन गण्यते। अतः पुरा गुरुरेव सर्वनक्षत्राणां स्वामी आसीत्। किन्तु यदा रविचन्द्रसम्बन्धेन गणना प्रसिद्धिं गता, ततः प्रभृति सर्वस्वामीत्वेन चन्द्रो निर्णीतः। अतोऽत्र बृहस्पतिभुक्तास्ताराः पश्चाच्चन्द्रभुक्ता अभूवन्नित्येवार्थमुपलक्ष्य ताराहरणमिदमाधिदैविकविज्ञानमधिभूतरूपेण पठितमिति।

अथवा—पुनर्वसुपादमेकं पुष्याश्लेषान्तं च कर्कः राशिः, स च बृहस्पतेरुच्चस्थानीयः। यथा—

अजवृषभमृगाङ्गनाकुलीरा
झषवणिजौ च दिवाकरादितुङ्गाः।
दशशिखिमनुयुगतिथीन्द्रियांशै-
स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः॥

तत्रापि पञ्चमांशे अर्थात् पुष्यस्य प्रथमपादमध्ये च तस्य परमोच्चस्थानं सिद्ध्यति। पुनरस्यैव कर्कराशेः स्वामी चन्द्रश्च स्मर्यते। यथा—

धराजशुक्रज्ञशशीनसौम्यसितारजीवार्कजमन्दजीवाः।
क्रमेण मेषादिषु राशिनाथास्तदंशपाश्चेति वदन्ति सन्तः॥

एवमत्र बृहस्पतेरानन्दस्थानीयतारायाः चन्द्रस्य स्वामित्वेनोपादानाद् गुरोस्तारायाश्चन्द्रः स्वामीति अवधार्य ताराहरणस्योपाख्यानं प्रकारत्रयेण पुराणेषु वर्णितमस्ति। एवञ्च आपातदर्शिभिर्ज्ञानभवदुर्विदग्धैः एवमादिकं प्रसङ्गविशेषमुपादाय पुराणनिन्दनैकव्रतिभिः क्षणं स्थिरीभूय एतादृशं तेषां प्रसङ्गानां रहस्यं पुराणशास्त्रमर्मज्ञमुखेनावगन्तव्यम्। नूनं पुराणानि भारतीयानां श्रेष्ठतमानि विद्यास्थानानीति तदाविर्भावकं बादरायणं प्रति सततमस्माभिः कृतज्ञैरेव भाव्यम्।

# दुर्गार्चना-गीतिः

जगदम्ब देवि जय जय ! जगदम्ब देवि ! जय जय ।। ध्रुवम् ।।

सुरसङ्घ-पूजनीया
त्रैलोक्य-माननीया ।
दुःखौघनाशकर्त्री,
जननी जनार्तिहर्त्री ।
दुर्गे दयां प्रदर्शय ।
जगदम्ब देवि ! जय जय ।। १ ।।

प्रथमाऽसि 'शैलपुत्री,
त्वं ब्रह्मचारिणी द्वितीया ।
त्वं चारु 'चन्द्रघण्टा'
संराजिता तृतीया ।।
सन्मार्गमिह प्रदर्शय ।
जगदम्ब देवि ! जय जय ।। २ ।।

'कूष्माण्डजा' प्रणम्या,
ब्रह्मादितोऽप्यगम्या ।
श्री'स्कन्ध-मातृ'रूपा,
या शक्तिशिवस्वरूपा ।।
दुर्दैवमाशु भञ्जय,
जगदम्ब देवि ! जय जय ।। ३ ।।

'कात्यायनी' भवित्री,
दनुजावलीसवित्री ।
त्वं 'कालरात्रि'रेषा,
दुद्धर्ष - भीम - वेषा
निज-भक्त-भीरुतां जय ।
जगदम्ब देवि ! जय जय ।। ४ ।।

'गौरीं' महाप्रसिद्धां,
प्रणमन्ति यां सुसिद्धाः ।
सा सिद्धिदात्र्यवित्री,
कुशलेष्वलं भवित्री ।।
आशां च मेऽत्र पूरय ।
जगदम्ब देवि ! जय जय ।। ५ ।।

काली करालिनी त्वं,
जनलोकपालिनी त्वम् ।
लक्ष्मीसमा गिरा त्वं
भक्तेष्वनुग्रहा त्वम् ।।
लोकानशेषमीरय ।
जगदम्ब देवि ! जय जय ।। ६ ।।

दुर्गासि दुर्गहन्त्री,
क्लेशाद्यविघ्नहन्त्री ।
त्वं हे महासरस्वति,
संगृह्यतां स्तवोऽयम् ।।
सौभाग्यमत्र कल्पय ।
जगदम्ब देवि ! जय जय ।। ७ ।।

जननि ! 'द्विजेन्द्र'-बालः,
शरणागतोऽनवद्यः ।
नीराजनां प्रणामान् ,
चाङ्गीकुरुष्व सद्यः ।।
विजयं विधीयतां जय ।
जगदम्ब देवि ! जय जय ।। ८ ।।

— श्रीसरयूप्रसादशास्त्री 'द्विजेन्द्रः' —

# अद्य संस्कृत-शिक्षाक्रमः कथं स्यात् ?

उत्कल-संस्कृत-समितिसदस्यः

**पण्डित-श्रीचिन्तामणिमिश्र-शर्मा**

[ प्राध्यापकः—सदाशिव-संस्कृतमहाविद्यालयः, पुरी ]

अधुना पृथिव्यां समुन्नतदेशा आधिभौतिकवाद-निरता इव परिलक्ष्यन्ते। वैज्ञानिकाश्च तत्तद्देशस्थाः किमपि नवं नवं वस्तुजातमनुदिनं सृजन्तितराम्।

स्वतन्त्रताप्राप्तेरनन्तरमस्माकं भारतवर्षेऽपि स्वदेशस्य सर्वात्मना समुन्नतिं कामयमानेन भारत-शासनेन देशान्तरसरणीमनुकृत्येव प्रवर्तमानेन जडविज्ञानप्रसारानुरूपां शिक्षापद्धतिं सर्वत्र विश्व-विद्यालयेषु प्रवेशयितुं प्रयत्यते। एतादृशे शिक्षाक्रमे प्रचलति प्रतिवर्षं बहुशः स्नातका जडविज्ञानमधिकृत्य पुरस्कृता देशकल्याणमाकलयन्त इव दृश्यन्ते। सत्य-मेतद् दृढतरं यत् जडविज्ञानबलेनैव भारतधरणी देशान्तरैः सह समानमासनं लभेत पृथ्वीतले। तत् साहाय्येन च कलाकौशलं संवर्द्धयन्ती भारतीय-संस्कृतिः समुन्नतिं प्राप्स्यति। सर्वत्र सर्वे स्वीय-संस्कृतिपरम्परापरिरक्षणे दत्तावधाना वर्तन्ते।

परन्तु भारतीयसंस्कृतिपरम्पराया अस्ति किञ्चिदपरं वैशिष्ट्यम्, यन्नाम कीर्तयन्ति शिष्टा 'आध्यात्मिकता' इति। स चाध्यात्मवादो भारतीयसंस्कृतेरादिकन्द-मिति राद्धान्तो विपश्चिदपश्चिमानाम्।

उपनिषत्पर्यालोचनतः स्पष्टं प्रतीयते यत् अध्यात्मविज्ञान-मन्तरा मानवजनेः सार्थकता नास्ति। अतः गुरुशिष्य-संवादरूपः शिक्षाक्रमः अध्यात्ममार्गप्रदर्शक उपनिषत्सु दृष्टिपथमुपयाति। 'अरे आत्मा द्रष्टव्यः' इत्यादीनि वाक्यकदम्बकानि सर्वथा लोकहिताय समाजमङ्गल-मिच्छतां महर्षीणां मुखनिःसृतानि उपलभ्यन्ते। अध्यात्मविज्ञानेन सर्वत्र समं पश्यन् मानवः समाजं समुपकुर्वन् सर्वैः सह मैत्रीमुपार्जयितुं क्षमो भवेत्। एतदर्थमेव संस्कृतवाङ्मयमूलस्य ऋग्वेदस्यान्तिमा सूक्तिः "समानी वः आकूतिः…समानमस्तु वो मनः" इत्यादिका। आधिभौतिकविज्ञानभित्तावेवाध्यात्म-विज्ञानं सुदृढं समस्ति। एतदर्थं समाजनियन्त्रणनीति-स्वरूपं धर्मं प्रतिपदं सङ्गिरन्ति मन्वादिधर्मशास्त्राणि।

इत्थं स्नेहमैत्रीपथं प्रदर्शयन्ती भारतीयसंस्कृति-र्मानवीयसंस्कृतिरूपाऽन्यासां संस्कृतीनां समाश्रयण-दात्रीव विभाति। भारतीयसंस्कृतिपराम्परा-परिज्ञानाय संस्कृत-वाङ्मयमवश्यमध्येय-मिति निर्विवादम्। सा च संस्कृतभारती सर्व-भाषाजननीति विपश्चिद्गोष्ठीगरिष्ठा आमनन्ति। अस्याः परिप्रचाराय संस्कृतविश्व-

> श्रीमन्तो मिश्रमहोदया उत्कलप्रदेशीय-संस्कृत-विद्वत्समाजे लब्धप्रतिष्ठाः, प्रामुख्येन शब्दशास्त्रे निष्णाताः, वक्तृत्वकुशलाः, स्वभावतो विनोदप्रियाः, उदाराशयाः, सहृदयाः, अतिथिप्रियाश्च विद्वांसः सन्ति। देवरिया-जनपदे सम्पन्ने सार्वभौमसंस्कृतप्रचार-सम्मेलने एभिः स्वकीयः सुरभारतीविषयको विचारः प्रबन्ध-रूपेण पठितुं प्रेषितः। सम्प्रति स एव लेखो, यथा बहूनां लाभः स्यात्, सूर्योदये प्रकाश्यते। मन्ये, संस्कृतप्रचारविषये तत्संरक्षण-विषये च प्रतिपादिताः श्रीमिश्रमहोदयानां सुचिन्तिता विचारा विदुषां कृते विशेषरूपेण मननीयाः स्युरिति। —सम्पादकः

परिषत् कामं यतते। विज्ञानसम्मता समुन्नता चेयं तुलनात्मकभाषाविज्ञानजीवातुरिति भाषातत्त्वविदां विमर्शः। संस्कारसमृद्धिं प्रापिता दैवी वागिति ख्यातिमुपगतासीदियं भारतशासनभाषेति याज्ञवल्क्य-व्यवहाराध्यायतो विज्ञायते।

कृपासिन्धुमिश्रविरचितोत्कलेतिहासतोऽवसीयते यदुत्कलानां राष्ट्रभाषाऽपि गीर्वाणवाणी जाता। मुहम्मदपथागतानां शासनकालेऽस्याः संस्कृतभाषाया अनादरणमारब्धम्। प्राचीनसंस्कृतग्रन्थराजिरपि भारतीयमहत्त्वविध्वंसिना औरङ्गजेबेन भस्मसात् कारिता। आङ्ग्लानां शासनकाले संस्कृतशिक्षासरणी रूपान्तरं प्रापिता। ते तु भारतीयसंस्कृतिं समूलमुन्मूलयितुं कृतप्रयत्ना जाताः। अतो भारतप्राणभूतां सुरगवीं स्वमातृभाषयाऽनूद्य भारतीयविश्वविद्यालयेष्वपि तानाङ्ग्लभाषानूदितान् ग्रन्थात् पाठ्यक्रमे सन्निवेशितवन्तः। तैः संस्कृतपाठनप्रणाली च शनैः शनैरदूषि। एवं च प्रोक्तविश्वविद्यालयनिर्धारितपाठ्यक्रमानुसारं परीक्षोत्तीर्णानां विदुषां हस्ते संस्कृतशिक्षानियन्त्रणमापतितम्। तेन च संस्कृतशिक्षापरम्परा प्रायेण विलयं प्रापिता। न ह्यनूदितवाक्यानि मौलार्थं प्रतिपादयितुं क्षमन्ते। अतो महात्मना गान्धिना समुदीरितं यद् गायत्रीमन्त्रस्यार्थः कथमप्यनुवाद्यो भवतु नाम, परन्तु तत्र यच्छन्दस्तदनुवादं को नाम कर्तुं क्षमः ?

इत्थं संस्कृतशिक्षादशायां स्वाधीनताप्राप्त्यनन्तरं भारतशासनेन प्रतिप्रदेशं संस्कृतशिक्षायाः सांप्रतिकावस्थितिज्ञानाय एक आयोगो नियोजितः। सोऽपि समग्रे भारतवर्षे ग्रामं ग्रामं दर्शं दर्शं प्रतिप्रदेशं संस्कृताध्ययनपद्धतिं साक्ष्यद्वारेणाऽऽलोच्य विज्ञानामभिमतम् अनुभूय च संस्कृतशिक्षापरम्पराया अत्यावश्यकत्वं तत्परिप्रचारानुकूलं स्वमतपुरस्सरमुदन्तजातं भारतशासनपुरतः समुपस्थापितवान्। हा हन्त! एतावन्तमपि कालं तन्मतनिग्रहणानुमोदनविषये न किमपि निरधारि भारतशासनेन, भारतसंविधानसम्मताया हिन्दीभाषाया भारतीयानां भाविराष्ट्रभाषानिर्बन्धेन प्रदेशनिर्विशेषं माध्यमिकशिक्षाक्रमे संप्रवेशेन तथा जडविज्ञानज्ञानाङ्ग्लभाषायास्तत्रापि सन्निवेशनेन संस्कृतशिक्षां ततो बहिष्कर्तुं मतिमुपाददते बहुशोऽस्मदीया विज्ञाः।

इमां दशां संप्रापितायां संस्कृतशिक्षायां बहुषु प्रदेशेषु नूतनः संस्कृतशिक्षापाठ्यक्रमो व्यधायि स्वजन्मभूमेः संस्कृतिसंरक्षणदत्तस्वान्तैः। उत्कलसंस्कृतसमितिरपि नूत्नं पाठ्यक्रमं परिचालयति समयानुरूपम्, यत्र क्रमे प्रथम-मध्यमपरीक्षयोः यथाक्रमं माइनर् मैट्रिक्युलेशनपरीक्षार्थं निर्द्धारितानां विषयाणां साकल्येन सन्निवेशनं विद्यते। परन्तु प्रोक्तसमितिनिर्द्धारितपरीक्षोत्तीर्णानां कृते समाजे समुचितस्थानलाभाभावं विलोक्य न स्पृहयन्ति संस्कृतविद्यालयाय बालानामभिभावकाः। अतः संस्कृतविद्यालयेषु छात्रसंख्याऽनुदिनं ह्रासमुपयाति।

केचन कोविदाः कथयन्ति यद् यदि नाम संस्कृताध्यायिनां कृते माध्यमिकशिक्षाक्रमानुसरणं तदा संस्कृतविद्यालयानां पृथक्तया संस्थापनमसांप्रतम्। एषां परितोषाय प्राक्तनसंस्कृतशिक्षाक्रमादरे स्वपरेषां सुधीवराणां नासाकुञ्चनं यत् संस्कृताध्यायिनां केवलमेकदेशिज्ञानमिति। एवं हि "उभयतः पाशा रज्जुः" संस्कृतशिक्षागलेस्था वर्तते।

आस्माकीनाः परावरज्ञाः पूर्वपुरुषा लोककल्याणाय वेदमूलं संस्कृतवाङ्मयं भारतीयानां प्राणभूतम्

अस्मदर्थं परित्यज्य कालमहिम्ना दिवं गताः। सेयमस्माकं पैतृकरिक्थभूता संस्कृतभाषा, यस्यां भारतीयानां दैनन्दिनजीवनवृत्तं विनिहितं वर्तते। यस्याः सपर्यानुपदमेवास्माकं भव्यं भविता। पक्षान्तरे यस्याः शिक्षाया अभावे भारतीयत्वेन परिचायने न किमपि स्यादन्यत् सम्बलम्। अस्याः सुरभारत्याः महत्त्वं गीतोपनिषत्सु ध्वनितं धरातले, मानवसमाजस्य सर्वथा समुपकारकमित्याकलयन्ति शिक्षाविदः। किं चापभ्रंशभाषाणां हिन्दीप्रभृतीनां संस्कृतवाङ्मयसमाश्रयणमन्तरा न कथमपि समुन्नतिः स्वप्नेऽपि काङ्क्षेत। नैतावता जडविज्ञानचर्चा न विधातव्येति मन्तव्यम्। अपितु तया साकं धरायां मनुष्येभ्यः मानवीयजीवनस्य महत्त्वमुपदेष्टुं संस्कृतवाङ्मयस्याध्ययनाध्यापनपर्यालोचनसमीक्षणादिकमस्माकं जीवनस्येतिकर्तव्यतां यथा समुपेयात्तथा सावधानैरस्माभिश्चेष्टितव्यम्। एतदर्थं कतिपयप्रदेशेषु संस्कृतविश्वविद्यालयानां संस्थापनं कृतवन्तः सलोचना मान्या देशहितैषिणः। अस्माकं जन्मभूमावप्युत्कलप्रदेशे संस्कृतविश्वविद्यालयसंस्थापनसमुद्यमोऽभूत्। आशास्महे च प्रदेशान्तरकृत्यानुकरणेन तत्संस्थापनमचिरात् कारयिष्यन्ति शिष्टाः।

संस्कृतशिक्षामधिकृत्य एक एव पाठ्यक्रमः समग्रे भारतवर्षे प्रवर्तनीयः, येन प्रदेशनिर्विशेषं संस्कृतशिक्षापरीक्षोत्तीर्णाः स्नातकाः सर्वत्र कर्मक्षेत्रेषु विनियोजनकर्मणि समानमानार्हा भवेयुः। संस्कृतविश्वविद्यालयपाठ्यक्रमोऽपि न केवलं प्राचीनपद्धतिमनुसृत्य प्रवर्तनीयः, किन्तु जडविज्ञानविमर्शनसमुद्भासितानामाङ्गलभाषालिखितानां ग्रन्थानां सुरभारत्यानुवादेन तत्र पाठ्यक्रमे सन्निवेशनं विधातव्यम्। संस्कृतविश्वविद्यालयायत्तेषु संस्कृतमहाविद्यालयेष्वेवोपाधिपरीक्षार्थमन्तेवासिनां प्रवेशनं भवेत्। तस्यामुपाधिपरीक्षायां भारतीयपरम्पराप्रदर्शकानां प्राचीनानां संस्कृतग्रन्थानां बाहुल्येन पठनं पर्यालोचनं तत्रत्यतत्त्वमुपजीव्य नूतनप्रबन्धलेखादिकमपि विधातव्यम्। मध्यमपरीक्षां यावत् पाठ्यक्रमे सांप्रतिकसमयोपयोगिग्रन्थानां सविस्तरं सन्निवेशनम्, तेन मध्यमपरीक्षोत्तीर्णाः समाजस्य साधारणकृत्यसंस्थासु विनियोजिताः कार्यजातं साधयितुं क्षमा भवेयुः।

आङ्ग्लविश्वविद्यालयेष्वपि विभागनिर्विशेषं पठतां विद्यार्थिनां संस्कृतवाङ्मयज्ञानाहरणं यथा भवेत् तथा पाठ्यक्रमः प्रयोजनीयः। बालानां प्राथमिकशिक्षातः पाठ्यक्रमे संस्कृतसुभाषितानां सन्निवेशनं विधातव्यम्। तथाक्रमेणैव संस्कृतशिक्षासंवर्धनं कारितव्यम्। द्विविधेऽपि प्रचलिष्यत् पाठ्यक्रमे तत्तत्परीक्षोत्तीर्णस्नातकानां कर्मक्षेत्रेषु समानादरणाय विधिः प्रणेयः। इत्थं प्रवर्तयिष्यमाणे शिक्षाक्रमे कतिपयवर्षानन्तरं परैः प्रापितदुर्दशायाः भारतीयसंस्कृतेः क्रमशो विकाशो भविता। विश्वसिमश्च यत् अनया रीत्या भविष्यति काले एक एव शिक्षाक्रमः भारतीयानां कृते संभविता।

एतदर्थम् अनुक्षणं याचामहे कृपापारावारपरमेश्वरस्य प्रसादलवम्, भूयाच्च तेन भारताभिजनानां सहृदयानां संस्कृतशिक्षाप्रसारं प्रति सुदृष्टिपात इति।



प्राध्यापकः
— श्रीगोपालचन्द्र-मिश्रः —

# ऐक्षवम्

माधुर्ये हि इक्षुः प्रधानमिति सर्वेऽपि जनाः प्रत्यययन्ति। सन्त्यन्यान्यपि मधुरद्रव्याणि, परमिक्षुः स्वयं मधुरः सन्नान्यान्यपि व्यञ्जनानि मधुरयति सर्वजनसुलभश्चेति महानस्य विशेषः। महाकविः कालिदासो रघुवंशमहाकाव्ये (४ सर्ग) रघोः स्फीतं मधुरं च यशः इक्षुच्छायास्वेव गापयति। यथा—

इक्षुच्छाया निषादिन्यस्तस्य गोप्तुर्गुणोदयम्।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः॥

अभियुक्ता अपि रुचिरासु सूक्तिषु इक्षुमुपमानीकुर्वन्ति। यथा—

पुण्ड्रेक्षोः* परिपाकपाण्डुनिबिडे यो मध्यमे पर्वणि,
ख्यातः किं च रसः कषायमधुरो यो राजजम्बूफले।
तस्यास्वाददशाविलुण्टनपटुर्येषां वचोविभ्रमः,
सर्वत्रैव जयन्ति चित्रमतयस्ते भर्तृमेण्ठादयः॥
(व्यक्तिविवेकव्याख्यायाम्, १७८ पृ०)

'ध्वन्यालोके' तु इक्षुमहिमा सातिशयं वर्णितः। यथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः,
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः॥
(१ उद्योते, १४ कारिकायाम्)

पलाल-तृणादिभिः प्रच्छादितोऽपीक्षुदण्डः प्ररोहतीति उद्भववैशिष्ट्येन स्वीयमर्थमुपमिमीते श्रीहर्षः। यथा—

'कियच्चिरं दैवतभाषितानि
निह्नोतुमेनं प्रभवन्तु नाम।
पलालजालैः पिहितः स्वयं हि
प्रकाशमासादयतीक्षुदण्डः॥

एकस्मिंस्थले तु नैषधकारः बहूनि मधुराणि सङ्कलय्यापि अभीष्टस्य व्यक्तेर्वाग्व्यवहारे सम्पद्यमानं मधुरिमागरिमाणं समुत्कर्षेण व्यवस्थापयन्निक्षुमधरीकरोति। यथा—

खण्डक्षौद्रमृदिस्थले मधुपयः कादम्बिनीतर्पणात्,
कृष्टे रोहति दोहदेन पयसां पिण्डेन चेत् पुण्ड्रकः।
सद्द्राक्षाद्रवसेचनैर्यदि फलं धत्ते तदा त्वद्गिराम्,
उद्देशाय ततोऽप्युदेति मधुराधारस्तमप्रत्ययः॥

किं बहुना, माधुर्यप्रेमोन्मत्तो भगवान् व्यासो महामुनिः भागवतादिषु (भा० ५।१६।१३) भूखण्डे इक्षुरसात्मकं ह्रदं निर्दिदेश। भागवते (५।१९।१८) प्रोक्ता शर्करावर्ता नाम नदी याज्ञिकैरपि देवप्रतिष्ठाविधौ सश्रद्धं स्मर्यत एव (प्र० मयूखे, ६ पृ०)। ह्रदेन नद्या चापरितुष्यन्तः पौराणिकाः सप्तसागरेषु, इक्षुरससागरमन्वैच्छन्नेवेति नाविदितमस्ति समेषाम्।

---

* पुण्ड्र इक्षुभेदः। तथा चामरः—'रसाल इक्षुः तद्भेदाः पुण्ड्र-कान्तारकादयः।' (२।४।१६३)

सुधाव्याख्यायां विवरणं यथा—'इक्षुः कर्कटको वंशः, कान्तारो वेणुनिःसृतः। इक्षुरन्यः पौण्ड्रकश्च, रसालः सुकुमारकः। इति।

एतदस्ति लौकिकसाहित्ये दर्शनीयमैक्षवं महत्त्वम्। वैदिकसाहित्ये तु इक्षुः स्वस्य महत्त्वमितोऽप्यधिकं ख्यापयति। तथा हि—विवाहोत्तरं चतुर्थ्यां रात्रौ (या रात्रिः सुवर्णरात्रम्, सुहागरात इति वा गीयते, तस्यां) पतिः स्वां पत्नीं ब्रवीति—

परि त्वा परितत्नुनेक्षुणाऽऽगामविद्विषे।
यथा मां कामिन्यसो यथा मन्नापगा असः॥

(अथर्व० १।३४।५)

अस्यायमर्थः—हे कामिनि! प्रिये, परितत्नुना = सर्वतोभावेन रसमातन्वता, इक्षुणा, यथा = इव, अविद्विषे = कदाचिदपि कस्यचिदप्यनपरागाय, त्वा = त्वाम्, परि आगाम् = सर्वतो मन आकृष्य प्राप्तोऽस्मि। यथा हि इक्षुर्माधुर्येण सर्वस्य जनस्य प्रियो भवतीति अविद्विट्, एवं सर्वत्र सर्वदा सर्वथा विक्रियमाणोऽपि स्वीयं रसं मधुरं न जहाति, तथा त्वं मां = पतिं प्रति माधुर्यानपगामिनी (अहैतुकाविचलप्रेमसंपन्ना), असः = स्याः। तथा च मन्नापगा = मत्तोऽवियुक्ता च सर्वदा असः = स्याः।

एतस्मिन् मन्त्रे (मननेन रहस्यप्रकाशद्वारा उदात्तभावानां त्राणकर्तरि) १. रसमयत्वम्, २. सर्वप्रियत्वम्, ३. सर्वदशायां मधुररसापरित्यक्तत्वम्, ४. गुणेन प्रयोगानुभवेन च आकर्षकत्वम्, ५. तृप्तिजनकत्वमिति महिमा सातिशयं निरूपितः।

सोमयागेऽपि आतिथ्या नामः इष्टिः सोमस्य राज्ञः आतिथ्यसम्पादनाय समनुष्ठीयते। तत्र याज्ञे कर्मणि 'विधृती'संज्ञके द्वे तृणे समपेक्षिते भवतः। ते दर्शपूर्णमासादीष्टिषु कुशमये भवतः। परमातिथ्यैष्टौ अतिथिसम्मानाय माधुर्याभिव्यक्तये ऐक्षव्यौ विधृती (श० ब्रा० ३।४।१।१८; ३।६।३।१०) समुपदिष्टे। 'ऐक्षव्यौ = इक्षुत्वगात्मिके इक्षुपत्रात्मिके वा विधृती भवतः' इति श्रौतसूत्रवृत्तिकृतो व्याचक्षते (का०श्रौ० ८।१।१०)।

माधुर्यमात्रेण यायजूकाः ऐक्षव्यौ विधृती कृत्वा लौकिकार्थप्रियत्वं श्रुतेर्मा व्यवस्थापयेयुरिति भिया तैत्तिरीयश्रुतिः सुस्पष्टं ऐक्षव्ययोर्विधृत्योः प्रजापतिचक्षुष्ट्वं प्रतिजानती इक्षोर्महत्त्वमतिशाययति। यथा—

ऐक्षवी तिरश्ची, प्रजापतेरेव तच्चक्षुः संभरति।

—(तै० सं० ६।२।१)

अत्र सायणः—ऐक्षवी इक्षुपत्रिके, तिरश्ची चक्षुपक्ष्मपुटिके (याज्ञिका हि तिरश्ची एव विधृती तृणे स्थापयत इत्यप्यवधेयम्) इति वदन् प्रजापतेश्चक्षुः इक्षुणा (गुणयोगान्न स्वरूपतः) उपमेयमिति ध्वनयति। यतो हि इक्षुपत्रम् इक्षोः संरक्षकं ज्ञापकं च पत्रेण प्रज्ञात इक्षुर्मधुरस्तर्पकः सर्वप्रियश्चेति प्राशस्त्यं प्रजापतेश्चक्षुषि माधुर्याकरत्वं तृप्तिकृत्त्वं सर्वप्रियत्वं चेति ज्ञापयति।

प्रजापतिर्हि वैदिके वाङ्मये सृष्टेर्मूलं तत्त्वम्। प्रकृतिभूतस्य तस्य चक्षुषी बहिःस्थितौ इक्षुपत्रेणोपमीयेते। परमश्वमेधे नेत्रस्य दर्शनीयोऽधोरोमावलिः 'इक्षु'शब्देनैव कथ्यते—अवार्या इक्षवः। पार्या इक्षवः। (शु० सं० २५।१) इति। इक्षूणां हि नेत्ररोम्णां (यथा हीक्षुदण्डे त्वक् तथा नेत्रयोः रोमाणि ऐक्षवानीति वक्तव्ये 'ताद्धितेन कृत्स्नवन्निगमाः' इति निरुक्तदिशा इक्षुपदं समर्थनीयम्) पारः अवारो वा देवतेति तदर्थः।

मन्ये, प्रजापतेर्नेत्रयोरिक्षुसादृश्यात् तयोश्च पार-अवार-देवतासम्बन्धस्य वेदे प्रतिपादनात् लौकिकाः सरसाः कवयः सृष्टिमूलभूताया नायिकायाश्चक्षुषोः माधुर्यपारावारत्वं (मधुरिमासागरत्वम्) सुभृशं वर्णयन्तो जनानात्मानं चानुरञ्जयन्तीत्यहो मननीयमैक्षवमहत्त्वम्।

# भारतीय-वाङ्मये तत्त्वसंख्या-विचारः

— श्रीव्रजवल्लभ-द्विवेदः, एम० ए०, दर्शनाचार्यः —

भारतीयदर्शनेषु यैः पदार्थैर्जगद्रचना भवति, सृष्टेरारम्भो विकासश्च भवति, तेषां 'तत्त्वमि'ति पारिभाषिकी संज्ञा वर्तते। तत्त्वदेवताप्रमाणादिभेदेन भिन्नेषु भारतीयेषु दर्शनेषु तत्त्वानां संख्यादिविषयेऽतीव वैषम्यं विद्यते। अस्यां परिस्थितौ विभिन्नवादाटवीव्यामूढानां जिज्ञासूनां प्रातिनिध्यमिव कुर्वन्नुद्धवो भागवते भगवन्तं श्रीकृष्णं पृच्छति—

कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो।
नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम॥
केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम्।
सप्तैके नव षट् केचिच्चत्वार्येकादशापरे॥
केचिद् सप्तदश प्राहुः षोडशैके त्रयोदश।
(भाग० ११।२२।१-३)

इतः परमस्याध्यायस्य आपञ्चविंशतिश्लोकं श्रीकृष्णेनैते उद्धवप्रश्नाः समाहिताः। नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा (११।२२।५) इत्यभिमान एव वादानामेषां प्रवृत्तिहेतुरित्याह श्रीकृष्णः। मतभेदेन तत्त्वसंख्याविषयं विशदं व्याख्याय प्रकरणोऽयमित्थमुपसंहृतः—

इति नानाप्रसंख्यानं तत्त्वानामृषिभिः कृतम्।
सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम्॥२५॥

एवमेव अहिर्बुध्न्यसंहिताया अष्टमाध्यायारम्भे तत्त्वसंख्यामनुरुध्य प्रवृत्ता विभिन्ना वादाः संक्षेपेण चर्चिताः सन्ति—

केचित् त्रैभूतिकीं सृष्टिं ब्रुवते तत्त्ववादिनः।
चतुर्भूतमयीमन्ये केऽप्यन्ये पाञ्चभौतिकीम्॥
तां षड्धातुमयीमेके सप्तधातुमयीं परे।
अष्टप्रकृतिकां केचिन्नवप्रकृतिकां परे॥
दशतत्त्वमयीमेके केचिदेकादशात्मिकाम्।
एवमुच्चावचां संख्यां तत्त्वप्रकृतिगोचराम्॥
वदन्ति मुनयः सिद्धा देवा वेदास्तथैव च।
(अहि० ८।२-५)

अत्र भागवतेऽहिर्बुध्न्यसंहितायां च विभिन्नाभिः संख्याभिः सह भूतधातुप्रकृतितत्त्वशब्दा व्यवहृताः। पर्यायवाचिन एते शब्दाः। तथापीमे तेषां तेषां वादानां पारिभाषिकीं परम्परां सूचयन्ति। तत्त्वानि कस्मिंश्चिद्वादे भूतनाम्ना, अपरत्र धातुनाम्ना, अन्यत्र च प्रकृतिनाम्ना उच्यन्त इति। अत्रोभयोरपि स्थलयोः परम्परैषा सुरक्षिता तिष्ठति। चरकसंहितायां शारीरस्थाने प्रथमेऽध्याये पुरुषः षड्धातुमयश्चतुर्विंशतिधातुमयश्चोक्तः। अत्र धातुशब्दप्रयोगस्तत्त्वार्थक एव।

एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः। (११।२२।५) इति स्पष्टतरायामुक्तावपि भागवतटीकाकारैरपि समन्वयात्मिका भागवतदृष्टिर्नानुपालिता। भागवतसम्मतानि कति तत्त्वानीति विषयेऽपि विवदन्ते ते।

भागवतस्य बहूनि व्याख्यानानि समुपलभ्यन्ते। तानि प्रायशो रामानुज-निम्बार्क-मध्व-वल्लभ-चैतन्यानां प्रथितानां वैष्णवाचार्याणां मतान्यनुसरन्ति। अस्य प्रकरणस्यैतन्मतानुयायिभिष्टीकाकारैः स्वस्वसम्प्रदायानुरोधि व्याख्यानं विहितम्। अतः किमत्र भागवतसम्मतमिति प्रथमं परीक्ष्यते पुरस्तात्।

भागवतेऽन्यत्र ( ११।१९।१४ ):—

नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।
ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥

इत्यष्टाविंशतितत्त्वानि निदर्शितानि । एषैव भागवतसम्मततत्त्वानां संख्या । अत एव प्रकृताध्यायस्यारम्भे— नवैकादश पञ्चत्रीण्यात्थ त्वमिह शुश्रुम । इत्यत्र त्वमात्थ = उक्तवानसीति प्रोवाच उद्धवः । अत्रोभयोरपि स्थलयोः—प्रकृतिपुरुषौ, महदहङ्कारौ, पञ्च तन्मात्राणि, एकादश इन्द्रियाणि, पञ्च भूतानि, त्रयो गुणाश्चेत्यष्टाविंशतितत्त्वानामुल्लेखो वर्तत इत्यत्र प्रायशः सर्वे टीकाकाराः समानाभिप्रायाः ।

चैतन्यमतानुयायी विश्वनाथः "नवैकादश" ( ११।१९।१४ ) इत्यस्य व्याख्यायाममुमेव क्रमं स्वीकरोति । अन्यत्र ( ११।२२।१ ) तु प्रकृतिस्थाने ईश्वरं गणयित्वा आह—अत्र प्रकृतिस्थाने त्रयो गुणा एव गृहीताः इति । एवं चात्र तन्मते त्रयो गुणा एव प्रकृतिस्थानीयाः, तस्याः पृथक् सत्ता नास्ति । एतच्च मतं पाञ्चरात्रसम्मतं वर्तते । पाञ्चरात्रसंहितासु प्रकृतिः सांख्यदर्शनवन्न नित्या । तत्र हि सत्त्वरजस्तमसां गुणानां क्रमेणोत्पत्तिर्भवति । उत्पन्नानामेषां गुणानां साम्यावस्था प्रकृतिः । इत्थं च त्रिगुणरूपैव प्रकृतिरनित्या, न पृथङ् नित्यं प्रकृत्याख्यं तत्त्वं तस्मिन् मते । एतदेवात्र विश्वनाथेनाप्युक्तम् । पूर्वत्र (११।१९।१४) तु तेन प्रकृतेस्त्रिगुणानां च पृथगुल्लेखः कृतः, ईश्वरतत्त्वं च तत्र न परिगणितम् । परस्परविरुद्धमेतत्स्थलद्वयीयं व्याख्यानम् । भागवते—"पुरुषः प्रकृतिः" ( ११।२२।२४ ) इत्यत्र प्रकृतेरेव ग्रहणं विद्यते, न त्वीश्वरस्य । एवं च विश्वनाथचक्रवर्तिनः प्रकृतिस्थाने ईश्वरस्य ग्रहणं भागवतविरुद्धमेव प्रतीयते । पाञ्चरात्रसिद्धान्तानुसरणेनैव तस्य परिहारः कथञ्चित् कर्तुं शक्यते ।

विशिष्टाद्वैतिना वीरराघवाचार्येण श्लोकोऽयं ( ११।२२।१ ) इत्थं व्याख्यातः—"कैश्चिदपिभिस्तत्त्वानि नव संख्यातानि, कैश्चित्त्वेकादश, कैश्चित्पञ्च । त्वं तु 'मायामात्रमनूद्यान्ते प्रतिषिध्य प्रशाम्यती'ति त्रीणि तत्त्वान्यात्थ" इति । ११।१९।१४ इति श्लोकस्य व्याख्यानावसरे चाष्टाविंशतिभावाः परिगणिताः । आद्येषु नवसु भावेष्वनेन सुदर्शनाचार्येण च शब्दस्पर्शरूपरसगन्धा विसर्गशिल्पगत्युक्तयश्च संख्याताः । "रेतउत्सर्गो मूत्रपुरीषोत्सर्गश्चेत्युत्सर्गद्वयस्यैककोटित्वप्रापणेन नवेति निर्देशः, अन्यथा दशेति स्यात्" इति समाधानं चोपस्थापितम् ।

परवर्तिभिर्वैष्णवाचार्यैः प्रस्थानत्रयीवद् भागवतस्यापि प्रामाण्यमङ्गीकृत्य प्रस्थानचतुष्टयी संस्थापिता । यद्यपि रामानुजाचार्येण स्वकीयग्रन्थेषु कुत्रापि भागवतस्योल्लेखो न विहितः, किन्तु तदनुयायिभिर्भागवतस्यापि विशिष्टाद्वैतानुसारी व्याख्यानं कृतम् । उक्तश्लोकव्याख्यानावसरे तस्यैव परिदर्शनं भवति ।

भागवते (११।२२।३-४) श्लोकयोः २६,२५,७,६,६, ४,११,१७,१६,१३ संख्याकानां तत्त्वानामुल्लेखः, परवर्तिषु श्लोकेषु तेषां निरूपणं च विद्यते । अहिर्बुध्न्यसंहितायामपि तत्त्वत्रयत आरभ्य एकादशतत्त्वं यावत् परिगणितानि, किन्तु तेषां विवरणं तत्र नास्ति । भागवते तेषां सत्यपि संक्षिप्ते विवरणे विभिन्नसंख्याकानां तत्त्वानामेषामङ्गीकर्तार आचार्याः सम्प्रदाया दर्शनानि वा कानीति न परिज्ञायते । अन्यत्र च २७,३१,३२,३६ संख्याकान्यपि तत्त्वान्युपलभ्यन्ते । सर्वेषामेषां विषये संक्षेपेणात्र विचारः प्रस्तूयते ।

अद्वैतवादिन एकमेव परमतत्त्वमङ्गीकुर्वन्ति । तद् ब्रह्म, परवासुदेवः, शिवः, शक्तिः, शून्यं वेति दर्शनभेदेन भिद्यते ।

द्वैतवादिनां मते ईश्वरो जीवश्चेति द्वे तत्त्वे स्तः। स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वमिति श्रीपूर्णप्रज्ञाचार्यास्तत्त्वसंख्याने प्राहुः। जीवा-जीवाख्ये द्वे तत्त्वे [1]इत्यार्हताः।

जीवेश्वराभ्यां सह प्रकृतेः सम्मेलनेन त्रीणि तत्त्वानि जायन्ते। [2]मन्त्रिकोपनिषदि—अद्वैतं द्वैतमित्याहुस्त्रिधा तम् इत्युक्तम्। [3]चूलिकोपनिषद्यपि पाठभेदेनैतद्वचनमुपलभ्यते। छान्दोग्योपनिषदि (६।४) पृथिव्यप्तेजांसि सृष्टिकारणत्वेन व्याख्यातानि। एतदेव वेदान्तसिद्धान्तस्य त्रिवृत्करणप्रक्रियाया आधारस्थलम्। अन्यत्र च स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा पुनश्चैकादशः स्मृतः (७।२६।२) इत्युक्तम्। [4]केचन आचार्यास्त्रयो गुणा एव जगत्कारणानीति मन्वते। रामानुजनिम्बार्काचार्ययोर्मते ब्रह्मचिदचिन्नामकानि त्रीणि तत्त्वानि सन्ति। रामानुजमतानुयायिनौ सुदर्शनसूरिवीरराघवाचार्यौ निम्बार्कानुयायी शुकदेवश्च भागवतस्यैतस्य प्रकरणस्य तत्त्वत्रयप्रतिपादनपरमेव व्याख्यानं कृतवन्तः। अपरे रामानुजीया द्रव्याद्रव्यभेदेन द्विविधं तत्त्वमङ्गीकुर्वन्ति।

चार्वाकाश्चतुर्भूतमयीं सृष्टिमातन्वते। एभिराकाशं नाङ्गीकृतम्। पालिवाङ्मयेऽपि महाभूतेषु धातुषु वा आकाशः न परिगणितः। तत्रापि चत्वार्येव महाभूतानि। परवर्तिनि बौद्धसाहित्येऽस्यासंस्कृतधातुषु समावेशः कृतः। बुद्धकालीनाः केचन जडवादिनो दार्शनिका अपि चत्वारि भूतानि मन्यन्ते स्म। भागवते चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः (११।२२।२१) इति चत्वारि भूतानि परिगणितानि। अत्र छान्दोग्योपनिषद्वर्णिततत्त्वत्रयैः साकं चतुर्थमात्मतत्त्वं समावेशितम्।

पञ्चभूतात्मिका सृष्टिरुपनिषत्सु नैकत्र परिवर्णिता। वेदान्तस्य पञ्चीकरणप्रक्रियाऽमु सिद्धान्तमेवालम्बते। भागवतस्य प्रस्तुते प्रकरणे पञ्चभूतसिद्धान्तः पृथङ् न निर्दिष्टः। अष्टाविंशतितत्त्वपरिगणनावसरे पञ्चशब्देन पञ्चतन्मात्राणां पञ्चभूतानां वोल्लेखष्टीकाकारैः कृतः। सत्त्वं ज्ञानम् (११।२२।१३) इति पद्यव्याख्यायां शुकदेवेन ब्रह्मचिदचिद्भिः साकं कालस्वभावयोः परिगणनेन पञ्च तत्त्वानि स्वीकृतानि। वीरराघवेण च इति नाना (११।२२।२५) इत्यत्र तेजः, जलम्, अन्नम्, आत्मा, वायुश्चेति पञ्च तत्त्वानि परिदर्शितानि। जीवाकाशधर्माधर्मपुद्गलास्तिकायाः पञ्च तत्त्वानीत्यार्हतैकदेशिनः[1]।

षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान्। (११।२२।२०) इति वर्तन्ते षट् तत्त्वानि। अयं च सिद्धान्त आत्मषष्ठवादत्वेन प्रसिद्ध्यति। चरकसंहितायाः शारीरस्थाने चैष खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः (१।१६) इत्यादिना व्याख्यातः। पञ्चमाध्याये च—षड्धातुसमुदायो हि सामान्यतः सर्वलोकः इत्युक्तम्। अहिर्बुध्न्यसंहितायाम्—तां (सृष्टिं) षड्धातुमयीमेके (८।३) इति षाड्धातुकसृष्टिवाद उपस्थापितः। नागार्जुनेन माध्यमिकवृत्तौ चत्वारि भूतानि, आकाशविज्ञाने चेति षड्धातवः प्रतिपादिताः। षाड्धातुकवाद आयुर्वेदविदां बौद्धानां वा स्यात्। सुश्रुतसंहितायाः शारीरस्थाने—वैद्यके तु [2]स्वभावमी-

१. सर्वदर्शनसंग्रहे, पृ. २७, आनन्दाश्रमीये द्वितीये संस्करणे।

२. निर्णयसागरीयोपनिषत्संग्रहस्य पञ्चमे संस्करणे, पृ. २५२।

३. आनन्दाश्रमीयोपनिषदां समुच्चये, पृ. २७२

४. तत्रैव टीकायाम्, पृ. २७३

१. सर्वदर्शनसंग्रहे, पृ. २८

२. म. म. गोपीनाथकविराजमहोदयेन "Theism in Ancient India" शीर्षके निबन्धे स्वभाव-

श्वरं कालं यदृच्छां नियतिं तथा। [1]परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः ॥ इति षट् तत्त्वानि परिगणितानि। स्वभावेश्वरकालनियतयो दर्शनान्तरेष्वपि तत्त्वानि स्वीकृतानि। कालः स्वभावो नियतिर्यदृच्छा (१।२) इति श्वेताश्वतरोपनिषदि यदृच्छातत्त्ववादिनां समुल्लेखो वर्तते।

सप्तैव धातव इति तत्रार्थाः पञ्च खादयः। ज्ञानमात्मा (११।२२।१४) अत्र सप्तधातुवादः समुपस्थापितः। व्याख्यातृभिश्च ज्ञानमात्मा चेति जीवात्मपरमात्मानावङ्गीकृतौ। वस्तुतस्त्वेतदपि मतमायुर्वेदविदां प्रतीयते। चरकसंहितायाः पूर्वोद्धृते स्थले यद्यपि चेतनाधातुरेव पुरुषोऽङ्गीकृतस्तथाप्यात्मनः पृथग् ज्ञानमङ्गीकुर्वतामपि तत्र कश्चन मतविशेषः स्यादिति संभाव्यते। भागवते— सत्त्वं ज्ञानं[2] रजः कर्म तमोऽज्ञानमिहोच्यते। गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ (११।२२।१३) इत्यत्रान्येषां तत्त्वानां परिगणितेष्वष्टाविंशतितत्त्वेषु समावेशः कृतः। अतो ज्ञायते केषाञ्चन मते एतानि तत्त्वान्तराण्यासन्निति। श्लोकोऽयं व्याख्यातृभिरनेकधा व्याख्यातः। अनेकैरत्र केवलं कालस्वभावौ चर्चितौ। केचन कालमेव मतान्तरेण पृथक् तत्त्वमङ्गीकृत्य तस्य गुणेषु समावेशं कुर्वन्ति। अपरे सूत्रमपि पृथकतत्त्वमङ्गीकुर्वन्ति। श्रीधरस्वामिना नात्र ज्ञानादीनां यथायथमन्तर्भावः प्रदर्शितः। राधारमणगोस्वामिनैकादशश्लोकव्याख्यायां ज्ञानतत्त्वस्य पार्थक्यशङ्कोपस्थापिता। त्रयोदशः श्लोको यद्यपि श्रीधरस्वामिना न विशदं व्याख्यातस्तथापि तत्प्रदर्शितया पद्धत्या श्लोकस्यास्य—ज्ञानस्य सत्त्वे, कर्मणो रजसि, अज्ञानस्य तमसि समावेशः, कालो गुणानां व्यतिकर एव, स्वभावः सूत्रमर्थान्महत्तत्त्वमित्यर्थः सम्पद्यते।

वराहमिहिरेण बृहत्संहितायाम्—कालं कारणमेके स्वभावमपरे परे जगुः कर्म (१।७) इत्युक्तम्। तद्व्याख्यायां भट्टोत्पलेनैतानि मतानि संक्षेपेण निरूपितानि। वल्लभमतानुयायी पुरुषोत्तमः प्रस्थानरत्नाकरे प्रमेयप्रकरणे (पृ. १६४-१६५) प्रमेयस्य स्वरूपकोटौ अक्षरेण सह कालस्वभावकर्मणां समावेशं करोति। एवमेव ज्ञानाज्ञाने तत्त्वान्तरे इत्यङ्गीकुर्वाणा आसन् केचन। ज्ञानं तत्त्वान्तरमित्यङ्गीकुर्वाणा आयुर्वेदविद एव स्युः, यतो हि भागवतेऽहिर्बुध्न्यसंहितायां चात्र धातुशब्दप्रयोगो विद्यते। बौद्धानां वैतन्मतं स्यात्। नागार्जुनेन माध्यमिकवृत्तौ पञ्च महाभूतानि विज्ञानं चेति षड्धातवोऽभिहिताः। विज्ञानं चात्र ज्ञानस्वरूपमेव। शिवोपनिषदि—पञ्चविंशकमज्ञानम् (१।१२) इत्यज्ञानं पञ्चविंशतितमं तत्त्वमङ्गीकृतम्। "अज्ञानमेव मुमुक्षुणा मुक्तिपथप्रवृत्तेनाभ्युपगन्तव्यम्, न तु ज्ञानम्" इत्यज्ञानवादिनां मतं गुणरत्नेन [1]षड्दर्शनसमुच्चयटीकायां प्रपञ्चितम्। पालिवाङ्मये पकुधकच्चायनस्यान्येषां दार्शनिकानां च सप्तकायवाद उपस्थापितः। अत्र चत्वारि महाभूतानि आत्मा, सुखदुःखे चेति सप्त तत्त्वान्यङ्गीकृतानि।

---

नियति-काल-यदृच्छावादानां सम्यक् परिचय उपस्थापितः। द्रष्टव्यम्—Sarasvati Bhavan Studies, Vol. II, P. 93-111.

१. "प्रधानमेव महदहङ्कारादिरूपतया परिणतं सर्वस्य निमित्तमिति परिणामवादिनः" इति डल्हणाचार्यो व्याचख्यौ।

२. "सत्त्वात् सञ्जायते ज्ञानम्" (भगवद्गीतायाम्, १४।१७)

१. द्रष्टव्यम्— पृ. १६-१८

जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षाः सप्त तत्त्वानीत्य परे [1]आर्हतैकदेशिनः।

अष्टतत्त्ववादिनः सिद्धान्तस्य भागवते नोल्लेखः, अहिर्बुध्न्यसंहितायां तु वर्तते। अनया संख्यया सह तत्र प्रकृतिशब्दप्रयोगो वर्तते। एष च सिद्धान्तो गीतायाम्—भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ (७।४) इत्येवमुपलभ्यते। चरकसंहितायां शारीरस्थाने—प्रकृतिश्चाष्टधातुकी (१।१७) इत्युक्तम्। शिवपुराणे[2] च प्रकृतिमहदहङ्कारपञ्चतन्मात्ररूपा अष्टौ प्रकृतय उक्ताः। गीतायामत्र सांख्यसम्मतमूलप्रकृतेः परिगणनं नास्ति। तस्य स्थाने मनः परिगृहीतम्, सम्मिलितानामेषामष्टधा भिन्ना प्रकृतिरिति च निरूपणं कृतम्। इयं चापरा प्रकृतिः। भागवते—अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ। (११।२२।२४) इति नवतत्त्वपरिगणनेऽष्टप्रकृतीनामुल्लेखोऽस्ति। एतच्च गीतासम्मतमेव प्रतीयते, यतो हि तत्राष्टप्रकृतिभ्योऽतिरिक्तं नवमं तत्त्वमात्मा। एतदेव—"इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूताम् (७।५) इति गीतायां जीवभूतापरा प्रकृतिरित्युक्तम्। [3]महाभारते शान्तिपर्वणि सप्तर्षयः स्वायंभुवो मनुश्चेत्यष्टौ प्रकृतय उक्ताः। आभ्योऽष्टाभ्यः प्रकृतिभ्यश्चेदं विश्वं जगज्जातमिति। प्राचीनबौद्धजैनग्रन्थेभ्यः प्रतीयते यत्तदा सर्वैरपि दार्शनिकैश्चत्वारि तत्त्वानि निर्विवादं स्वीकृतान्यासन्। आकाशकालदिशः पृथक् तत्त्वानि सन्ति न वेत्यत्र महान् विवादः प्रचलित स्म। पृथक् तत्त्ववादिनः प्रबलाभिर्युक्तिभिस्तान्यसाधयन्। एभिः सप्तभिर्द्रव्यैः सहात्ममनसोः संयोगेन वैशेषिकैः प्राभाकरैश्च नव द्रव्याणि स्वीकृतानि। षड्दर्शनसमुच्चये—जीवाजीवौ तथा पुण्यं पापमास्रवसंवरौ। बन्धश्च निर्जरामोक्षौ नव तत्त्वानि तन्मते ॥ (४७ का०) इति जैनमते नव तत्त्वानि प्रदर्शितानि।

दशतत्त्ववादी सिद्धान्तो भागवते नोपलभ्यते, अहिर्बुध्न्यसंहितायां च दृश्यते। अत्र कानि दश तत्त्वानि? के चास्य सिद्धान्तस्यानुयायिनः संस्थापका वेति विचारार्होऽयं विषयः। कुमारिलभट्टेन वैशेषिकाणां नवद्रव्येषु शब्दतमसी समाविष्टे, अथ चैकादश द्रव्याण्यङ्गीकृतानि। मीमांसका वेदापौरुषेयवादिनः। तत्र शब्दस्य नित्यत्वमत एव द्रव्यत्वं चाङ्गीक्रियते। वैशेषिकमीमांसकयोर्मध्ये तमोद्रव्यवादिनोऽथ शब्दगुणवादिनो दार्शनिकाः संभाव्यन्ते। तमोद्रव्यवादस्य वैशेषिकग्रन्थेषु महता आडम्बरेण खण्डनं दरीदृश्यते।

अहिर्बुध्न्यसंहितायामेकादशतत्त्वेभ्योऽधिकानि न परिगणितानि। भागवते—एकदशत्वे आत्मासौ महाभूतेन्द्रियाणि च। (११।२२।२४) इत्येकादश तत्त्वानि सन्ति। तथैव—भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश। (११।२२।२३) इति त्रयोदश तत्त्वानि कथितानि। अत्रात्मनो जीवात्मपरमात्मानौ द्वौ भेदौ विधाय टीकाकारैस्त्रयोदश संख्या सम्पादिता।

संख्याने सप्तदशके भूतमात्रेन्द्रियाणि च। पञ्चपञ्चैक मनसा आत्मा सप्तदशः स्मृतः ॥ तद्वत्षोडशसंख्याने आत्मैव मन उच्यते। (११।२२।२२-२३) अत्र सप्तदशतत्त्वानां षोडशतत्त्वानां च परिगणनमस्ति। नैयायिकानां प्रमाणप्रमेयादयः षोडश पदार्थाः [1]प्रमाणसमुच्चये

१. सर्वदर्शनसंग्रहे, पृ. २४
२. शिवपुराणे वायवीयसंहितायां पूर्वभागे, १०।३६
३. शान्तिपर्वणि ( मोक्षधर्मे ), ३४०।३४-३६, पृ. ५३५६-५३५७

१. "तत्त्वानि षोडशामुत्र" ( १४ कारि० )।

तद्वृत्तौ च षोडशतत्त्वरूपेण परिगणिताः। प्रश्नोपनिषदि—षोडशकलः पुरुष (६।१) इत्युक्तम्। षोडश कलाश्च—स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः। अन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च ॥ (६।४) इति परिगणिताः। आभिः कलाभिः सह वर्तमानः पुरुषः स्वयं सप्तदशः स्मृतः। भागवतीयनिरूपणस्य तु कश्चनान्य एवाधारः स्यात्।

निम्बार्कमतानुयायिना शुकदेवेन पुरुषः प्रकृतिर्व्यक्तम् (११।२२।१४-१५) इत्यादिश्लोकद्वयव्याख्यायां विंशतितत्त्वपक्ष उपस्थापितः, न केनाप्यन्येन टीकाकारेण। वस्तुतस्त्वत्राध्यायारम्भे परिगणितानां नव तत्त्वानामथ चैकादशतत्त्वानां परिगणनमस्ति, पञ्च तत्त्वानि (पञ्च महाभूतानि), त्रीणि तत्त्वानि (त्रिगुणानि) च प्रसिद्धानि, अतस्तानि नोल्लिखितानि। अग्रिमे श्लोके ज्ञानेन्द्रियकर्मेन्द्रियाणां दश विषया निरूपिता वर्तन्ते। अस्य श्लोकस्य व्याख्याकारैरन्यथैव व्याख्यानं विहितम्। श्रीधरस्वामिना पूर्वार्धे पञ्चतत्त्वानि, उत्तरार्धे च कर्मेन्द्रियाणां फलानि प्रदर्शितानि। चैतन्यमतानुयायिना जीवगोस्वामिना विश्वनाथेन चाप्ययमेवार्थः प्रकटीकृतः। विजयध्वजेन शुकदेवेन चोपरि प्रदर्शितो यथार्थ एवात्र प्रकटीकृतः, पूर्वत्र (११।१४।१४) तु नवैव विषयाः परिगणिताः। माध्वमते—परमात्मलक्ष्मीजीवाव्याकृताकाशप्रकृतिगुणत्रयमहत्तत्त्वाहङ्कारतत्त्वबुद्धिमनइन्द्रियमात्राब्रह्माण्डाविद्यावर्णान्धकारवासनाकालप्रतिबिम्बभेदाद् विंशतिद्रव्याण्यङ्गीकृतानि सन्ति।

प्रकृत्यादिचतुर्विंशतिजडतत्त्वानि चेतनं पुरुषतत्त्वं च स्वीकृत्य सांख्यकारिकायां पञ्चविंशतितत्त्वानि निरूपितानि। पुराणेषु प्रतिपादिते निरीश्वरसांख्ये एतेषां विस्तरेण प्रपञ्चो विद्यते। योगसूत्रे, महाभारते, पुराणेषु च प्रदर्शिते सेश्वरसांख्ये ईश्वरेण सह षड्विंशतितत्त्वानि सन्ति। [1]माण्डूक्यकारिकायां [2]मण्डलब्राह्मणोपनिषदि चैतानि चर्चितानि। [3]महोपनिषदि, [4]नारदपरिव्राजकोपनिषदि, [5]नारायणपूर्वतापिन्यां च पञ्चविंशतितत्त्वानि निरूपितानि। [6]सामरहस्योपनिषदि महाविष्णुः षड्विंशं तत्त्वं निगदितम्। [7]मन्त्रिकोपनिषत् [8]चूलिकोपनिषच्च षड्विंशं सप्तविंशं च तत्त्वमङ्गीकुरुतः। शिवोपनिषदि—गुणो बुद्धिरहङ्कारस्तन्मात्राणीन्द्रियाणि च। भूतानि च चतुर्विंशदिति पाशाः प्रकीर्तिताः॥ पञ्चविंशकमज्ञानं सहजं सर्वदेहिनाम्। पाशजालस्य तन्मूलं प्रकृतिः कारणाय नः॥ षड्विंशकश्च पुरुषः पशुरज्ञः शिवागमे। सप्तविंश इति प्रोक्तः शिवः सर्वजगत्पतिः॥ (१।११-१३) इत्येवं तत्त्वानि निरूपितानि। चूलिकोपनिषद्व्याख्याता [9]नारायणः—मात्रा भूतानीन्द्रियाणि मनोबुद्धिरहङ्कृतिः। महान् प्रधानं तत्त्वानि षड्विंशः परमेश्वरः॥ चित्तेन साहित्ये सप्तविंशः इत्येवं सप्तविंशतितत्त्वानि परिगणयति। "सप्तदशमथापरे" इति श्रुतिव्याख्यानावसरे [10]वीरराघवाचार्यः [11]सुदर्शनाचार्यश्च सप्तविंशतितत्त्वसंख्यां कालं पृथक्तत्त्वमङ्गीकृत्य पूरयतः। [12]वेदान्तदेशिकेनापि—तं षड्-

---

१. मा. का. २।२६; २. म. ब्रा. उ. १।४

३. म. उ. १।१

४. निर्णयसागरीयोपनिषत्संग्रहस्य पञ्चमे संस्करणे, पृ. ३२१

५. अडयारसंस्करणे, पृ. ७८; ६. तत्रैव, पृ. २४१

७. निर्णयसागरीयोपनिषत्संग्रहस्य पञ्चमे संस्करणे, पृ. २५२

८. आनन्दाश्रमीयोनिषदां समुच्चये, पृ. २७२

९. तत्रैव, पृ. २७३

१०. भागवतव्याख्यायाम्, ११।२२।१३–१६

११. तत्रैव, ११।२२।१७

१२. वेदान्तदेशिकग्रन्थमालायां तत्त्वमुक्ताकलापे, पृ. १६३

विंशकमित्याहुः सप्तविंशमथापरे इति श्रुतिं समुद्धृत्य कालः परमव्योम (नित्यविभूतिः) च पृथक्तत्त्वे परिगणिते। सर्वमेतदुपर्युद्धृतस्य शिवोपनिषद्वचनापरिचयसूचकं प्रतीयते।

भागवतसम्मतान्यष्टाविंशतितत्त्वानि पूर्वं निरूपितानि। पुरुषोत्तमेन प्रस्थानरत्नाकरे प्रमेयप्रकरणे (पृ. १६४) प्रमेयस्य स्वरूपकोटि-कारणकोटि-कार्यकोटि-नामानस्त्रयो भेदाः कृताः। स्वरूपकोटौ अक्षर-काल-कर्म-स्वभावानां परिगणनमस्ति। कारणकोटौ भागवत-सम्मतानामष्टाविंशतितत्त्वानामन्तर्भावो विद्यते। अपूर्ण एवायं ग्रन्थ उपलब्धः, अतः कार्यकोटौ केषां परिगणनमिति न परिज्ञायते।

अहिर्बुध्न्यसंहितायां शुद्धेतरसृष्टिप्रकरणे षष्ठेऽध्याये कूटस्थपुरुषस्य त्रिगुणानां च मध्ये शक्तिनियतिकालानां त्रयाणां तत्त्वानां परिगणनं वर्तते। कालात् क्रमशः सत्त्वरजस्तमसामुत्पत्तिः। एषां साम्यावस्था प्रकृतिः। प्रकृतिश्च त्रिगुणेभ्यो न पृथक् तत्त्वान्तरम्। भागवते तु प्रकृतिस्त्रिगुणानि च पृथक् तत्त्वान्तराणि सन्ति। एवं चाहिर्बुध्न्यसंहितायां त्रिंशत्तत्त्वानि प्रतिपादितानि। अत्र च शुद्धसृष्टेः समावेशो नास्ति।

माण्डूक्यकारिकायाम्—एकत्रिंशक इत्याहुः (२।२६) इत्येकत्रिंशत्तत्त्ववादी सिद्धान्त उल्लिखितः। अत्र भाष्ये—"पाशुपतास्तु रागाविद्यानियतिकाल-मायाधिकास्त एवैकत्रिंशत्पदार्था इति ब्रुवते" इत्युक्तम्। शैवागमेषु 'षट्त्रिंशत्पदार्था इति ब्रुवते' इत्युक्तम्। शैवागमेषु षट्त्रिंशत्तत्त्वानि प्रतिपादितानि। तत्रोक्तेष्वेकत्रिंशत्तत्त्वेषु शिवशक्तिसदाशिवेश्वरशुद्धविद्यानामकानां पञ्चतत्त्वानां संयोजनेनैषा संख्या सम्पद्यते।

माध्वमतानुयायी विजयध्वजः "सर्गादौ" (११।२२।१७) इति पद्यव्याख्यायाम्—"चतुस्त्रिंशत्तत्त्वानीति भागवतं मतम्" इत्याह।

षड्दर्शनसमुच्चयटीकायां गुणरत्नकृतायाम्—सूत्रकृदाख्ये द्वितीयेऽङ्गे परप्रावादुकानां त्रीणि शतानि त्रिषष्ट्यधिकानि परिसंख्यायन्ते। तदर्थसंग्रहगाथेयम्—

[1]असिइसयं किरियाणं अकिरियवाईण होइ चुलसीई।
अन्नाणिअ सत्तट्ठी वेणइयाणं बत्तीसं ॥ (पृ० ११)

इत्युक्तम्। अन्यान्यपि नानामतानि बौद्धनिकायेषु महाभारतपुराणादिषु च दरीदृश्यन्ते। अस्यां परिस्थितौ विविधास्वासु दृष्टिषु सामञ्जस्यं सम्पादयता भागवतकारेण युक्तमेवोक्तम्—इति नाना प्रसंख्यानं तत्त्वानामृषिभिः कृतम्। सर्वं न्याय्यम् (११।२२।२५) इति। इयमेव भागवतानां समन्वयात्मिका दृष्टिः कालक्रमेण पल्लविता। एतत्प्रभावितानामेव—यं शैवाः समुपासते शिव इति इत्यादयः पद्यबन्धाः समुपलभ्यन्ते। अत एव [2]केनचिच्चिरन्तनेनार्हतेनाप्युक्तम्—

श्रोतव्यः सौगतो धर्मः कर्तव्यः पुनरार्हतः।
वैदिको व्यवहर्तव्यो ध्यातव्यः परमः शिवः ॥

---

१. अशीत्यधिकं शतं क्रियावादिनाम् अक्रियावादिनां भवति चतुरशीतिः। अज्ञानिनां सप्तषष्टिर्वैनयिकानां च द्वात्रिंशत् ॥ इति च्छाया।

२. षड्दर्शनसमुच्चयटीकायां मणिभद्रकृतायाम्, पृ. ६५ (तृतीये संस्करणे)

एकाङ्कि-नाटकम्

# अन्त्येष्टि-संस्कारः

विश्वकवि-श्रीरवीन्द्रनाथ-ठाकुर लिखितस्य प्रहसनस्यानुवादः

अनुवादिका

**के० कमला, एम० ए० ( संस्कृत-जर्मन )**

अध्यापिका—महिला-विद्यालयः, उस्मानिया-विश्वविद्यालयः, हैदराबाद ( आन्ध्र )

आन्ध्रप्रदेशीय-संस्कृतशिक्षा-विशेषाधिकारिणः संस्कृतान्ध्रोभयभाषाकवित्वनिष्णाता वक्तृत्व-विशारदाः श्री के० लक्ष्मणशास्त्रिमहोदया आन्ध्रप्रदेशस्य सुप्रतिष्ठिता विद्वांसः, राजकार्यवशाद् हैदराबाद-निवासिनश्च सन्ति । इयमनुवादिका संस्कृतशर्मण्योभयभाषाप्रवीण एतेषामेव शास्त्रिमहाभागानां विद्या-विनयशीलसम्पन्ना सौभाग्यवती दुहिता । एतस्याः सूर्योदयस्य कृते समर्पितं प्रारम्भिकमिदमनूदितम् एकाङ्किनाटकं मन्ये, पाठकानां कृते मोदावहं स्यात्, संस्कृतविदुषीनां कृते उत्साहवर्धकञ्चेति ।

## प्रथमं दृश्यम्

[ रायबहादुरः कृष्णकिशोरो मृत्युशय्यायां शेते । तस्य पुत्राः चन्द्रकिशोरः इन्द्रकिशोरः नन्दकिशोरश्च तस्य मरणात्पूर्वमेव शोकसमाचारप्रेषणादिविषये परामर्शं कुर्वन्तस्तिष्ठन्ति । डाक्टरोऽपि समीपे वर्तते । ]

इन्द्रः—आम्, तर्हि कं कमुद्दिश्य लिखामि ?

चन्द्रः—रेनाल्ड्स-महोदयमुद्दिश्य लिख्यताम् ।

रायः—( अत्यन्तकष्टेन ) पुत्रः किं लिखसि !

नन्दः—किमन्यत् भवतां मरणवार्ताम् ।

रायः—परन्तु वत्स ! इदानीमपि न मृतोऽस्मि ।

इन्द्रः—आम्, न मृतः परन्तु मरणसमयं निश्चित्य सर्वेभ्योऽपि लिखितव्यं भवत्येव । अन्यथा कथं सर्वे भवतां मरणवार्तां जानीयुः ?

चन्द्रः—भवतां मरणानन्तरं झटित्येव एतेषामाङ्ग्लेयानां शोकसूचकानि पत्राणि वृत्तपत्रेषु प्रकाशयितव्यानि । यदि विलम्बो भवति, न कोऽपि प्रभावो भवेत् ।

रायः—वत्साः ! विरम्यतां तावत् कञ्चित्कालं यावदहं इतो भवामि । अनन्तरमेतत्सर्वं कर्तव्यम् ।

नन्दः—समयविलम्बेन को लाभः ? तात ! शिमला-दार्जिलिंगादिप्रदेशेषु आङ्ग्लेयास्तिष्ठन्ति । ते सर्वेऽपि सूचयितव्याः । तेषां नामानुक्रमणिका तु तावत् अवश्यं लेखनीयैव । हा भ्रातः, कथय ।

चन्द्रः—लाट-महोदयाः, इलबर्ट-महोदयाः, विलसन्-महोदयाः, बेसफोर्ड-माइकेल-महाशयाः, पिकाक...

रायः—वत्स ! अन्तिमकाले मम किमेतानि नामानि श्रावयसि ? अरे, भगवन्नाम श्रावय । तदेव मम इदानीं सहायकारी भविष्यति । हरे हरे !

इन्द्रः—स्मृतं मया हरिसन्-महाशयस्य नाम । तेऽपि सूचयितव्याः ।

रायः—हे राम !

नन्दः—हा, रैमजे-महोदयाः !

रायः—नारायण, नारायण !

चन्द्रः—हा ! हा, नोरान्-महोदयस्यापि नाम लिख्यताम् ।

( स्कन्दकिशोरस्य प्रवेशः )

स्कन्दः—( साक्षेपम् ) भ्रातरः धन्याः भवन्तः । अरे, प्रधानं कार्यं तु भवद्भिर्विस्मृतमेव ।

चन्द्रः—किं तत् ?

स्कन्दः—यदि भवन्तः प्रथममेव सर्वेभ्यः सूचनां न ददति, कथं पितुः शवयात्रा वैभवोपेता भवेत् । किमेतत् न प्रधानम् ?

रायः—अरे, किं नाम प्रधानम् , मम मरणं शवयात्रा वा ?

चन्द्रः—तस्य चिन्ता न कर्तव्या । ( डाक्टरं प्रति ) महाशय······

डाक्टरः—कथ्यताम् ।

चन्द्रः—पिता कियत्कालं जीवति ? कश्च अन्तिमयात्रायाः कृते समयो निश्चेतव्यः ?

डाक्टरः—अहं मन्ये··· ( स्त्रियः आक्रन्दन्ति । )

स्कन्दः—( सकोपम् ) अरे, कोऽयमुपद्रवः प्रारब्धो भवतीभिः ? तावत् डाक्टरः किं कथयतीति श्रोतव्यं खलु । हा वैद्य ! कथ्यताम् ।

डाक्टरः—अहं तु मन्ये रात्रौ······

( स्त्रियः रुदन्ति )

नन्दः—( स्त्रियः प्रति ) एतत्तु अतीव कष्टम् । कार्यावसरे एतत्सर्वं न शोचनीयं भवति । भवतीनां रोदनेनात्र को लाभः ? वयमुच्चाधिकारिसकाशादागतानि शोकपत्राणि वृत्तपत्रेषु प्रकटयामः । तूष्णीं स्थीयताम् ।　　　　( स्त्रियः शान्ताः ) ।

स्कन्दः—हा डाक्टर ! किं मन्यते भवान् ?

डाक्टरः—यदि एते अस्यामेव स्थितौ भविष्यन्ति तर्हि रात्रौ चतुर्वादनसमये म्रियन्ते इति सम्भावयामि ।

चन्द्रः—अहो नितान्तमल्पीयान् कालः । नन्दः, गम्यतां त्वरितम् । झटिति एतानि पत्राणि मुद्रयित्वा आनय ।

डाक्टरः—परं प्रथमम् औषधमानेतव्यम् ।

स्कन्दः—औषधं पश्चादागमिष्यति । युष्माकं चिकित्सालयस्तु न कुत्रापि पलायते । यदि मुद्रणालयं पिधीयेत, महत्संकटं जायेत । औषधस्य अग्रहणेनैव पितुः स्वास्थ्यं समीचीनं संवृत्तम् । बलमपि वर्धते ।

रायः—अरे ! कथं सुखस्थानेऽपि दुःखिनोऽभवन् यूयम् । किमयं नाह्लादस्य विषयो यन्मदीयस्थितिः संप्रति प्रथमतो साधीयसी संवृत्ता ।

स्कन्दः—परम् अस्माकं तु दुःस्थितिः जाता । अस्माभिः श्मशानगमनवेला तु प्रथमेव सूचिता सर्वेभ्यः ।

रायः – तदा तु मम मरणमेव उचितमासीत् ।

डाक्टरः—( सकोपम् ) तर्हि तथा क्रियतां यथा एतत्संकटं दूरीभवेत् ।

इन्द्रः—किम् ?

चन्द्रः—किम् ?

नन्दः—किम् ?

स्कन्दः—किम् ?

डाक्टरः—परं यदि रोगी तत्समये···

चन्द्रः—अस्यैव तु शीघ्रताऽस्ति । यदि पत्रमुद्रणात् प्रथममेव रोगी······

नन्दः—एष प्रस्थितोऽस्मि ।

स्कन्दः—मध्यमभ्रातः ! पत्रे एतदपि लिखितव्यं यत् प्रभाते अष्टवादनसमये शवयात्राया उत्सवः प्रारब्धो भविष्यतीति ।

## द्वितीयं दृश्यम्

स्कन्दः—अहो कीदृशो भवान् वैद्यः। चतुर्वादन-स्थाने इदानीं सप्तवादनसमयः संवृत्तः।

डाक्टरः—( अप्रतिभभावेन ) महाशय! अद्यापि नाडीचलनं स्पष्टं सुष्ठु भवति।

चन्द्रः—( सकोपम् ) सुयोग्यतमो वैद्योऽसि यद्-स्मान् संकटे पातितवानसि।

नन्दः—औषधानयने विलम्बो अजायत। तस्यै-वायं परिणामः ?

डाक्टरः—यदि युष्मासु एकतमो म्रियेत, तर्हि सर्वोऽपि परिश्रमः सफली भवेत्।

## तृतीयं दृश्यम्

[ गृहाङ्गणे जनसमूहो वर्तते। ]

कन्हाई—अरे सार्धाष्टवादनवेला भवति। कथ-मिदानीं विलम्ब्यते ?

चन्द्रः—स्थीयतां तावत्। धूम्रपानं क्रियताम्, ताम्बूलं च सेव्यताम्।

कन्हाई—तत्तु प्रातःकालादेव चलति।

बलाई—परमद्यापि अत्र किमपि संसिद्धं न दृश्यते।

चन्द्रः—सर्वमपि संसिध्येत। केवलं…

रामचरणः—भ्रातः चन्द्रकिशोर, एष विलम्बस्य समयो नास्ति। इतोऽधिकं विलम्ब्यते चेत् सुष्ठु न भवेत्।

चन्द्रः—अहमपि तथैव मन्ये। परम्……

हरिहरः—तदिदानीं कथं विलम्ब्यते ? कार्यालय-गमनवेलापि आसन्ना सम्प्रति।

( इन्द्रकिशोरः आगच्छति )

इन्द्रः—अलमलं व्याकुलतया। इदानीं सर्वमपि संसिद्धप्रायमेव। तावत् महाशयानामेतानि शोक-प्रकटनपत्राणि पठ्यन्ताम्। एतद् लाट्महोदयानां पत्रम्, एतद् हरिसन्-सकाशादागतम्, एतद् सरजेम्स…

( स्कन्दकिशोरः प्रविशति )

स्कन्दः—एतद् दृश्यतां वृत्तपत्रेषु पितुः स्वर्गवास-वार्ता लिखिता। एतद् इंग्लिशमैन……

मधुसूदनः—दृष्टा खलु भारतीयानां यथासमय-कारिता।

इन्द्रः—सुष्ठु वदति भवान्। भारतीयः यथा समयं मर्तुमपि न जानन्ति।

( शोकपत्राणि पठन्तो जना रुदन्ति )

राधामोहनः—( सजलनेत्रः ) हे दीनबन्धो !

नयनचन्द्रः—हरे, अस्मादृशेष्वपि विपत्तिरापतति !

नवद्वीपचन्द्रः—( सनिःश्वासम् ) प्रभो बलीयसी तव इच्छा !

रसिकः—( कवित्वधोरण्याम् )

एडिस्कायरः—हे टेम्पोरा ! हे मोरिस !

तर्कवागीशः—चलच्चित्तं चलद्वित्तं चलज्जीवनम्। हाय राम !

न्यायवागीशः—यदुपतेः क गता मथुरापुरी, रघु-पतेः… ( गद्गदो भवति )

दुःखीरामः—हा रायबहादुर कृष्णकिशोर ! क नु गता भवन्तः !

रायबहादुरः—(नेपथ्ये क्षीणस्वरेण) अहम् अद्यापि जीवामि। विशेषाक्रन्दनम् मा क्रियताम्।

प्राच्यप्रतीच्यवाङ्मयवरिष्ठानामगण्याग्रगण्यगुणगौरवगरिष्ठानामधुना वाराणसेय-संस्कृत-
विश्वविद्यालयीयोपकुलपतिपदे लब्धप्रतिष्ठानां सुनीतिनिष्ठानां धीमतां श्रीमतां

**श्रीसुरतिनारायणमणित्रिपाठिनाम्**

# अभिनन्दनम्

मान्यवराः !

जन्मना देवरियाजनपदमनुपदं विश्वस्मिन् विश्रावयतां यशसा च दिगङ्गनावरणेन विमलप्रावरणेनेव देशमशेषमावृण्वतां लोकोत्तरैरात्मीयगुणैरुत्तरमपि प्रदेशमिममनुत्तरतां नयतां भारतमिदं प्रतिभारतमनारतं साधयतां तत्रभवतां भवतामद्याभिनन्दनवन्दनयोरनवद्यमवसरमवसृत्य देवरियाजनपदसंस्कृतपरिषत्पारिषद्या वयं विगलित-वेद्यान्तरमान्तरं ब्रह्मास्वादसोदरं मोदरङ्गमनुभवामः सौभाग्यभूमानं चातिमानमात्मनः कमपि धन्यधन्या मन्यामहेऽतितरां नितराम् । सुरतिः श्रीमतां सुरभारत्याम् । नारायणकल्पा भवन्तः परायणानाम् । मणिभिः श्रीमद्भि-र्भारतस्य मणिबन्धो मणिवलयैरिव समलंकृतः ।

विद्वद्वरेण्याः !

यस्मिन् महति महनीये विद्यालये 'डा० वेनिस'-महोदयेन प्राचार्यतामङ्गीकृत्य तस्य महत्त्वमतितरामति-शायितम्, महामहोपाध्यायेन 'डा० गङ्गानाथ झा'-महानुभावेन च स्वानुभावेन यस्य महिमा हिमालयादासेतु विस्तारं नीतः, महामहोपाध्यायपदवीजुषा विदुषा डा० गोपीनाथकविराजेन यो राजकीयो विद्यालयो राजेव राजमान-तामानीतस्तस्मिन्नेवाधुना परिवर्तितनामधेये महाभागधेये वाराणसेयसंस्कृतविश्वविद्यालये सुप्रतिष्ठितोपकुलपतिपदवीं विजयश्रियमिवाधिश्रित्य श्रीमन्तो यदसाधारणं प्राज्यं गौरवसाम्राज्यं समासादितवन्तो न तत्र गिरां गतिः । पदवीयं पदवीक्षणाय भवतां स्वयं समुपेता स्वात्मानं सम्भावयितुम् ।

मतिमतां मूर्धन्यतमाः !

धन्यतमा भवन्तो यैः पाश्चात्यानां शासनकालेऽपि कालेन हीनतां नीयमानायां देवभाषायां गतानुगति-कतयाऽऽङ्गलभाषारसमेवागलमास्वादयत्सु भूरिशो भारतीयेष्वपि पूर्वैरभ्यर्हितायां हितायां विबुधभारत्यामबाधमगाध-मनुरागरससागरमुपदधानैस्तामेव विषयीकृत्य निरुपाधिरुपाधिपरीक्षा समुत्तीर्णा संविहाय संकीर्णां दृष्टिम् । संस्कृते 'एम्० ए०', 'एल्-एल्० बी०' परीक्षामुच्चैस्तमश्रेण्यां समुत्तीर्य विपश्चिदपश्चिमैर्भवद्भिर्गोरक्षनगरे विपक्षवाकीलन-परतयान्वर्थनामधेया वाकील ( एडवोकेट )-वृत्तिरासादितेति न विस्मरन्तीहत्याः सुहृदः । तदनु नातिचिरेण 'आई० सी० एस०'-परीक्षायां समुत्तीर्णैः सुधीभिः श्रीमद्भिर्न्यायाधीश ( डिप्टी कलक्टर )-पदं समलङ्कृतम् । ततश्चाप्यचिरेणैव यत्र प्राग् वाकीलतामधिगतवन्तस्तत्रैव भवन्तो गोरक्षनगरे जनपदजनजीवनसंरक्षणाय जनपदाध्यक्ष ( कलक्टर )-पदवीमदवीयसीमध्यशेरत । गोरक्षपुरतः प्रकृष्टपदवीमुपलभ्य गतैः श्रीमद्भिः प्रयाग-लक्ष्मणपुरप्रभृतिषु महापत्तनेषु 'डिप्टीकमिश्नर'पदं पदारविन्दाभ्यामनुगृहीत्य गौरवमापादितमिति के न जानन्ति जनाः । राजकीयसेवायामवधौ सावशेषायामपि लोकसेवायां योगदानार्थं 'लोकसेवा-आयोग'—नागनः

प्रतिष्ठानस्य सुप्रतिष्ठितसदस्यतां स्वीकृत्य तत्र भवद्भिरुत्तरप्रदेशीयजनताया या सुमहती सेवा समपादि सा सुवर्णाक्षरैरङ्कनीया स्यादैतिह्यानां पुण्यतमेषु पृष्ठेषु। न केवलं शासनकलाकलाधरा एव भवन्तः, नापि केवलं शिक्षासमुपबृंहणसरणिसहस्रकिरणविकिरणविलासशालिनो मरीचिमालिन एव, अपि तु व्यवसायक्षेत्रव्याप्तदोषदूरीकरणाय विपुलमतयः केऽपि वाचस्पतयोऽपीति समवधार्यैव राजकीयशासनेन 'ब्रिटिश इंडिया कारपोरेशन'-नामकप्रतिष्ठानस्य 'डिप्टी मैनेजिंग डाइरेक्टर'-पदे प्रतिष्ठापिताः। तत्रापि तुलनातीतया योग्यतया श्रीमद्भिः सकलाः समाधातुमशक्या अपि समस्याः सम्यक् समाहिताः समाहितमतिभिरित्यहो विश्वतोमुखी प्रतिभा प्रतिभावतां भवताम्।

वदान्यवराः !

दानिशिरोमणिभिर्मणिभिर्भवद्भिर्गुणिभ्यो गौरवं शठेभ्यो रौरवं दीनेभ्यः करुणाकदम्बो हीनेभ्यो हस्तावलम्बः समेभ्यः समुत्थानावसरः सुखप्रसरश्चेति केभ्यः केभ्यः किं किं न दत्तम्? छात्रावस्थायामेव भवन्तः सुविश्रुतनामधेयं महाभागधेयं श्रीपण्डितमदनमोहनमालवीयमात्मन आदर्शमिवादर्शं दर्शं दर्शं कमप्यपरं वरं विश्वविद्यालयं प्रतिष्ठापयितुमनल्पं संकल्पं मनसि धृतवन्तः प्रकटितवन्तश्च तं सुहृत्परिषत्सु। सिद्धश्चासौ वाचमर्थोऽनुधावतीत्युक्तदिशा सत्वरमेवेति न तिरोहितं केषामपि। जनपदाधीश्वरतया शासनविधावनारतं निरतैरपि भवद्भिः परितो भृशं परिश्रमादनुपरतैस्तदर्थमत्यर्थमर्थसंचयः समपादीति न विस्मरिष्यन्ति समे सुमेधसः। संप्रति संप्रतिष्ठितोऽसौ भावत्कसंकल्पकल्पतरुर्गोरक्षपुरविश्वविद्यालयः स्वान्तेवासिनां पूरयत्येव मनोवाञ्छामखिलाम्। एतेन पौरस्त्यजनपदानां तत्रभवन्तमपरं मालवीयमेव वयं मन्यामहे। इदमपरमाश्चर्यं नितरामालोच्यते लोच्यते च यत्—आगराप्रयागलक्ष्मणपुरप्रभृतिषु नगरेषु प्रतिष्ठामुपगतेषु पुरातनेष्वपि विश्वविद्यालयेषु नाद्यावधि प्राविधिकशिक्षादीक्षाव्यवस्था व्यवास्थापि, परन्तु नूतनतमेऽपि गोरक्षपुरविश्वविद्यालये मालवीयप्राविधिकविद्यालयः शीघ्रतरमेव स्वीकृतः सुस्थापितः सञ्चालितश्चेति। इदं भावत्कस्यैव केवलस्य परिश्रमस्याभिनन्दनीयं फलमिति किमवर्ण्यं वर्णयामः श्रीमतां सफलतां लतामिव सुरतरोरभीष्टसिद्धिकरीं सर्वेषाम्।

सुरभारतीसमुद्धारकाः !

श्रीमतामवन्ध्येन प्रयत्नेनाप्रतिबन्धेन प्रबन्धेन च गोरक्षपुरविश्वविद्यालयेऽविलम्बेनैव प्राच्यविद्याविभागः सुस्थापितः सञ्चालितश्च भवेत्, वाराणसेये च विश्वविद्यालये सत्वरमेवायुर्वेदविभागोऽपि भागं लभतामप्रतिरुद्धप्रगत्या संचाल्यतां च, संस्कृतविद्यालयानामपि सकलानां दुर्व्यवस्थादूरीकरणं स्यात्, तत्र वाञ्छनीयानां सुधाराणामाविष्करणं संभवेत्, संस्कृताध्यापकानामितरभाषाध्यापकानां च वेतनविषयकवैषम्यस्य व्यापादनं तत्र समीचः साम्यस्य संपादनं च संबोभवीतु, देवरियानगर एको राजकीयसंस्कृतमहाविद्यालयः सुस्थापितो भवेदिति च तत्रभवद्भ्यो वयं सर्वेऽपि सततमाशास्महे। कामयामहे च महेश्वरानुग्रहेण भवन्तः सुदीर्घायुषो नीरोगाः स्वस्थाः सुखिनश्च सन्तः सन्ततमेव देशस्य राष्ट्रस्य जातेः समाजस्य विशेषतः संस्कृतसाहित्यस्य सम्यक् समुत्थानं संपादयन्त्विति शुभम्।

१।१०।१९६२ वयं स्मो भवदीयाः—

देवरिया **देवरियाजनपद-संस्कृतसम्मेलनसदस्याः**

रजि० नं० ए० १६५

# श्रीभारतधर्म महामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशितपुस्तकानि

## श्रीस्वामि दयानन्द महाराजद्वारा रचितानि

| | |
|---|---|
| १—धर्मकल्पद्रुम प्र० ख० | २) |
| २—धर्मकल्पद्रुम द्वि० ख० | १॥) |
| ३—धर्मकल्पद्रुम तृ० ख० | २) |
| ४—धर्मकल्पद्रुम च० ख० | २) |
| ५—धर्मकल्पद्रुम प० ख० | २) |
| ६—धर्मकल्पद्रुम प० ख० | ३॥) |
| ७—धर्मकल्पद्रुम स० ख० | २) |
| ८—धर्मकल्पद्रुम अ० ख० | ३॥) |
| ९—धर्मकल्पद्रुम, प्रथम द्वितीय खण्ड एक साथ रायल एडी० | ५) |
| १०—प्रवीण दृष्टिमें नवीन भारत प्र० ख० | २) |
| ११—प्रवीण दृष्टिमें नवीन भारत द्वि० ख० | २) |
| १२—नवीन दृष्टिमें प्रवीण भारत | १) |
| १३—साधन चन्द्रिका | १॥।) |
| १४—शास्त्रचन्द्रिका | १॥) |
| १५—धर्मचन्द्रिका | १।) |
| १६—आर्यगौरव | ॥) |
| १७—नीतिचन्द्रिका | ॥) |
| १८—धर्मप्रश्नोत्तरी | ।) |
| १९—चतुर्दशलोक-रहस्य | ।) |
| २०—गीतार्थचन्द्रिका सजिल्द ३) अजिल्द | २॥) |
| २१—सनातनधर्मदीपिका | ॥।) |
| २२—धर्मविज्ञान प्र० ख० | ५) |
| २३—धर्मविज्ञान द्वि० ख० | ४) |
| २४—धर्मविज्ञान तृ० ख० | ४) |
| २५—सती चरित्रचन्द्रिका | २) |
| २६—नित्यकर्म-चन्द्रिका | ।) |
| २७—धर्म सोपान | ।) |
| २८—धर्मकर्म-दीपिका | ।) |
| २९—सदाचार-सोपान | —) |
| ३०—कन्याशिक्षा-सोपान | —) |
| ३१—ब्रह्मचर्य-सोपान | ।) |
| ३२—साधन-सोपान | ॥) |
| ३३—शास्त्र-सोपान | ।) |
| ३४—उपदेशपारिजात | ॥) |
| ३५—कल्किपुराण | १॥) |
| ३६—पातञ्जलयोगदर्शन | ३) |
| ३७—महामंडल-रहस्य | १॥) |
| ३८—मन्त्रयोगसंहिता | १) |
| ३९—हठयोगसंहिता | ॥) |
| ४०—तत्त्वबोध | =) |
| ४१—स्तोत्र-कुसुमाञ्जलि | ।) |
| ४२—भगवद्गीता प्रथम खंड | १) |
| ४३—विष्णुगीता | १) |
| ४४—सूर्यगीता | ॥) |
| ४५—शक्तिगीता | १) |
| ४६ धीशगीता | ॥।) |
| ४७—शंभुगीता | १) |
| ४८—संन्यासगीता | १) |
| ४९—गुरुगीता | ।) |
| ५०—कर्ममीमांसादर्शन प्र० ख० | १॥) |
| ५१—कर्ममीमांसादर्शन द्वि० ख० | २) |
| ५२—कर्ममीमांसादर्शन तृ० ख० | ५) |
| ५३—कर्ममीमांसादर्शनम् ( संस्कृत ) | २) |
| ५४—रामगीता | २॥) |
| ५५—कहावत रत्नाकर साधा० रायल | १०) |
| ५६ रामायण तुलसीकृत | १॥) |
| ५७—दैवीमीमांसादर्शन प्र० भा० | ३॥) |
| ५८—दैवीमीमांसादर्शन द्वि० भा० | ५) |
| ५९—त्रिवेदी सन्ध्या | ।=) |
| ६०—गोव्रत-तीर्थमाहिमा | ।) |
| ६१—मार्कण्डेय पुराण प्र० ख० | १) |
| ६२—मार्कण्डेय पुराण द्वि० ख० | १) |
| ६३—मार्कण्डेय पुराण तृ० ख० | १) |
| ६४—ऋजुपाणिनीयम् | ॥।) |
| ६५—संगीत-सुधाकर | ।) |
| ६६—पुराणरहस्य | १॥) |
| ६७—संन्यासधर्मपद्धति | १॥) |

सम्पादकः प्रकाशकश्च—गोविन्द नरहरि वैजापुरकरः, श्रीभारतधर्ममहामण्डल, जगतगंज, वाराणसी कैन्ट।
मुद्रकः—विश्वनाथ भार्गव, मनोहर प्रेस, जतनबर, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्

वर्षम् ३८

अङ्कः—१२

सम्पादकः
गो० न० वैजापुरकरः

दिसम्बर
१९६२

वार्षिक-मूल्यम्
५) रूप्यकाणि


## चत्वारः शत्रवः प्रताड्य पारेसीमं प्रस्थाप्याः

यो नो द्वेषत् पृथिवि यः पृतन्यात् । या अभिदासा-
न्मनसा यो वधेन । तं नो भूमे रन्धय पूर्वकृत्वरि ॥

—अथर्ववेदः, १२ । १ । १४

भगवती श्रुतिरादिशति यत् मातृभूमेः शत्रून् प्रताड्य पारेसीमं प्रस्थाप्य, राष्ट्रस्य सर्वतोऽभ्युदयः करणीय इति । मन्त्रेऽस्मिन् ऋषिर्मातृभूमिं प्रार्थयते यत्त्वं नरचतुरः शत्रून् विनाशय । तदर्थं त्वं 'पूर्वकृत्वरि' = पूर्वत एव साधनसम्पन्ना तिष्ठसि । अनेन श्रुतितात्पर्यं व्यज्यते यद्राष्ट्रशत्रूणां नाशस्य स्वसंरक्षणस्य च पूर्वमेव उपायो भाव्यः । आक्रमणोत्तरं तयोः करणीयतायां किमु वक्तव्यम् ! ते च शत्रवः इमे—१. ये नः द्विषन्ति, २ ये अनीकेन आक्रामन्ति, ३. येऽस्मान् दास्ये प्रक्षेप्तुं मनसा योजयन्ति, ४. ये हिंसकशस्त्रैरस्मासु प्रहरन्ति इति ।

## ग्राहका विनिवेद्यन्ते—

अनेन अङ्केन सहैव 'सूर्योदय'-मासिकपत्रस्य ३८ तमं वर्षं प्रपूरितं भवति। १९६३ मितस्य ईशवीयवत्सरस्य जनवरीमासिकोऽङ्कोऽस्माकं ३९ तमस्य वर्षस्य आदिमोऽङ्को भवेत्। भूतपूर्वसम्पादकानां रुग्णतया स्वर्गमनेनन च विलम्बितानामङ्कानां प्रपूर्तिरस्माभिर्यथाकथमपि प्रायः कृता। इतः परं सूर्योदयस्य २४ पृष्ठात्मकः प्रत्यङ्को नियतसमये पाठकेभ्य उपायनीक्रियेत।

अतः प्रत्न-ग्राहकाः ३९ तमवर्षीयं पञ्चमुद्रात्मकं वार्षिकं शुल्कं धनादेश-( मनिआर्डर )-द्वारा त्वरितं प्रेषयन्तु। सहैव एकोऽपि नूत्नो ग्राहकस्तैरवश्यं विधाय सूर्योदयः परिपालनीयः। फरवरी ( '६३ )-मासस्य १५ दिनाङ्कं यावत् वार्षिकशुल्कालाभे फरवरीमासिकोऽङ्कस्तेषां सविधे वी० पी० द्वारा प्रेष्येत। यदि केनापि अनिवार्यकारणेन कश्चिद् नवे वर्षे ग्राहकत्वं स्वीकर्तुं न प्रभवेत्तदा तेनापि त्वरितमस्य सूचना प्रदेयेति।

—'सूर्योदय'-व्यवस्थापकेन

---

## अनुक्रमः

८८४०

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य मासिकं मुखपत्रम् ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ।।

२८ वर्षे ] मार्गशीर्षः, २०१९ : दिसम्बर : १९६२ [ १२ अङ्कः

## श्रीदत्तात्रेय-स्तुतिः

जगत्सत्यं वा नो न च तनुरहं वा तनुरहम्,
अहं भूमा नो वा मनुत इति यो नोऽद्वयरसः ।
न माया नोऽविद्या स्पृशति किल यं तं सुविमलम्,
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। १ ।।

त्रिमूर्तीनां मायारहितमतिशुद्धं निजपदं
परं सच्चित्सौख्यं प्रकटितमहोऽत्र त्रिवदनैः ।
निजब्रह्मैक्यं यद्विहरति वितन्वन् य इह तं
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। २ ।।

तपस्तेपेऽत्रिर्यत्तनुजजनने भक्तिवशतः,
तया प्रीत्या दत्तः स्फुटतरपरात्मैव कृपया ।
ददात्यात्मानं यो ह्यतिकरुणया तं सुखनिधिं
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। ३ ।।

विभुर्यो नित्यो वाऽक्षरमिति च वा ब्रह्म परमं
वरेण्यं सत्यं वा ह्यतनुविभवः पाशरहितः ।
स्वभक्तानां मुक्त्यै सगुण इति यस्तं श्रुतिनुतं
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। ४ ।।

न भोगैर्नो दानैर्न च खलु तथा यागनिचयै-
र्न शास्त्रैर्नो योगैर्बहुविधविधानैर्न वशगः ।
कलौ भक्त्या प्रीतो भवति च वशो यस्तमभयं
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। ५ ।।

न माया नोऽविद्या जगदिदमहो नैवमथवा,
न पिण्डं ब्रह्माण्डं भवति न जनुर्यस्य दयया ।
दयासिन्धुर्यस्तं भवदलनदक्षं मुनिनुतं
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। ६ ।।

भवेद्यः सन्तुष्टः स्मरणमपि चेद्वा यदि कृतं
निजं ज्ञानं दत्वा विषयविषपाशान् दलति यः ।
जगत्सेतुर्यो वै भवजलनिधिं तर्तुमिह तं
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। ७ ।।

न माया नोऽविद्या न च मम तु जीवेशकलना,
न विश्वं नो पिण्डं न च मम जनिर्वा मृतिरपि ।
नरो नो नारी वा न च मम विकारः क्वचिदिति,
गुरुं दत्तात्रेयं भज नतमनोऽभीष्टवरदम् ।। ८ ।।

— समर्थानुगृहीत महात्मा श्री श्रीधरस्वामी —

# श्रीसद्गुरु-ज्ञानानन्द-स्मृतिः

३७.

चित्रेण तेन सुतरां परिबोधितेन सत्ये रतस्य सुविवेकवतो नरस्य ।
आस्थाऽचला खलु भवेन्निजवर्णधर्मे त्रैलोक्यपावनकरे च पतिव्रते च ॥

३८. अज्ञानवर्धनपराः क्रमशो ह्यधोगा
ऊर्ध्वस्थिताश्च निजबोधविवर्धकाश्च ।
ते सप्त सप्त शुभदर्शनभूमिभागा-
श्चित्रेऽर्पिता भगवता नितरां विचित्रे ॥

३९. निम्नस्थितान् स्ववशगान् कुरुते त्वविद्या
विद्या तथैव विदधात्युपरि स्थितांश्च ।
लोका अचिन्त्यविभवैर्हि ययोर्विलासैः
कृष्टा निकाममध ऊर्ध्वमहो भ्रमन्ति ॥

४०. देशान्तरप्रथितदर्शनजः प्रबोधे-
ऽधस्स्थेषु केवलमहो सुसमाप्तिमेति ।
ऊर्ध्वं नयन्ति मनुजान् क्रमशः स्वभक्तान्
ज्ञानाम्बुधिं विमलभारतदर्शनानि ॥

४१ ब्रह्माण्डमध्यलसितं ह्यध ऊर्ध्वमेवं
शास्त्रे चतुर्दशमितं भुवनं प्रसिद्धम् ।
तत्किञ्च कुत्र कति सन्ति च तद्विभागाः,
संदर्शितं भगवताऽखिलमेकचित्रे ॥

४२. उन्मथ्य शास्त्रजलधिं सुरदुर्विगाह्यं
विद्वत्समाजसुसमादृतसत्प्रमाणैः ।
चित्रस्थितांश्च विषयानपराननेकान्
त्वं भारतीय इतिवृत्त इह न्यगादीः ॥

४३. सद्ग्रन्थमेकमधिगम्य सनातनस्य
धर्मस्य संशयहरः परिपूर्णबोधः ।
स्यादित्यतो विरचितो वसुभाग-धर्म-
कल्पद्रुमाख्य-शुभधार्मिकविश्वकोषः ॥

४४. गायत्र्युदीर्णमनुदीक्षितसद्द्विजानां
मन्त्रान्तरस्य महतोऽपि च दीक्षणं हि ।
नावश्यकं बत वदन्ति विपश्चितो ये
ते नूनमेव भुवने विपथप्रवृत्ताः ॥

४५. ब्रह्मव्रताश्च यतयश्च वनाश्रमस्थाः
संन्यासिनोऽपि च पृथग्यदि दीक्षिताः स्युः ।
किं कारणं वदत भोः ! गृहमेधिनां सा
दीक्षा कथं नहि भवेदुचिता ध्रुवा च ॥

४६.

यज्ञोपवीतविधिनाऽपि सुदीक्षितानां सत्सम्प्रदायविहितं स्मृतिदीक्षणं हि ।
आवश्यकं भगवता प्रतिपादितं यद्राहित्यतो जनिमतां सुगतिर्न चास्ति ॥

— श्रीविन्ध्येश्वरीप्रसाद शास्त्री —

# श्रीअय्यर-महोदयानां हितोपदेशः

वाराणसेय-संस्कृतविश्वविद्यालयस्य पञ्चमदीक्षान्त-महोत्सवे प्रदत्ते स्वकीयदीक्षान्तभाषणे सुप्रसिद्धैः प्राच्यप्रतीच्यविद्याकोविदैः संस्कृतक्षेत्रीय-विविध-विचारणीयांशानां सुपरिचितैः संस्कृतसमुद्धरणैकव्रतैः विश्वविद्यालयीय-शासनविधिविज्ञैः श्री को० अ० सुब्रह्मण्य - अय्यरमहोदयैर्ये विचाराः प्रकटिताः, कस्यापि संस्कृतविश्वविद्यालयस्य कृते ते सर्वांशैरनुकरणीयाः। वाराणसेय-संस्कृत-विश्वविद्यालयस्य कृते तु ते सर्वथा सद्यश्चानुकरणीयतामर्हन्ति। यतो हि श्रीमदय्यरमहोदया विश्वविद्यालयस्यास्य आधार-भूतस्य काशिक-राजकीय-संस्कृत-महाविद्यालयस्याध्यक्ष्यं पूर्वं कृतवन्तः, अस्य च विश्वविद्यालयस्य उपकुलपतिपदमपि पूर्वमलङ्कृतवन्तः। अतोऽस्य विश्वविद्यालयस्य कृते एतेषां सूचनाः नूनमाधिकारिका इति वक्तुं शक्यन्ते। अस्य भाषणस्य सारतमः सर्वसाधारण-संस्कृतविश्वविद्यालयानां कृते पथप्रदर्शकश्च कियानंशोऽङ्केऽस्मिन् अन्यत्र सङ्कलितो वर्तते।

विश्वविद्यालयस्यास्य प्रातिनिधिभूतेन भूतपूर्व-काशिक-राजकीय-संस्कृत-महाविद्यालयेन जन्मतः सार्धशतसंवत्सराणि यावत् सङ्कलितायाः विश्वविद्यालयानुरूपायाः सामग्र्याः प्रशंसामुखेन उल्लेखं कुर्वद्भिः अय्यरमहोदयैः अनेन विश्वविद्यालयेनापि विहितानां बाह्यरूपव्यापकीकरणयत्नानां विहङ्गमवलोकनं भाषणेऽस्मिन् कृतमस्ति। तदनु प्रस्तुतविश्वविद्यालयस्य कृते कर्तव्यत्वेन तैर्ये आदर्शा निरूपिताः, नूनं ते समुचिता एव। विश्वविद्यालयस्य कृते वाराणस्या उपयुक्ततमतायां तैर्यत्किमप्युक्तम्, तदपि निर्विवादम्। विश्वविद्यालयस्य कृते प्राचीनपरम्परारक्षणपुरस्सरमभिनय-कलायाः प्रायोगिक-समुन्नयनस्य, नवीनवैज्ञानिक-ज्ञानार्जन-तदनुसन्धानादिकरणस्य अद्यावधि पठन-पाठनविधावप्राप्तस्थानानां शास्त्राणां क्रमशः सन्निवेशनस्य च याः सूचनाः प्रदत्ताः, व्यतिक्रम्यापि जन्मप्रभृति वर्षचतुष्टयमद्यावधि अनासादित-सुसङ्घटिताभ्यन्तर-रूपस्यास्य विश्वविद्यालयस्य कृते ताः सपद्यनुकार्यतां भजन्ते। विश्वविद्यालयीयं बृहत्तममद्वितीयं ग्रन्थालयं प्रोन्नमयितुं तं च सर्वजनसौलभ्याधायकं सम्पादयितुं तेषामाग्रहोऽपि स्थाने एव। मन्ये, भाषणगौरवभिया तैः प्रकाशन-विभागस्य सुदृढीकरण-व्यापकीकरणविषयेऽत्र न किमपि चर्चितं स्यात्। यतो हि इदमपि कस्यापि विश्वविद्यालयस्य महत्तममङ्गं भवति। न चेदमत्राद्यावधि सर्वथा अनुपेक्षितं समुचितजनबहुलं प्रभूत-महर्घ ग्रन्थरत्न-प्रकाशनालङ्कृतं वक्तुं शक्येत।

अन्ते च सर्वसाधारण-विश्वविद्यालयानामस्य च विश्वविद्यालयस्य कृते श्रीअय्यरमहोदयानां सर्वाधिक-महत्त्वपूर्णो हितोपदेशो नाम बुद्धिगुणैः सह चरित्र-गुणानां तत्रापि परस्परं सहयोगशक्तेः वर्धापनम्, स्वार्थत्यागापरपर्यायं सर्वशः अनुशासनपालनम्, दलबन्धनविपासम्पृक्तिश्च। नूनमेतेषामभावः क्रमशो विषम्, महाविषम्, अतिविषञ्च। एभिरेव क्षय-पक्षाघात-विषूचिकामयैरद्य भाग्यात्कश्चिदेव विश्वविद्यालयः अनाक्रान्तः स्यात्। अत एवोत्तरोत्तरं जायमानायामपि संख्यावृद्धौ नैकोऽपि विश्वविद्यालयो नालन्दा-तक्षशिलायाः स्वप्नमप्यनुभावयितुमद्य प्रभवति, यद्यपि च तयोर्नाम्नी उच्चैरुद्घोष्येते। किमतः परं विधुरम्! आशास्महे, अय्यरमहोदयतो दीक्षितोऽयं विश्वविद्यालयस्तेषां हितोपदेशान् कृतौ परिणमय्य विद्या-केन्द्रवाराणस्यनुरूपं वास्तविकं गौरवमचिराद् बिभृयादिति।

## नवोपकुलपतीनां स्वागतम्

महत्प्रमोदावहं वृत्तमिदं यदधुनैव उत्तरप्रदेशीय-शासनेन वाराणसेय-संस्कृत-विश्वविद्यालयस्य उपकुलपति-पदे वर्षत्रयार्थं स्वनामधन्यानां श्रीमतां सुरतिनारायण-मणि-त्रिपाठि-महोदयानां नियोजनं कृत्वा नूनं दूर-दर्शितापूर्णं कार्यं कृतम्। इतः पूर्वं प्रायो मासचतुष्ट-यात् त एवात्र पदेऽस्थायिरूपेण कार्यं कुर्वन्त आसन्। सर्वप्रथमं विश्वविद्यालयस्यास्य उपकुलपतिपदं स्वीकृत्य सुकुशलशासकैः श्रीमदादित्यनाथ-झा-महोदयैर्विश्व-विद्यालयस्य समुचित-वाह्यरूपप्रदाने यादृग् प्रयतितम्, संस्कृतसमुन्नयनेतिहासे तत्स्वर्णाक्षरैर्लेखनीयं मन्यामहे। ततः परं विश्वविद्यालयस्य प्राणपदमान्तरं रूपं सर्वा-ङ्गीणं विधातुं प्रयतमानास्ते संस्कृतज्ञानां दौर्भाग्या-दकस्मात् ततः पृथग्भूय कार्यान्तरे व्यापृताः। तदनन्तरं कार्यमिदं प्रगतमपि यथाव्यवस्थमद्यावधि न संवृत्त-मासीत्। शासनेन एतेषामस्थायिनियोजनेन विषयेऽत्र प्रगतिपरस्य उपक्रमस्य नान्दी विहिता। अधुना च तानेव स्थायिरूपेण नियोज्य विश्वविद्यालय-समुन्नयन-विधौ स्वकीया समवधानता प्रादर्शि तेन शासनेन। श्रीत्रिपाठिमहोदयानां महिमा 'सूर्योदय'स्य सितम्बर-मासिके अङ्के ७२ पृष्ठे प्रकाशितेन अभिनन्दन-पत्रेण, नवम्बरमासिकेऽङ्के च १०४ पृष्ठे प्रदर्शिताभिः शुभाभिनन्दन-ततिभिश्च स्फुटः। शुभावसरेऽस्मिन् वयं हार्दिकं स्वागतं व्याहरन्तस्तेषां साफल्यं काम-यमाना आशास्महे यदचिरादेव तेषामुपकुलपतित्वे विश्वविद्यालयस्यास्य आन्तरमपि रूपं सर्वाङ्गीणं परि-शुद्धञ्च तटस्थाः संस्कृत-समुन्नयनैकमानसाः परिपश्य-न्त्विति।

## सपदि भारतीय-प्रजानां कर्तव्यम्

यद्यपि सपदि चीनयुद्धं नवम्बरमासस्य विंशति-दिनाङ्कतः स्थगितम्, तथापि शीतयुद्धचक्रं तरसा प्रचलत्येव। नैकाभिर्विधाभिः युद्धस्य स्फुलिङ्गा अद्य इतस्ततो विशकलिता विजृम्भन्ते, ये यथासमयं तीव्रं जातवेदसः सखायं मातरिश्वानमासाद्य ज्वालामालतां सहजतः परिणेष्यन्तीति न सन्देहातीतम्। अत एव भारतस्य बलोपास्तौ स्वरक्षणोपायसंयोजने च समु-द्योगः समुचित एव। सत्यमिदं च यत्परबलेन सहैव अयमपीदानीं स्वीये बले समाश्वसितुं प्रगतिमयानि पदानि निक्षिपति। वयन्त्विदं मन्महे यत् एन० सी०सी० कक्षापर्यन्तं सर्वेषामेव समुपयुक्तानां भारतीयानामनि-वार्या सैनिक-शिक्षा भाव्या। तदैव राष्ट्रपितुः कथना-नुसारमस्माकमहिंसासबलानामहिंसा भवेत्। ततः पूर्वं सा कापुरुषाणामहिंसैव मन्येत। इतोऽन्यत् अन्नादि-जीवनोपयोगिवस्तूनां समुत्पादने राष्ट्रेऽस्मिन् या तीव्रताया धारा प्रवहति, साऽस्माभिस्तीव्रतरा तीव्रतमा च विधेया। न केवलं भावात्मिका, अपितु क्रियात्मि-कापि या एकताभावनाशृङ्खलाऽत्र संघट्टिता, तस्याः प्रतिसन्धिः सुदृढतरः कठोरतमश्च विधेयः। वैयक्ति-कान् सामाजिकान् आर्थिकान् राजनीतिकांश्च मतभे-दान् विस्मार्य शासनस्य हस्ता लौहमयाः करणीयाः। राष्ट्रस्य प्रच्छन्नद्रोहिणां स्वकीयम्मन्यानां परकीयचारा-णाञ्च दुरभिसन्धिभ्यः सावधानैर्भाव्यम्। प्रत्येकं भार-तीयेन पूर्णमनुशासितेन, नीतिनिष्ठेन, उद्योगप्रवणेन, समयसूचकेन, मनोवाक्कायैः सर्वविधसहयोगाय सन्नद्धेन च भाव्यम्। व्यर्थाः निर्मूलाश्च वार्ताः सर्वदा परिहरणीयाः। सहैव सर्वनियन्ता कर्तुमकर्तुमन्यथाकर्तुं समर्थश्च भगवान् बलमिदमविगन्तुं नित्यं शरणीकर-णीयः। यदि शासनेन सहैव प्रत्येकभारतीय उद्देश्या-नामेतेषां संसाधने सन्नद्धो भवेत्तदा विश्वस्य कापि शक्तिरस्मद्राष्ट्रं किञ्चिदपि कम्पयितुं समर्था न भवेत्, किं पुनरस्मान् विजेतुम्! सपदि सर्वा भारतीया प्रजाः एतादृश्य एव भविष्यन्तीति दृढमाशास्महे।

# संस्कृत-विश्व-विद्यालयानां कर्तव्यम्

— श्री को० अ० सुब्रह्मण्य अय्यरः —

विश्वविद्यालयानां संख्या वर्द्धते भारतवर्षे। स्वातन्त्र्यप्राप्तेः प्राक् षोडशैव विश्वविद्यालयाः समस्ते भारतवर्षे आसन्। अधुना तु पञ्चाशदधिकाः सन्ति। संस्कृतविश्वविद्यालयस्त्वेकोऽपि नासीत्। अधुना तु त्रयः सन्ति। अन्येऽपि संस्कृतायोगस्य संस्तुत्यनुसारेण तत्र तत्र स्थापयिष्यन्ते। युगोऽयं प्रजातन्त्रस्य। राष्ट्रगतानां सर्वासामपि संस्थानां जनतैव पोषिका। जनतयाऽनुमोदिता विश्वविद्यालया विश्वविद्यालयकार्याणि च विकसेयुर्नेतराणि। जनताया हृदये स्थानप्राप्तिरेव विद्यासंस्थानामभ्युदयकारणम्। जनता च स्वप्रतिनिधिद्वारा स्वाभिप्रायं प्रकटयति। अद्यत्वे खलु जनतया द्रव्यानुदानेन परिपोषिता सर्वा अपि संस्थास्तया निकटतरस्तथा पर्यवेक्ष्यन्ते, यथा द्रव्यस्य सदुपयोगः स्यान्न दुरुपयोगः। जनतायाः प्रतिनिधियः कदाचित् सर्वेष्वपि विश्वविद्यालयेषु सर्वेषामपि विषयाणामुच्चतमोपाध्यर्थ-पाठनानुसन्धानादिप्रबन्धस्यावृत्तिरतिव्ययहेतुः, न दरिद्रभारतीयजनतया सह्या। अतश्च न सर्वेषां विषयाणां सर्वेषु विश्वविद्यालयेषु पठनपाठनादिकं भवितुमर्हति। विषयाणां विश्वविद्यालयेषु संविभागः कर्तव्यः। प्रत्येकविश्वविद्यालये परिगणिताः संविभक्ता एव विषयाः पाठनीयाः इत्याक्षिपन्ति। संस्कृतविश्वविद्यालया अप्यस्याक्षेपस्य लक्ष्यभूताः। केवलमार्थिकदृष्ट्या विचारे क्रियमाणे भवेदत्र किञ्चित्तत्त्वम्। परन्त्वेतादृशेषु विषयेषु विद्यादृष्टिराश्रयणीया, न क्षुद्रा आर्थिकदृष्टिः।

विषयाणां संविभागे कृतेऽपि प्रत्येकविश्वविद्यालयसाध्यानि कार्याणि बहूनि भविष्यन्ति। अयं विश्वविद्यालयः सदैव विविधविद्याकेन्द्रभूतायामस्यां पुण्यनगर्यां विराजते। काशीस्थासु सर्वास्वपि संस्थास्वियमेव वयसा यशसा च श्रेष्ठा। सर्वेषामपि विषयाणां शास्त्राणां कलानां चात्र पठनपाठनप्रबन्धोऽवश्यं भवितुमर्हति, अन्यत्र भवतु मा वा भवतु। अनया दृष्ट्याऽधुनात्र क्रियमाणः पूर्वं पठन-पाठनविधावप्राप्तस्थानानां शास्त्राणां क्रमशस्तत्र सन्निवेशः सर्वेषामस्य विश्वविद्यालयस्य हितैषिणामभिनन्दनमर्हति।

परम्परागतानां विद्यानां संरक्षणमस्य विश्वविद्यालयस्य प्रथमकर्तव्यत्वेन गण्यते सर्वैः। तासां नवीकरणं संवर्द्धनं चानन्तरकरणीयत्वेन। नाट्यशास्त्रमिति प्राचीना भारतवर्षप्रसूतत्वाद् भरतमुनिप्रणीतत्वाच्च भारतीया विद्या। एतच्छास्त्रानुसारेण विरचितानि बहूनि प्राचीनानि रूपकाणि च समुपलभ्यन्ते। लक्षणस्य लक्ष्यस्य चाध्ययनं क्रियतेऽस्मिन् विश्वविद्यालये। कदाचित् कस्यचिन्नाटकस्याभिनयोऽपि भवति विद्वज्जननिर्दिष्टमार्गैर्विद्यार्थिभिः। अन्य-विश्वविद्यालयेषु सांस्कृतिकसंस्थासु च संस्कृतनाटकाभिनयः क्रियते। सर्वत्रापि परम्परागत-संस्कृतिरक्षणबुद्ध्या मन्दीभूतायास्तस्याः पुनरुज्जीवनबुद्ध्या वा संस्कृतनाटकान्यभिनिनीषूणां जनानां मनसि शङ्काः समुत्पद्यन्ते।

इहादिर्नाट्ययोगस्य नाट्यमण्डप एव हि।

इति भरतमुनि-वचनं स्मरतां तेषां मनस्ययं

न्तं

क्षने-

क्रियते,

समुल्लसति यत् कथं नाम नाट्यमण्डपः कर्तव्य इति। पुरा कालिदासादिसमये सम्राट्समुद्रगुप्तादिराजधान्यां च कीदृशा नाट्यमण्डपा निर्मिता आसन्? अद्य खल्वेकोऽपि प्राचीनो नाट्यमण्डपः कुत्रापि नावशिष्टः। बहवो देवालयाः स्तूपाः प्रासादाः प्राचीना अवशिष्टाः सर्वैर्द्रष्टुं शक्यन्ते, परं त्वेकोऽपि प्राचीनो नाट्यमण्डपः कुत्रापि न दृश्यते। किं भरतमुनिप्रणीत-नाट्यशास्त्र-द्वितीयाध्याये वर्णितं नाट्यमण्डप-विधानमनुसृत्याद्य तादृशं नाट्यवेश्म निर्माय तत्राभिनयः कर्तुं शक्यते? यद्यप्यस्मिन् विश्वविद्यालयेऽचिरान्निर्मितो नाट्यमण्डप आपाततोः शोभनः प्रतिभाति, तथापि—

त्रिविधः सन्निवेशश्च शास्त्रतः परिकल्पितः।
विकृष्टः चतुरश्रश्च त्र्यश्रश्चैव तु मण्डपः॥

इति मुनिवचनमनुसृत्य स न शास्त्रानुसारी, न च तस्य निर्माणेनास्य विश्वविद्यालस्य प्रथमोद्देश्यभूतं प्राचीनाभिनयकलाया पुनरुज्जीवनं संजातमित्येव वक्तव्यं भवति। सुविदितमेतद् यन्नाट्यशास्त्रानुसारेण नाट्यवेश्म-विधानमद्यत्वे न सुकरमिति। यतः शास्त्रे तद्वर्णनं बहुत्र प्राचीनवास्तुविद्याकोविदानामपि न स्पष्टम्। कथञ्चिन्मुनेरभिप्रायमवगत्य तदनुसारेण निर्मितोऽपि नाट्यमण्डपो भिन्नरुचये आधुनिक-प्रेक्षकाय रोचेत न वेति सन्देहः समुत्पद्यते। रोचतां मा वा रोचताम्, विद्यादृष्ट्या तु शास्त्रवाक्यान्यन्यानि च प्रमाणानि सम्यक् पर्यालोच्य रङ्गपीठ-रङ्गशीर्ष-नेपथ्यगृह - षड्दारुक-प्रेक्षक-निवेशन-सञ्जवन-सालभञ्जिका-चित्रजालगवाक्षक - मत्तवारणयादि- समन्वितस्य नाट्यमण्डपस्य पुनरुज्जीवनमवश्यं सरसं भवेत्। कृते चैतद्विषयकेऽनुसन्धाने, सति द्रव्ये, सति चोत्साहे नैतद् दुष्करमित्यभिप्रयन्ति प्राच्यप्रतीच्यवास्तुविद्यानिष्णाता भारतीयनाट्यशास्त्रद्वितीयाध्यायस्य आङ्गल-भाषया कृतानुवादव्याख्याना: बडौदा-विश्वविद्यालये यन्त्र-वास्तुविद्याविभागाध्यक्षाः प्राध्यापक-श्रीसुब्बराव-महाभागाः।

अभिनयकलायाः पुनरुज्जीवनरसिकानां पदे पदेऽन्या अपि शङ्काः प्रादुर्भवन्ति। आङ्गिक-वाचिकाहार्य-सात्त्विकभेदेनाभिनयश्चतुर्विधः। पुनरुज्जीवन-कथायां प्रवृत्तायां चतुर्विधस्याप्यभिनयस्य पुनरुज्जीवन-मावश्यकं स्पृहणीयं च प्रतिभाति। कक्षासु नाटकानां पठन-पाठनावसरे गद्यांशानां पद्यांशानां चार्थो व्याख्यायते काव्यदृष्ट्या। अभिनयदृष्ट्या तु तेषामर्थमधिकृत्य प्रायो विचार एव न क्रियते। उदाहरणत्वेन महाकविकालिदासविरचितं विक्रमोर्वशीयं गृह्यताम्। अस्य नाटकस्य विशेषतश्चतुर्थाङ्कस्य कथमभिनयः कर्तव्य इति अनुसन्धानार्होऽयं विषयः। तत्र बहुविधाः निर्देशा विविधाः पारिभाषिकशब्दाश्चोपलभ्यन्ते, येषामर्थो दुरूहः। अवगतोऽप्यर्थो दुरभिनेयः। तद् यथा—"चर्चरिकया विचिन्त्य", "चर्चरिकयोपविश्य", "चर्चरिकयावलोक्य", "चर्चरिकयोपसृत्य, पाठस्यान्ते भिन्नकः, "द्विपदिकया परिक्रम्यावलोक्य","अन्तरे कुटिलका","द्विलयान्ते चर्चरी", "चर्चरिकयोपसृत्य", जानुभ्यां स्थित्वा", "अस्यान्तेऽर्धद्विचतुरस्रकः", "चतुरस्रकेणोपविश्याञ्जलिं बद्ध्वा","इति खण्डधारया निष्क्रान्तौ", इत्यादिनाटकान्तर्गतानां निर्देशानामर्थो व्याख्यासाहाय्येनापि न स्पष्टो भवति, तेषामभिनयविधिश्च नितरां दुरूहः, ऊहितोऽपि परम्परासिद्धाभिनयकलाज्ञशिक्षयाऽभ्याससाध्यश्च। एवंभूताया अनुसन्धानैकवेद्याया संप्रदायज्ञशिक्षैकसाध्याया अभिनयकलायाः पुनरुज्जीवनं नाटकानामध्ययनस्य मुख्याङ्गत्वेन कुत्रापि न गण्यते। यदीदं कर्मात्र विश्वविद्यालये क्रियेत, तर्हि भृशमनुरूपं भवेत्। विद्वद्विदग्धसहयोगसाध्यमिदं कर्म। विश्वविद्यालयश्च विदुषां विदग्धानां च केन्द्रं भवितुमर्हति।

प्राचीनाभिनयकलायाः पुनरुज्जीवनं नाम परम्परागताया विद्यायाः संरक्षणकोटावन्तर्भवति । नवीनानां समयानुगुणानां नाटकानां संस्कृतभाषया विरचनं तेषां चाभिनयस्तस्याः संवर्द्धनकोटावन्तर्भवेत् । उभयस्याप्यस्य विश्वविद्यालयस्योद्देश्यत्वेन स्वीकरण एवास्य स्वरूपचित्रं किञ्चिदुन्मीलितं स्यात् ।

न केवलं नाटकानाम्, अपि त्वन्येषामाधुनिकानां लघुकथोपन्यासादि-काव्यप्रकाराणां संस्कृतभाषामवलम्ब्य विरचनादेवास्या भाषायाः सजीवत्वस्थापनं परप्रतिपादितमृतत्वनिराकरणं च कृतं स्यात् । केवलं परम्परागतस्य रक्षणे क्रियमाणे सर्वेऽपि विश्वविद्यालयान्तर्गत-शास्त्रविभागाः इतिहासविभागस्यैवाङ्गभूता भवेयुः । यतः सर्वत्रातीतस्यैवाध्ययनं भवेत्, न कुत्रापि नवीनस्य सृष्टिः स्यात् । अतीताध्ययनमेवेतिहासो नाम । तच्चातीतं कुलक्रमागतानां राज्ञां परस्परसंघर्षजयुद्धजय-पराजयादिरूपं वा भवतु, विद्यावंशपरम्परागतानां तत्तद्दर्शनप्रतिष्ठापकानामाचार्याणां परपक्षप्रतिक्षेपस्वपक्षस्थापनरूपसंघर्ष-जय - पराजयादिविजयादिकथारूपं वा भवतु, अतीतत्वे न कोऽपि विशेषः ।

विश्वविद्यालयस्य स्पष्टचित्रोन्मीलनविचारे प्रवृत्ते प्रश्नोऽयं समुदेति । कथा-प्रवचनमित्यतिप्राचीनेयं भारतीया प्रथा । जनतायां विद्यायाः संस्कृतेश्च प्रसारणे प्रथयानया महदुपकृतम् । कथा-प्रवचनस्य सौष्ठवं न केवलं वैदुष्यसाध्यम् । अपितु वैदग्ध्यमपि तत्रापेक्षितमिति जानन्त्येव सदस्यमहाभागाः । एवंभूता वैदुष्यसंवलितवैदग्ध्यसाध्या कथाप्रवचन-प्रथा किमस्य विश्वविद्यालयस्य प्रोत्साहनमर्हति न वेति विचारणीयम् । जनताया धर्मबुद्धेः समुद्बोधनेन धर्मरक्षणमेवास्याः कलाया मुख्यमुद्देश्यमासीत् । सर्वेष्वपि युगेषु तत्तद्युगानुगुणया रीत्या धर्मरक्षणं कर्तव्यं भवति । कदाचिद् धर्माङ्गभूतस्य देश-स्वातन्त्र्यस्यापि रक्षणं कर्तव्यं भवति । तत्रोपयोगिन्याः कथा-प्रवचनप्रथायाः समयानुगुणपरिवर्तनानि कृत्वा किमत्र विश्वविद्यालये विकासः कर्तुं न शक्यते ? विचारार्होऽयं विषयः ।

विज्ञानस्यायं युगः । नवनवानि विज्ञानाङ्गानि प्रादुर्भवन्ति । 'बयोनिक्स'-नामकमेकं यन्त्रविज्ञानाङ्गमधुना क्रमेण विकासं भजते । अस्मिन् विज्ञानाङ्गे मनुष्येतराणां प्राणिनां शरीरबलानि अधीयन्ते, येन मनुष्यहिताय तेषामुपयोगः कर्तुं शक्येत । सुविदितमेतद् यत् सर्वाण्यपि प्राणिशरीराणि यन्त्रतुल्यानीति । आश्चर्यकरमप्यनेकाङ्गप्रत्यङ्गघटितं मनुष्यनिर्मितं यन्त्रं प्राणिशरीरापेक्षयाऽतीव साधारणमेवेति । क्षुद्रजन्तूनामपि शरीरेषु मानुषशरीरासुलभानि बलानि सन्ति । यथा—मण्डूकस्तावत् जीवत एव कीटान् पश्यति, स्वजिह्वागोचरभूतां चलमक्षिकामेव झटिति पश्यति भक्षयति च । मृतमक्षिकाभिः परिवृतोऽपि ता न पश्यत्येव, स्वशरीरस्यानुपयुक्तत्वात् । मण्डूक-चक्षुरिन्द्रियस्येदं वैशिष्ट्यमधुना यन्त्रविज्ञानकोविदैरधीयते । ते हि तथाविधस्य यन्त्रस्य निर्माणमिच्छन्ति, यदपेक्षितस्यैव ग्रहणं कुर्यान्नानपेक्षितस्य । तादृशं यन्त्रं विमानानां यातायातस्य निरीक्षणेऽतीवोपकारकं स्यात् । पतङ्गानामुदरस्थश्रोत्रेन्द्रियं सूक्ष्मसूक्ष्माणां मनुष्यश्रोत्रागोचराणां शब्दानां ग्रहणे समर्थं भवति । तदप्यद्यत्वेऽधीयते वैज्ञानिकैः । तस्य मूलतत्त्वावबोधेन तदनुकारियन्त्रनिर्माणेन च सम्प्रति मनुष्यश्रोत्रागोचराणां तद्गोचरत्वं सम्पादयितुमिच्छन्ति । मशकानां स्वपक्षस्फुरणध्वनेः सत्यप्युच्चकोलाहले दूरस्थेतरमशकपर्यन्तं प्रापणशक्तिः प्रसिद्धा । तस्या अपि रहस्यावबोधनेऽधुना 'बयोनिक्स' विज्ञानकोविदैः प्रयत्नः क्रियते,

येन प्रतिदिनं वर्धमाने नगरकोलाहले रेडियो-प्रभृति-यन्त्राणि निर्बाधं स्वव्यापारं कुर्युः। एवं तिरश्चां करणवैचित्र्यमद्यत्वे मनुष्यहितसम्पादनायोपयुज्यते। तिरश्चां करणवैचित्र्यमस्माकं शास्त्रेष्वपि तत्र तत्र वर्णितं दृश्यते। यथोक्तं योगराजेन परमार्थसार-व्याख्यायाम्—

एवं तिरश्चामपि नियतिशक्त्या सङ्कुचितानामपि मनुष्येभ्योऽप्यतिशयः करणानां विद्यते। तद् यथा—गावः स्वगृहं व्यवहितमपि पश्यन्ति, अश्वा रात्रावपि मार्गमीक्षन्ते, गृध्रा योजनशतगतमप्यामिषमवलोकयन्ति, पक्षिणो मक्षिका मशकपर्यन्ता आकाशविहारिणो दृश्यन्ते, सरीसृपा उरसा पन्थानं गच्छन्ति। दृशा च शृण्वन्ति शब्दान्, उष्ट्रा दूरादपि गर्तात् श्वासमात्रेण सर्पमाकर्षयन्ति, इत्येवं सर्वत्र करणवैचित्र्यमूह्यम्, इति।

तथा च—

विशेषलाभः सर्वत्र विद्यते दर्शनादिभिः।
केषाञ्चित् तदभिव्यक्तिसिद्धिर्दृष्टिविषादिषु॥

इति वाक्यपदीय-कारिकाव्याख्यावसरे कथयति हेलाराजः—दृष्टिविषैरहिभिर्निरीक्षितो विषयो ज्वलनज्वालालीढो लक्ष्यते इति। एवमेव वर्षातिपाते मृद्भावमुपगतो मण्डूकदेहः पुनरम्भोदवारिधारावसेकात् मण्डूकदेहभावमनुभवतीति तत्त्ववैशारद्यां वाचस्पतिमिश्राः। नवाम्बुदध्वानादिनिमित्ता बलाकागर्भोदय इति न केवलं कविसमयः, भामत्यामप्यस्यार्थस्योल्लेखो दृश्यते। उद्भिदामपि विषये तत्र तत्र किञ्चिद् वैचित्र्यमुपवर्णितं दृश्यते शास्त्रेषु। यथा—मधुरसभावितानामाम्रबीजानां परम्परया फलमाधुर्यमिति योगसूत्रगतव्यासभाष्ये। दृष्टं च दुष्टानां कारणानामौत्सर्गिककार्यप्रतिबन्धेन कार्यान्तरोपजननसामर्थ्यम्। यथा—दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम् इति भामत्यां च दृश्यते। एवं तिरश्चां वीरुधां च वैशिष्ट्यबोधकानि बहूनि वाक्यानि शास्त्रेषु प्रसङ्गादागतानि तत्र तत्र विप्रकीर्णानि समुपलभ्यन्ते। तेषां प्रामाणिकत्वयथार्थत्वे तैरेव विद्वद्भिरुपपादनीये, ये तत्तच्छास्त्रप्रणेतॄणामाचार्याणां विद्यावंशजा भवन्ति, संस्कृतविश्वविद्यालयादिसंस्थासु च पाठयन्ति। प्राध्यापकैः केवलमध्यापनेन न सन्तोष्टव्यम्, कञ्चिद् विषयमधिकृत्यानुसन्धानमपि कर्तव्यमिति मूलसिद्धान्तोऽधुना सर्वत्र स्वीक्रियते। तिरश्चो वीरुधश्चाधिकृत्य शास्त्रकारैः कानि कानि प्रमाणान्याश्रित्य सर्वमिदमुक्तमिति गवेषणां कृत्वा विशदीकरणेन विद्याया अवश्यं वृद्धिर्भवेत्।

सिद्धिर्न केवलं बुद्धिगुणाधीना, अपि तु चरित्रगुणाधीनापि। चरित्रगुणेषु सहयोगशक्तिरेव मुख्येति सर्वसम्मतमेतत्। भारतीयजनतायां बुद्धिगुणानां नास्ति काचिन्न्यूनता। सर्वाण्यपि गुरुकार्याणि विशेषतो विद्याविकासानुकूलानि कार्याणि विश्वविद्यालयसम्बद्धानां सर्वेषामपि जनानां स्वार्थैषणानिग्रहेण रागद्वेषादिप्रमार्जनेन सहयोगेन चैव सिद्ध्यति। सहयोगश्च प्रथमं तावदधिकारिणां प्राध्यापकानां च, ततोऽधिकारिणां विद्यार्थिनां च, ततः प्राध्यापकानां विद्यार्थिनां च, अन्ततः प्राध्यापकानां मिथश्च भवितुमर्हति। सहयोगेन परस्परसौमनस्येन च विना कस्यामपि विद्यासंस्थायां दैनिकानि साधारणकार्याणि अपि न यथावदनुष्ठातुं शक्यन्ते, किं पुनः श्रद्धोत्साहसाध्यानि विशेषकार्याणि। श्रुतमेवास्माभिः सर्वैरस्योत्सवस्य प्रारम्भ एव तैत्तिरीयोपनिषदुक्तमनुशासनम्। अनुशासनशब्दोऽयमद्यत्वे सर्वत्र श्रूयते। प्रायेण च विद्यार्थिनां सम्बन्धेऽस्य शब्दस्य प्रयोगः क्रियते। परं त्वनुशासनशब्दवाच्यो धर्मो न केवलं विद्यार्थिभिः संसेव्यः।

( शेषांशः ११४ पृष्ठे द्रष्टव्यः )

एकाङ्कं नाटकम्

# नाचिकेतसम् : यम-विजयः

— श्री अनन्तशास्त्री फडके —

वाराणसेय-संस्कृत-विश्वविद्यालयस्य भूतपूर्व-पुराणेतिहासविभागाध्यक्षैस्तत्रभवद्भिः श्रीमदनन्तशास्त्रि-फडकेमहोदयैः 'सूर्योदय'-पाठकानां कृते प्रत्नमपि नूतनम् एकाङ्कं नाटकरूपेण संग्रथितमिदं नाचिकेतसं नूनं सर्वेषां प्ररोचनाय बोधाय च भवेत्। आमुखे तैरस्य पृष्ठभूमिः सर्वा विशदीकृतेति तत्र विषये बहु अनुक्त्वा पाठकेभ्यस्तदेव उपहारीक्रियते।

—सम्पादकः

## आमुखम् : नाटकस्य संक्षिप्तो विषयः

गौतमऋषिर्यत्र यज्ञे सर्वं प्रदीयते, एतादृशं सर्ववेदसं यज्ञं करोति। तत्र दक्षिणार्थमतिजरठा मृतकल्पा गा दक्षिणार्थं स स्थापयति। ताः दृष्ट्वा तत्पुत्रस्य नचिकेतसो हृदये विचार आगच्छति—'कथमेताभिर्गोभिः पिता स्वर्गं गच्छेत्? प्रत्युत नरकमेवेयात्। तेन यज्ञे पिता त्रिवारं पृष्टः—मां कस्मै प्रददासि इति। पिता च क्रुद्धः सन् तं यमाय दत्तवान्। स पितुः सङ्केतानुसारं यमलोके गत्वा यमाच्च वरत्रयं लब्ध्वा नाचिकेतसाग्निविद्यामात्मज्ञानं च सम्प्राप्य भारते आजगाम इति कठोपनिषद्गता कथा।

तैत्तिरीय-ब्राह्मणे आकाशवाण्या नचिकेता उपदिष्टः—'यमो यदा गृहे न स्यात्तदा गत्वा तस्य गृहे त्रिरात्रमुपोषितस्तिष्ठ। यमः समागत्य पृष्टश्चेत् कथय, तव पुण्यं पुत्रपौत्रादिकं च मयोपवसता भक्षितमिति। तदा स त्वाममारयित्वा तवाभिप्रेतं सम्पादयेदिति वृत्तमुपलभ्यते।

महाभारते तु समिदाद्याहरणाय प्रेषितो नचिकेतास्तद्गृहीत्वा समागतः, क्रुद्धेन पित्रा म्रियस्वेति शप्तो मृतश्च। तदोद्दालकपिता शोकातुररेकं दिवारात्रं स्थितः। द्वितीये दिने नचिकेता जाग्रतः सन् यमोक्तात्मज्ञानादिकं गोदानमाहात्म्यं च कथयामासेति वृत्तमुपलभ्यते।

अत्र नाटके जीवन् यमलोकं मनुष्यो गच्छति, परावर्तते चेत्यसम्भाव्यं वृत्तं तैत्तिरीयब्राह्मण आकाशवाणी-प्रदर्शनेन सुसंयोजितम्। भारते च स्वप्ने यम-नचिकेतसोः संवादो जात इति कल्पनया सुसङ्गतं कृतम्। तथैवात्र यमलोके जीवन् मानवः सदाचारेण, दयया, सरलस्वभावेन नम्रतया अहिंसया च हिंस्रान् क्रूरानपि यमकिङ्करान् वशीकरोतीति वृत्तं प्रदर्शितम्। तदर्थं चात्मविद्यां भारतेऽसतीं यमादानयितुमेव नचिकेतसं मिषेण केनचित् प्रेषयितुं मृतकल्पाः गाः स्थापयति दक्षिणार्थं तत्पिता। तदर्थं यमपुत्रेण कोपितः नचिकेताः पितुर्यज्ञे विघ्नं करोति। तदा क्रुद्धेन वस्तुतोऽक्रुद्धेन पित्रा यमलोकं प्रेषितः। तत्र यमलोकं गच्छता नचिकेतसा मध्येमार्गं संकटग्रस्तान् संसेव्य स्वतपसा त्यागेन दयया च यमकिङ्करा वशीकृताः। तद्द्वारा सर्वोऽपि यमलोकः सत्ये पथि स्थापितः। यमाच्चात्मज्ञानं लब्ध्वा भारतगौरवादिकं रक्षितं स्तावितञ्चेति निरूपितम्।

नाचिकेतसाख्यानस्य प्रमाणभूतानि स्थलानि निम्नलिखितानि सन्तिः

(१) ऋग्वेदः···,१०,१३५ सायणभाष्यम्।
(२) तैत्तिरीय-ब्राह्मणम्—३,११,८।
(३) कठोपनिषत् - १,१–२९।
(४) वराहपुराणम्—अ० १७०–१७६।
(५) कुम्भकोणमुद्रितं महाभारतम्—अनु० १०६, २;४,२३।
(६) अन्यत्र मुद्रितं भारतम्—अनु० ७२।

अत्र नाटके मन्त्रा ऋग्वेदगताः कठोपनिषद्गताश्च यथोपलभ्यन्ते तथैव स्थापिताः। श्लोकाश्च क्वचिद्रामायणस्थाः विष्णुपुराणस्थाश्च किञ्चिद्विपरिणम्य स्वीकृताः प्रसङ्गानुरूपाः, न तु पद्यं किञ्चिन्नूतनं निर्मितम्। केवलं गद्यभागो नूतनः। सोऽपि न केवलं सर्वथा नूतनः, किन्तु कथानुरूपः कथास्थमन्त्रश्लोकस्थ इति ज्ञेयम्। एतत्करणेऽयमभिप्रायो विद्यते—सरलं समीचीनं मन्त्रभागं पुराणस्थश्लोकांश्च प्रसङ्गेन श्रुतान् कण्ठस्थान्कर्तुं बुद्धिमतां सुविचारकाणां प्रवृत्तिर्भवत्विति।

( जवनिकापसरणानन्तरं सूत्रधारः पुष्पसहितमञ्जलिं विधाय प्रविशति )

सूत्रधारः—

इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः।
( ऋग्वे० १०,१४,१५ )

नमो महद्भ्यो नमो अर्भकेभ्यो
नमो युवभ्यो नम आशिनेभ्यः।
यजाम देवान् यदि शक्नवाम
मा ज्यायसः शंस मा वृक्षि देवाः॥
( ऋ० १,२७,१३ )

अन्यच्च—

गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात्॥
( विष्णुपु० २,३,२४ )

( इति हस्तस्थ-पुष्पाणि विकिरति )

नमो भारताय देशाय। अद्य वयमभिरूप-भूयिष्ठायामस्यां परिषदि लघुना नवेन वैदिकेन एकाङ्केन नाचिकेतसेन नाटकेन समागतान् समादरणीयान् सभ्यानुपस्थातुमभिलषामः। तदत्राधीयतां चेत इति प्रार्थयामहे। ( गच्छति )

( द्वावृषी हस्ते कमण्डलुं धृत्वा कुक्षौ कृष्णाजिनं संपरिपीड्य च प्रविशतः )

एकः—ऋषे वासिष्ठ! निर्मलसदाचारपूतेषु सर्व-विद्याकलापारङ्गतेषु भारतीयेषु ऋषिषु देहे पतिते जीवात्मनोऽस्तित्वविषये साम्प्रतिक एको विवादः प्रचलति। ह्यस्तने दिने महर्षेरुद्दालकस्य यज्ञे मध्ये-सभमयं प्रश्नः—"येयं प्रेते विचिकित्सा मनुष्ये-ऽस्तीत्येके नायमस्तीति चैके" ( कठ १,२० ) इति, श्रीकाश्यपेन ऋषिणा पृष्टः। पूज्यो महर्षिरुद्दालकः प्रश्नमिमं श्रुत्वा दीर्घकालं सुगम्भीरं विचारयन् स्थितः। न जाने किमिति प्रश्नमिमं न महर्षिरुद्दालक उदतरदिति।

वासिष्ठः—ऋषे आत्रेय! अतिगम्भीरोऽयं प्रश्नः, यावदनुभवगम्यो न भवेत्तावत् कथं वा महर्षि-रुद्दालकोऽनुब्रूयात्। परन्त्वन्ततो दीर्घं विचार्य महर्षि-रकथयत्—'यथा सर्वथा ज्ञानमिदं भारते समायाया-त्तथा प्राणपणेन प्रयतामहे' इति। पुनः पृष्टः सन्नब्रवीत्—'संप्रति वैवस्वतो यमो राजा देहपातानन्तरं जीवात्मनो-ऽस्तित्वविषये सर्वं विज्ञानं साक्षात्कृत्यात्मारामो निर्भयो निर्द्वन्द्वो विरक्तः शोकमोहादिरहितः सुखेन स्वकार्यं संपादयन्नास्ते' इति।

आत्रेयः—ऋषे वासिष्ठ! एतत्सर्वं महर्षेरुद्दालक-स्याभिप्रेतं सत्यं भवेदिति जाने। परन्तु जीवन् मानवो यमलोके कः समर्थो गन्तुम्? सर्वथा यमलोकसीम्नि भयङ्कराः क्रूरा शस्त्रहस्ता निर्दया यमकिङ्कराः प्रचरन्ति। मानवं दृष्ट्वैव पशुघातं हत्वा बलाद् दूरं कुत्रचित् नयन्तीति श्रूयते। एको देवर्षिर्नारद एव स्वतपोज्ञानादि-सामर्थ्यात्तत्र गच्छतीति चाकर्ण्यते। कथं वा महर्षिः उद्दालको वाजश्रवसः कठिनमिदं प्रतिज्ञातं कार्यं सम्पादयेदिति महती चिन्ता मां दुनोति।

[ नेपथ्ये च्छात्राः पठन्ति, उभौ समाकर्णयतः—
ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं कर-वावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै।
ॐ शान्तिः शान्तिः शान्तिः ]

वसिष्ठः—अरे ऋषे आत्रेय! महर्षिरुद्दालको यज्ञस्यान्तिमे दिने सर्ववेदसं दित्सुः प्रातःसवनं प्रारब्धवान् इति ज्ञायते, यतो नचिकेतःप्रभृतिऋषि-कुमाराः पाठशान्ति विधाय अद्यानध्याय इति महर्षिणा गुरुणोद्दालकेन विसृष्टाः सन्तः कुश-समिदाद्याहरणाय

इत एवायान्तीति लक्ष्यते। एहि, आवामपि त्वरितं गत्वा स्वानुष्ठानं सम्पादयावः।

[ उभावेकतो गच्छतः। अन्यतश्चत्वारः कुमाराः प्रविशन्ति। तत्र त्रयो गौरा भस्म-जटा-कमण्डलु-दण्डाजिनधारिणः। तेष्वेकोऽतितेजस्वी नचिकेताः। चतुर्थः कृष्णवर्णो मुकुट-कटकधारी कट्यां खड्गं धृतवान् यमपुत्रः। ]

एकः—मित्र भार्गव! "सत्येनोत्तम्भिता भूमिः सत्येनोत्तम्भिता द्यौः।" ( ऋ० १०,८५,१ ) अहो अति-गम्भीरमधुरभावमयोऽयं ऋङ्मन्त्रः। अस्माकमाचार्य-गुरुभिरद्य सम्यक् चेतोहारिण्या रीत्या व्याख्यातः। सत्यबलेनायं लोकोऽपरो द्युलोकश्च धृत इति पूज्य-चरणगुरूणां कथनं मह्यमतीव रोचते।

अपरः—सत्यं कौण्डिनेय! त्वं वदसि। "श्रद्धयाग्निः समिद्ध्यते श्रद्धया हूयते हविः।" ( ऋ० १०,१५१,१ ) अस्यापि ऋङ्मन्त्रस्य श्रद्धामयेन तपसा जडोऽपि वह्निर्देवतारूपेणेद्धः सन् हविर्भाग् भवतीति श्रीगुरु-चरणैः कृतं श्रुतिचेतोहारि प्रवचनमधुनाऽपि प्रत्यक्षमिव प्रतिभाति। ( नचिकेतसो हस्तं धृत्वा ) कथं वा गुरुपुत्रो नचिकेताः मन्यते?

यमपुत्रः—( तिरस्कुर्वन् मध्ये ) नाहं गुरूणां वचसि कथमपि श्रद्दधे। ( विहस्य तिरस्कारं प्रदर्श्य ) किं श्रद्धया जडोऽपि हुतभुग् देवतारूपं सम्पादयेत्? किं सत्येन पृथिवी द्युलोकश्च धृतो भवेत्? सर्वमशक्यम्। श्रद्धा-जडानां मूर्खाणां प्रतारणामात्रमेतत्।

नचिकेताः—( क्रुद्धः सन् भूमौ पादाघातं कृत्वा ) विद्याग्रहणार्थमागतोऽन्यदेशीयः अस्माकमतिथिः, सर्व-पूज्यस्य वैवस्वतस्य यमस्य पुत्रो मान्य इति कृत्वा क्षमे। सत्यापयामि, सत्येन, तपसा, विनयेन, अहिंसया, दयया सर्वमपि जगद् ध्रियते; क्रमेण नियमबद्धं सञ्चलति। किं केवलैका पृथिवी द्यौश्च?

यमपुत्रः—( हसित्वा ) भोः सत्यप्रिय गुरुपुत्र! प्रविश वह्नौ, कूर्द समुद्रे, पातय पर्वतशृङ्गादात्मानम्। सत्येन संरक्षितश्चेन्मन्ये सत्यस्य माहात्म्यम्। 'वचने किं दरिद्रता?'

नचिकेता—( शान्तस्वरेण ) आदरणीय अतिथे! सत्यार्थं गुरुवचनेन समये वह्निमपि प्रवेक्ष्यामि। पर्वतादपि पतिष्यामि। विषं वा पास्यामि।

"भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे।
नियुक्तो गुरुणा पित्रा सद्वृत्तेन हि तेन च॥"
( वा० रा० अयो० १८-२९ )

"लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत्।
अतीयात्सागरो वेलां नोपदेशं पितुर्ह्यहम्॥"
( वा० रा० अयो० १९ )

यमपुत्रः—( तिरस्कारस्वरेण ) भोः सत्यप्रिय! तव विनयं प्रशंसामि। परन्तु कथनमेतत्कदापि सत्यं न भविष्यति। अस्तु, समये द्रक्ष्यामि तव पौरुषम्!

[ नेपथ्ये कोलाहलः शब्दश्च—अब्रह्मण्यम्! अस्थि-चर्ममात्रशेषा गावो दक्षिणार्थं महर्षिणोद्दालकेन स्थापिताः सन्ति। कथं वा आरुणिरुद्दालको महर्षिरेताभिर्गोभिः स्वर्गं गन्तुमभिलषति?

पीतोदका जग्धतृणा दुग्धदोहा निरीन्द्रियाः।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्॥
—कठ १।३ ]

यमपुत्रः—शृणुत, शृणुत सर्वेऽपि आर्याः ऋषि-कुमाराः! सत्यप्रियस्य गुरुकार्यार्थं पर्वतात्पतनोत्सुकस्य नचिकेतसः पितुरस्माकं गुरोर्महर्षेरुद्दालकस्य नरक-गमनयोग्यं कृत्यम्। मृतकल्पा गा दक्षिणार्थं द्विजेभ्यो दित्सति। भोः नचिकेतः! दर्शय स्वकीयं सत्यप्रियत्वम्, अवरुन्धि अकार्यकारिणं पितरम्। प्रकाशय आर्याणां सच्चरित्रम्।

नचिकेताः—( कोपाद्दण्डं कमण्डलुं च हस्तेन चालयन् ) अदश्यमवश्यं दर्शयामि। पश्यन्तु सर्वेऽपि भारतीयानामार्याणां सत्यपूतं चरित्रम्।

( इति सक्रोधं कथयन् क्रोधावेगेन गच्छति )

एकश्छात्रः—( यमपुत्रस्य समीपे गत्वा तस्य स्कन्धे हस्तं निधाय ) अरे यमपुत्र ! अज्ञानेन केवलं त्वं गुरुचरणानधिक्षिपसि । तेषां त्यागं तपः सत्यप्रियत्वादिकं च तव पिता वैवस्वतो यमोऽपि मध्येसभं प्रशंसति । गुरुचरणाः पुत्रादप्यधिकमस्मान् शिष्यान् स्निह्यन्ति ।

यमपुत्रः—( हस्ताभ्यां मस्तके प्रणामाञ्जलिं कृत्वा शिरो विनम्रं विधाय च सदुःखस्वरम् ) जाने, सर्वं जाने, आचार्यैर्गुरुचरणैरस्मासु यदुपक्रियते, ततो जन्मशतेनाप्यस्माभिरात्मानमुद्धर्तुं न शक्यते। परन्तु किं करोमि? युक्ति-विसङ्गतं मह्यं न रोचते। मम तातशासितप्रदेशेषु मदीयं पूर्वमध्ययनं जातम्। सत्येन, श्रद्धया, विनयेन च किमपि फलं भवतीति तत्र मूर्खोऽपि कश्चिन्नाङ्गीकरोति।

( नेपथ्ये नचिकेतसः शब्दः, तं सर्वे शृण्वन्ति )

नचिकेताः—हे तात ! एता निरीन्द्रिया अस्थिचर्मावशेषा गावो ब्राह्मणेभ्यः प्रदीयन्ते। तिष्ठ, मा देहि। तत गुरो ! कस्मै मां दास्यसि ? ( क० १,४ )

एकश्छात्रः—अरे पश्यत पश्यत, अस्माकं प्रियसुहृदो नचिकेतसो हठम्। यः पूर्वं पितुर्गुरोः समीपे पृष्टोऽपि सन्न कदाप्युच्चैः शब्दं करोति, सोऽद्य कथं मध्येसभम् उच्चैः शब्देन गुरुमागृह्णाति।

( नेपथ्ये गुरोरुद्दालकस्य शब्दः )

गुरुः—अरे नचिकेतः ! अपेहि इतो यज्ञकृतात्। यज्ञे विघ्नं मा कुरु। क्रीड क्रीडनकैश्छात्रैः सह। मोदस्व भक्ष्यैः। विहर यथेच्छम्।

( नेपथ्ये नचिकेतसः पुनः तथैव शब्दः गुरोश्चापि )

नचिकेताः—एता अस्थिचर्मावशेषा गा द्विजेभ्यो दक्षिणारूपेण मा देहि। तत कस्मै मां दास्यसि ?

गुरुः—अपसर, अपसर, रे मूर्ख धृष्टपुत्र ! यज्ञकृत्यात्। विघ्नमुत्पाद्य देवतानां कोपभाजनं मा भव।

अपरश्छात्रः—अरे गुरुभिर्भर्त्सितोऽपि मेरुरिव निश्चलः, समुद्र इव गम्भीरो मम प्राणसखो नचिकेतास्तथैव तिष्ठति।

यमपुत्रः—( आत्मगतम् ) अरे मया कोपितो गुरुपुत्रो नचिकेताः किं वा विधास्यतीति न जाने। सत्याचारपूतेभ्यः सत्यार्थं प्रयतमानेभ्य आर्येभ्यः सर्वथा शतशो नमोऽस्तु ( इति नमस्काराञ्जलिं करोति)। ( प्रकाशम् ) सखे भार्गव ! किं वा भवेद् बिभेमि चेतसा।

( पुनर्नेपथ्ये नचिकेतसो गुरोश्च शब्दः )

नचिकेताः—हे गुरो पूज्य पितः ! नरकप्रदायिनीः अस्थिचर्मावशेषाः इमाः गाः कथं प्रददासि ? तत कस्मै मां प्रदास्यसि ?

( क्रुद्धस्य पितुरुद्दालकस्य शब्दः )

उद्दालकः – अरे धृष्ट उद्दण्डपुत्र नचिकेतः ! मृत्यवे त्वां ददामि। गच्छ इतो यमलोकम्।

[ नेपथ्ये महान् कोलाहलः—अब्रह्मण्यम् अब्रह्मण्यम्। हा ! हा ! कथं पितापि सन् प्राणेभ्योऽपि गरीयांसमेकमात्रं स्वपुत्रं यमलोकं प्रेषयति ! हा अब्रह्मण्यम् ! ]

सर्वेऽपि ऋषिकुमाराः—हा ! हा ! अहो एतत्किमनिष्टं सञ्जातम्। अस्माकं गुरुः पूज्यो महर्षिः आत्मनः पुत्रमस्माकं प्रियसुहृदं नचिकेतसं यमलोकं प्रेषयति। अस्माकं प्राणेभ्योऽपि गरीयसः प्रियसुहृदो नचिकेतसः किं वा भविष्यति ?

यमपुत्रः—हा ! किं मयानुष्ठितम्। यमलोकं परितः क्रूरेषु यमकिङ्करेषु परिक्रामत्सु कथं जीवन् नचिकेताः प्रविशेत्। ( स्वगतम् विचार्य ) एवं करिष्यामि, नचिकेतसं संदिशामि—'मम पिता वैवस्वतो यमो राजा यदा विशेषकार्यार्थं बहिर्गतः स्यात्तदा तत्र गत्वा उपोषितस्तिष्ठ। तदा दयालुः स त्वां दययेत' इति। सर्वथा पूज्यस्य गुरोस्तपो नचिकेतसं रक्षेत्।

( सर्वे त्वरया गच्छन्ति )

॥ इति प्रथमः प्रवेशकः ॥

# दर्शन-परिषदः फलश्रुतिः

— औदवाहिः —

वाराणसेय-संस्कृत-विश्वविद्यालये दर्शनपरिषदो तृतीयमधिवेशनं विगतदिसम्बरमासीयैकादशदिनाङ्कतः चतुर्दशदिनाङ्कं यावत् सम्पन्नम्। परिषद् अध्यक्षपदमस्य विश्वविद्यालयस्य भूतपूर्वोपकुलपतिभिः सुप्रसिद्ध-भाषाविद्भिः संस्कृत-साहित्यस्य उद्भट-विद्वद्भिः प्राध्यापकैः श्री के० अ० सुब्रह्मण्य अय्यर-महोदयैरलङ्कृतमासीत्। आदिमे चरमे च दिने परिषदः साधारणमधिवेशनं मध्ये च दिनद्वये षट् शाखा-सम्मेलनानि सम्पन्नानि। प्रथमदिने मध्याह्ने त्रिवादनतः हिन्दू-विश्वविद्यालयीय-संस्कृतमहाविद्यालयस्य भूतपूर्वाध्यक्षाणां श्रीकालीप्रसादमिश्राणामध्यक्षत्वे व्याकरण-दर्शन-परिषदः, द्वितीयदिने प्रातः ९ वादन-समये पण्ढरपुराभिजनानां माध्वसम्प्रदायाचार्याणां श्रीनरसिंहाचार्यवरखेडकरमहोदयानामध्यक्षत्वे वैष्णव-दर्शन-परिषदः, मध्याह्ने ३ वादनतः हिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयस्य प्राध्यापकानां श्रीरामचन्द्र-शास्त्रिणामध्यक्षत्वे मीमांसादर्शन-परिषदः, तृतीयदिने प्रातः ९ वादनतो वाराणसेय-संस्कृतविश्वविद्यालयीयानुसन्धान-संस्थानसञ्चालकानां श्रीरामचन्द्र-दीक्षितानामध्यक्षत्वे अद्वैतदर्शन-परिषदः, मध्याह्ने ३ वादनतः प्रसिद्धभाषाशास्त्रज्ञानां वैदिकवाङ्मय-मर्मज्ञानां श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायानामध्यक्षत्वे पाश्चात्य-दर्शनपरिषदः, रात्रौ ७ वादनसमये पद्म-भूषणानां पण्डितराज - राजेश्वरशास्त्रिणामध्यक्षत्वे न्याय-दर्शनपरिषदश्च अधिवेशनानि सम्पन्नानि। एतेष्वधिवेशनेषु सभापतीनां पाण्डित्यगर्भाणि भाषणाणि सम्पन्नानि। अनेकेषां विदुषां गवेषणापूर्णाः शास्त्रीयाश्च निबन्धाः वाचिताः। अन्तिमे दिने 'अखण्ड-भारतीय-संस्कृतेः दार्शनिक आधारः' इति विषयमनुसृत्य विचारगोष्ठी समभवत्, यस्यां हि डाक्टर भीखनलाल - आत्रेयाः, सुरेन्द्रनाथशास्त्रिणः, डाक्टर वासुदेवशरण - अग्रवालाः, मैसूर-विश्वविद्यालयीय-दर्शनविभागाध्यक्षाः भूतपूर्वोपकुलपतयश्च एन० ए० निकम-महोदयाः, डाक्टर देवराज-महाभागाः, मुरलीधरमिश्र शास्त्रिणः, महर्षि-देवरातमहाभागाः, पण्डितराज-राजेश्वरशास्त्रिणश्च सम्मिलिता आसन्।

**देश-विदेशागताः प्रतिनिधयः**

अधिवेशनेऽस्मिन् लङ्का-मद्रास-हैदराबाद-दिल्ली-हरिद्वार-लखनऊ-सागर-राँची-पटना - प्रभृतिस्थानेभ्यः प्रायः ४५ प्रतिनिधयः, स्थानीय-विद्वांसः, सम्मानिता नागरिकाश्छात्राश्च भूयस्या संख्यया समुपस्थिता आसन्। विभिन्नविषयकाः प्रायः ७० निबन्धाः समधिगताः। तेषु प्रायः ४० निबन्धानां वाचनं निबन्धकैरेवात्र कृतम्।

सर्वप्रथमं समागतानामतिथीनां प्रतिनिधीनाञ्च स्वागतमाचरद्भिः स्वागतसमितिप्रमुखैः वाराणसेय-संस्कृत-विश्वविद्यालयस्य उपकुलपतिभिः श्रीसुरतिनारायणमणित्रिपाठिमहोदयैः परमपूतायां भारतावनौ चीन-साम्राज्यवादस्य विश्वासघातकारिण आक्रमणस्य चर्चां कुर्वद्भिरुक्तम्—"आक्रमणेनानेन न केवलं भारतभूमिर्भारतीया संस्कृतिर्वा, अपि तु सर्वोऽपि मानव-

संस्कृतिः सभ्यता च सङ्कटे पतिता वरीवर्ति। इतः पूर्वं राष्ट्रेऽस्मिन् एतादृशानि सङ्कटानि नैकवारं समागतानि, महापुरुषैश्च तेषां धैर्येण कौशलेन प्रतिरोधः कृतः। महाभारतयुद्ध एवात्र गीतासदृशस्य समन्वय-प्रधानस्य दार्शनिकग्रन्थस्य रचना समभवत्। समवेतेभ्यो विद्वद्भ्योऽपि वयमाशास्महे यत्ते पूर्वपरम्परानुसारमद्यतनीयेऽपि सङ्कटे राष्ट्रस्य पथ-प्रदर्शनं करिष्यन्ती"ति।

### इतिहासः प्रगतिश्च

दर्शन-परिषदो मन्त्रिणा श्रीजगन्नाथापाध्याय-महोदयेन विगतवर्षीय-कार्यविवरणमुपस्थापयता सूचितं यत् 'विगते' १९५५ मिते ईशवीये वत्सरे भारतप्रसिद्ध-दार्शनिक-विचारकैः डाक्टर सम्पूर्णानन्दमहोदयैरस्याः परिषदः स्थापनं कृतम्। तदा अस्या उद्देश्यत्रयं घोषितमभूत्-१. सामाजिकजीवनोपयोगिनां दार्शनिक-तत्त्वानामाकलनं समुन्नयनञ्च। २. एकस्मिन् दर्शने पूर्णतामासादयितुं विभिन्नानां दर्शनानां परिचयः। ३. आधुनिकप्राच्य-प्रतीच्यदर्शनानां परिज्ञानञ्च। एतेषां संसिद्ध्यै प्रारम्भे कार्यक्रमद्वयं प्रारब्धम्—१. अधिवेशनानामायोजनम्, निबन्धपाठः, विद्वद्गोष्ठीनां संयोजनञ्च। २. प्राप्तसामग्र्याः प्रकाशनम्। स्थाप-नोत्सवस्य प्रथमाधिवेशने प्राप्तसामग्र्याः प्रकाशनं विश्वविद्यालयीयानुसन्धानपत्रिकायाः 'सारस्वती-सुषमा'याः अङ्कद्वये सम्पन्नम्। द्वितीयाधिवेशने प्राप्त-सामग्र्याश्चापि प्रकाशनं यथासमये भविता।

### चीनदेशीयाक्रमणे विचारः

विभिन्नपरिषदामधिवेशनेषु शास्त्रीयविषयातिरि-क्तेषु सामयिकविषयेष्वपि विचारः समभवत्। 'चीन-देशीयाक्रमणेन भारतराष्ट्रस्य अहिंसाप्रधान-शान्ति-वादिनीत्यां परिवर्तनमावश्यकं न वा, यथासम्भवैः रुपायैः चीनाक्रमणस्य प्रतिरोधनेन किं भारतं बहुघोषितां स्वकीयां पर राष्ट्रनीतिं परित्यजति ?' एवमादिविषया अपि चर्चिता अभवन्। 'वैष्णवदर्शने लोकसेवाया महत्त्वम्, विश्ववाङ्मये भगवद्गीतायाः पदम्' इत्या-दयो विषया अपि सर्वेषां हृदयावर्जका आसन्।

### पाश्चात्य-दर्शन-परिषद्

पाश्चात्यदर्शनपरिषद् सम्मेलनस्यास्य विशिष्टमा-योजनमासीत्। दर्शनपरिषदः सभापतयः श्रीअय्यर-महोदया अनया सविशेषं प्रभाविता अभवन्। तैरुक्तम्—"भारतीय-संस्कृतेः संस्कृतभाषायाश्च वाङ्मयं दर्शनप्रधानमस्ति। अत्रत्यं साहित्यं व्याक-रणञ्चापि दर्शनेन प्रभावितम्। विश्वविद्यालयेना-नेन स्वकीय आदर्शः श्रुतं मे गोपाय इति विहितो-ऽस्ति। शास्त्रापरपर्यायस्य श्रुतस्य रक्षणस्य प्रकारद्वयम्—१. एकः प्रकारो पूर्वसञ्चितज्ञानस्य आत्मसात्करणम्, यच्चातीतमभिव्याप्य वर्तते। राजकीय-संस्कृत-महा-विद्यालयद्वारा वर्तमान-संस्कृतविश्वविद्यालयद्वारा च गतशताब्दिद्वयतः कार्यमिदं सम्पाद्यते। २. श्रुत-रक्षणस्यापरः प्रकारो नाम पूर्वसञ्चितज्ञानेन सह नवीनज्ञानस्य समन्वयं कृत्वा मानवीय-ज्ञानराशेः वर्धापनम्, यच्च भविष्योन्मुखमस्ति। विश्वस्य विविधेषु क्षेत्रेषु एकविधस्यैव ज्ञानस्य विकासः सपदि सम्पन्नः। तेषां तुलनात्मकमध्ययनमावश्यकम्। गत-शताब्द्यां पाणिनीयव्याकरणस्य तदतिरिक्तव्याकरणैः सह तुलनात्मकमध्ययनं विधाय भाषाविज्ञान-नामक-मेकं नवं शास्त्रं समुद्भूतम्। दर्शनक्षेत्रे तदति-रिक्तेषु च विविधक्षेत्रेष्वपि एवमेव तुलनात्मकमध्य-यनमत्यावश्यकम्। विश्वविद्यालयेऽस्मिन् व्याकरण-भाषाविज्ञानयोः, 'मेटाफिजिक्स' - वेदान्तदर्शनयोः,

फिजिक्स-केमेस्ट्री-वैशेषिकदर्शनयोः, लाजिक-नव्य-न्याययोः, प्राचीनज्यौतिषाधुनिकखगोलशास्त्रयोः, भारतीयगणिताधुनिकगणितयोः, पुराणेतिहासाधुनिके-तिहासयोः, आयुर्वेदाधुनिकचिकित्साशास्त्रयोश्च अध्ययनमावश्यकम्। इतः पूर्वं जागतिकासु विविध-भाषासु निबद्धा ये पूर्वोक्तविषयविवेचनसमलङ्कृताः श्रेष्ठतरा ग्रन्थाः सन्ति, तेषां संस्कृतभाषायामनुवादो भाव्यः। कठिनतममिदं कार्यम्, तथापि संस्कृत-विश्वविद्यालयेनेदं सम्पाद्य स्वकीयो विशेषः प्रकट-नीयः" इति।

नालन्दास्थित-पालि-शोधसंस्थानस्य सञ्चालकाः डाक्टर सातकडि मुखोपाध्यायमहोदयाः अस्याः परिषद अध्यक्षा मनोनीता आसन्। परमस्वस्थतया स्वयं ते न समुपस्थिताः। तथापि तैः स्वीयं लिखितं भाषणं प्रहितमासीत्। भाषणेऽस्मिन् पाश्चात्यदर्शनानां समासत इतिवृत्तस्य विवेचनं कुर्वद्भिस्तैः पाश्चात्य-दर्शनानां भारतीयदर्शनैः सह नैकविधं साम्यं चर्चितम्, संस्कृतविद्वांसश्च पाश्चात्यदर्शनाध्ययनार्थ-मामन्त्रिताः। (भाषणमिदमस्मिन्नेवाङ्के अन्यत्र मुद्रित-मस्ति। —सम्पादकः) अस्य परिषद आध्यक्षं कुर्वद्भिः पाश्चात्यविदुषां तेषां कृतीनां सिद्धान्तानाञ्च विस्तृत-परिचयं कारयद्भिः श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयै-रपि उक्तम् यत् "पाश्चात्यविदुषां भारतीयदर्शनेषु महती श्रद्धा दरीदृश्यते। नैके पाश्चात्यविद्वांसस्तेषा-मध्ययने लग्नाः सन्ति। अतोऽस्माभिरपि तेषां ज्ञानं परीक्षितुमत्र प्रवर्तनीयमि"ति।

अवसरेऽस्मिन् मनीषिप्रवराणां डाक्टर सम्पूर्णा-नन्दमहोदयानां प्राप्तसन्देशस्य कियानंश उद्धरणीयो-ऽस्ति। तैर्लिखितं यत् "न प्राच्यदर्शनं नाम किमपि वस्तु, न वा प्रतीच्यदर्शनं नाम। नहि भारते तदति-रिक्तेषु पूर्वदेशेषु च जनिभूतां सर्वेषां दार्शनिकानामेकं मतम्, न वा पाश्चात्यदेशेषु जनिभूतां सर्वेषां दार्श-निकानाम्। ईश्वरवादिनः, अनीश्वरवादिनः, जड-वादिनः, अद्वैतवादिनः, विशिष्टाद्वैतवादिनः द्वैत-वादिनः, शून्यवादिनः, एवमादयो विविधा विचारका उभयत्र सम्भूताः। यदि नाम ईश्वरः, जीवः, सृष्टि-प्रलयौ, कालः, मोक्षश्चैवमादीन् विषयानादाय समीक्षणं क्रियेत चेदधिकं समुपयोगी भवेदि"ति।

**संस्कृतेऽनुवादस्य सूचना**

एतादृशं समीक्षाप्रधानमध्ययनं कर्तुमपरेषां सिद्धान्तानां परिज्ञानं नितान्तमावश्यकम्। तदर्थं प्राध्यापकैः अय्यरमहोदयैस्तेषां ग्रन्थानां संस्कृतानु-वादस्य सूचना प्रदत्ता। विश्वविद्यालयोपकुलपतिभिश्च स्वीये धन्यवादभाषणे सूचनेयं सबहुमानं स्वीकृता।

श्रीअय्यरमहोदयैः कार्यमिदं दुःसाध्यमुक्तम्, नूनं तत्तथैव वर्तते। पाश्चात्यदर्शनग्रन्थाः यूरोपद्वीपस्य नैकासु प्राचीनाधुनिकभाषासु निबद्धाः सन्ति। स्वयं तानवगत्य दार्शनिक-संस्कृतभाषायां तेषां ग्रथनाय अङ्गुलिगण्या एव प्रभवन्ति विद्वांसः। नेदं संकटं संस्कृतविदुषामेव पुरस्ताद्, राष्ट्रभाषाहिन्द्याम् अन्यासु च भार-तीयभाषास्वपि एतेषां ग्रन्थानामनुवादकार्य-मकृतप्रायमेव। अद्य पाश्चात्यदेशेषु यादृशी नव्यज्ञानस्य जिज्ञासा, तदवगमाय समुत्कटा अभिलाषा, तदर्थञ्च वित्तैषणा-लोकैषणयोः परित्यागस्य भावना दरीदृश्यते, न तादृशी प्राच्यदेशेषु। विगतशताब्दद्वयोः यूरोपीयविद्वद्भिः जागतिकज्ञानकलाक्षेत्रयोरद्भुतं प्रयतितम्। भारतीयभाषासु विशेषतो राष्ट्रभाषायामेतेषा-मनुवाद अत्यावश्यकः। अनेनापि संस्कृत-

विदुषामावश्यकताया आंशिकी प्रपूर्तिर्भवितुं शक्या। तेन च ते नव्यचिन्तने स्वीयं योगं दातुं प्रभविष्यन्ति। अद्य द्वित्रिग्रन्थानेकत्रीकृत्य मौलिकाभासमयानां ग्रन्थानां विरचनमुखेन लोकैषणा-वित्तैषणयोः प्रपूर्तेः प्रवृत्तिः वर्धमाना दृश्यते। सेयं प्रवृत्तिस्तादृशानां व्यवसायिनामिव, ये किल आदर्शमन्यद् दर्शयन्ति, विदेशे च वस्तूनि अन्यान्येव क्षुद्रार्हाणि प्रेषयन्ति। यदि यत्नोऽयं समुत्कृष्ट-ग्रन्थानुवादकार्ये योजितो भवेत्तदा तेषामस्मितापूर्तौ कदाचिद् बाधः सम्भाव्येत नाम, तथापि देशस्य भाविसन्ततेर्नूनं महत् हितं भवेत्।

अध्ययनक्षेत्रे व्यापकदृष्टेरप्यवलम्बनमावश्यकम्। अन्ताराष्ट्रिय-प्राच्यविद्या-सम्मेलने सम्मिलिताः प्राच्यदेशीया विद्वांसो यदा स्व-स्वदेशीयविद्याविषयकान् निबन्धान् श्रावयन्ति, तदा यूरोपामेरिकाभिजनानां विदुषां दृष्टिर्व्यापका विलोक्यते। सत्यं हि एकमविभाज्यञ्च। यत्र तद्दर्शनं भवेत्, तत्र नूनं नतमस्तकैर्भाव्यम्।

संस्कृतेराधारो न धर्मः, दर्शनम्

अधिवेशनस्यास्य प्राणप्रदा अन्तिमदिवसीया विद्वद्गोष्ठी अभवत्। तत्र विद्वद्भिर्ये विचाराः प्रकटितास्तेषां सारांश इत्थम्—भारतीयसंस्कृतेराधारो न धर्मः, अपि तु दर्शनमेव। धर्मो हि विश्वास-श्रद्धयोराधृतः, यत्र विचारस्य तर्कस्य च कृते पदं न भवति। एतद्विपरीतं दर्शनं पुनः सत्यान्वेषकं विचारद्वारा च सत्यसीमानमधिगन्तुं समीहते। विचारस्य मुख्य आधारो नाम बुद्धिः। दार्शनिको ज्ञान-विज्ञानमुखेन तत्त्वमनुभवति, तदाधारेण सत्यं साक्षात्करोति, ज्ञाने विज्ञाने च समन्वयमादधाति। स मानवीया एषणाः आकाङ्क्षाश्च अधीते, तयोश्च हेयत्तोपादेयते निश्चिनुते। दार्शनिक एव अनेकेषु एकत्वं दर्शं दर्शं परस्परं सामञ्जस्यमादधाति। एकं सद्विप्रा बहुधा वदन्ति इति श्रुत्यनुसारं एकमेव विविधै रूपैः पश्यति। दर्शने सर्वाधिका सहिष्णुता जागर्ति। सर्वे ह्येते गुणाः भारतीयदर्शने विलसन्ति। तदाधारेणैव विकसिता भारतीया संस्कृतिः अद्यापि अनुप्राणीति, यदा च तत्समसामयिका नैकाः संस्कृतयः केवलमितिवृत्तस्य वस्तुभूताः समभवन्। अमेरिकाभिजनेन प्राध्यापकेन जे० बी० प्रेट-महोदयेन 'ह्वाई रिलिजिन्स डाई'-नामके ग्रन्थे वैदिक-संस्कृतिनाम्ना अस्या एव भारतीयसंस्कृतेः पूर्वोक्तानां गुणानां विस्तृतं वर्णनं कृतमस्ति।

भारतीये दार्शनिकक्षेत्रे नैका दृष्टय उन्मिषिताः, गुरु-शिष्यपरम्परामुखेन च ता विकासं गताः। 'प्रतिप्रतिभया प्रतिपादितेषु विचारेषु कियानंशो नूनं सत्यान्तर्गतो भवति'—तथ्यममुं भारतीयसंस्कृतिश्चिरात् हृदयङ्गमं कृतवती। अत्र एवात्र महापुरुषविशेषस्य ग्रन्थविशेष एकान्ततः प्रमाणत्वेन नादृतः। जैनदर्शने अनेकान्तवादस्य स्थापनमभवत्, यो हि सर्वा दृष्टीः अंशतस्तात्त्विकीः सम्मनुते। गन्तव्यस्थलस्यैक्येऽपि तत्प्राप्तिरनेके पन्थानः स्वीकृताः, रुचीनां वैचित्र्यात्। समन्वयात्मिका उदारा सहिष्णुतापूर्णा चेयं दृष्टिः भारतीयदर्शनानां वैशिष्ट्यम्। इदमेव दर्शनम् अखण्डभारतीय-संस्कृतेराधारः। दार्शनिकपृष्ठभूमौ विकसितस्य भारतीय-सांस्कृतिकजागरणस्य विस्तृतमितिवृत्तं नूनं संग्रथनीयतामर्हति। इतिवृत्तमिदं राजनैतिकार्थिकभौगोलिकेतिवृत्ततो महार्घं भवेत्। एभिरेव सांस्कृतिकविशेषैः भारतीयो धर्मः

[ वाराणसेय-संस्कृत-विश्वविद्यालयीय-कविसम्मेलने उच्छालिताः ]

## समस्या-तरङ्गाः

न चण्डकरमण्डलं तुहिनपिण्डशीतं भवे-
न्न वा व्रजति मन्दतां जलधिमध्यगो वाडवः ।
न भारतभटः क्षणं त्यजति शौर्यमत्युत्कटं
न याति महिमालयो भुवि हिमालयो निम्नताम् ॥
मृगाधिपतिपृष्ठतः परिलुठन्तु कीटाः शतं
न तैः किमपि हीयते समरशौर्यवारांनिधेः ।
कदर्यजनसेनया गुणविहीनया लङ्घितो
न याति महिमालयो भुवि हिमालयो निम्नताम् ॥
भव्या सुरासुरशिरोनमिताङ्घ्रिपद्मा
पद्माश्रिता जयति भारतभूतधात्री ।
धात्रीव या त्रिजगतामिह तद्विरुद्धान्
दिग्दन्तिदन्तमुसलानपि चूर्णयामः ॥
व्यासाक्षपादभरतादिगिरां प्रवाहै
रिक्तान् जनानपि धिया परिपूर्णयामः ।
भीमार्जुनोदितदिशा समरप्रतीपान्
दिग्दन्तिदन्तमुसलानपि चूर्णयामः ॥
तावन्नूतनवञ्चनाविरचने चातुर्यमुच्चावचं
माधुर्यं सितशर्करासहचरं वाचामिदं जीवति ।
सभ्यम्मन्य ! निगूढकल्मषमषीकल्माषिताभ्यन्तर !
त्वद्दुष्कर्मकलाविलासलग्नो यावत् समुज्जृम्भते ॥
तावच्चीन ! विवेकहीन ! विचरेः शीताचलाभ्यन्तरे
तावच्चापलमाचरेः करधृतैर्द्विःत्रैर्निजास्त्रैरपि ।
दिग्दन्तावलदानसिन्धुलहरीसंशोषणोऽयं क्षणाद्
गर्जन् भारतकेसरी हिमगिरौ यावत् समुज्जृम्भते ॥
संख्ये ख्यापयितुं बलं विजयते संख्यैव नः श्रेयसी-
त्युन्मत्ताश्चिपिटेक्षणा हतधियस्तावत्सुखं गर्जथ ।
युष्मत्सैनिकरक्तबीजदनुजश्रेणीबुभुक्षातुरा
जिह्वा भारतचण्डिकास्यकुहराद् यावत् समुज्जृम्भते ॥
येषामुद्भटवीर्यचारुचरितैर्दिग्भित्तयश्चित्रिताः
मग्ना भग्नबलाश्च खड्गसलिले पारेशतं शत्रवः ।
तेषामाक्रमणे स्पृहा समुचिता कीटाशयानां कथं
तावत्सा रिपुघस्मरो न नृहरिर्यावत् समुज्जृम्भते ॥

**— श्रीबटुकनाथशास्त्री खिस्ते**

[ प्राध्यापकः, वा० सं० वि० वि० ]

## समस्या-पूर्तयः

१.

धैर्यं धरे धारय मातृभूमे
बुद्धा वयं ते तनया इदानीम् ।
तीव्रैः प्रहारैर्भुजमस्मदीयैः,
चीनो विलीनो भविता धरायाः ॥

२.

सुखेन सुप्तानिह भारतीयान्
सिंहान् समुत्थाप्य सुखाभिलाषी ।
अवेहि नूनं हतकः क्षणेन
चीनो विलीनो भविता धरायाः ॥

३.

भो भो नगेन्द्र विजहासि कथं न निद्रा,
प्रेङ्खन्ति ते परिसरेऽरिगजाः प्रमत्ताः ।
वीराग्रणी त्वमसि किं कुरुषे विलम्बं
मत्तेभकुम्भदलनाय मृगाधिराजः ॥

४.

मा गा विषादमवलोक्य नगाधिराजः,
प्रान्तं निजं कमपि वैरिजनाधिरूढम् ।
एकोऽपि भारतभुवोऽस्ति सुतोऽरिवर्ग-
मत्तेभकुम्भदलनाय मृगाधिराजः ॥

५.

चीनोऽथवा परिभवेदितरोऽरि कश्चि-
न्नो भारतं तमचिरेण विपातयामः ।
त्रातुं वयं भुवममुं मृगराजरूपाः
दिग्दन्तिदन्तमुसलानपि चूर्णयामः ॥

६.

नाशं प्रयास्यति किलारिपतङ्गवृन्द-
मस्माकमुन्मिषितकोपकृशानुदीपे ।
युद्धोद्यताः समरसीम्नि वयं किमन्यद्
दिग्दन्तिदन्तमुसलानपि चूर्णयामः ॥

**—श्रीनारायणप्रसाद वलूनी**

[ एम० ए०, साहित्याचार्यः ]

[ १२० पृष्ठस्य शेषांशः ]

आधुनिकभौतिकविज्ञानाभिमतैर्न विशेषतः प्रभाविताः, येषां पुरत अन्ये धर्माः स्वात्मानं त्रातुं नापारयन्। अत्रत्यं दर्शनं न केवलमीश्वराधृतम्; न च तेषां मोक्षपरिभाषापि—या हि जागतिकसुख-दुःखेभ्यः परं तटस्थस्वात्मसुखानुभवमात्ररूपा वर्तते—साम्प्रतिकेन विज्ञानेन प्रभाविता।

पद्मभूषण-पण्डितराज-श्रीराजेश्वरशास्त्रिद्राविडमहाभागैर्न्यायदर्शनपरिषद् आध्यक्ष्यं कुर्वद्भिः स्वीया विशिष्टतमा दृष्टिः समुपस्थापिता, या च प्राचीना सत्यपि समयोपयोगिनी आसीत्। नव्यन्यायशास्त्रस्य प्रसिद्धतमा एते विद्वद्वरेण्याः स्वतन्त्रताप्राप्तिसमकालमेव आन्वीक्षिक्यास्तया च परिपुष्टस्य भारतीयराजनीतिशास्त्रस्य अनुशीलने संलग्नाः। तदा एतेषामिदं कार्यं विस्मयावहमनवसरविजृम्भितमिव प्रतिभासते स्म। किन्त्वद्य तैर्भारतीयराजनीतेर्यादृशी व्याख्या विदुषां पुरः समुपस्थापिता, सा तेषां दीर्घतमस्य तलस्पर्शिन अध्ययनस्यैव नूनं फलम्। तेषां लक्षणैः प्रतिफलिता धर्मनिरपेक्षा न्यायानुमोदिता, किन्तु सदाचारनियमैरनुप्राणिता सेयं भारतीया राजनीतिर्न केवलं भारतस्य, अपितु विश्वशासनस्य विधानरूपेण मान्या भवितुं शक्नोति। तदर्थं साम्यवाद-समाजवादातिरिक्तं भारतीयं नव्यदर्शनमेव अवश्यसंग्रथनीयतां भजते।

इत्थं समासतो विचार्यमाणायां दर्शनपरिषदः फलश्रुतौ स्पष्टमिदं वक्तुं शक्यं यदनया परिषदा भारतीयविचारकाणां पुरतो विचारार्थं बहवो विचाराः प्रस्ताविताः, भूमिकारूपेण तेषां मननाय तर्कशुद्धाः पन्थानश्च सूचिताः, यत्र गच्छतो भारतीयमनीषिणस्तत्त्वमासाद्य तेन च संयोज्य निखिलं भारतं सत्यं शिवं सुन्दरं विधास्यन्तीति।

## संस्कृत-विश्वविद्यालयानां कर्तव्यम्

[ ११२ पृष्ठस्य शेषांशः ]

मनुष्यसमाजे नास्ति कोऽपि वर्गः योऽनुशासहीनः सन् न विनश्येत्, समाजं च न विनाशयेत्। सत्यवदन-धर्माचरण-स्वाध्याय-प्रवचन- दैव - पित्र्यकर्मानुष्ठान - पित्राचार्यातिथिपूजनादयो बहवोऽनुशासनप्रकाराः श्रुतावेव स्पष्टमुदीरिताः। ते चानुक्तानामस्माभिः स्वयमूह्यानां बहूनामन्यप्रकाराणामुपलक्षणभूताः। संक्षेपत इदं वक्तुं शक्यते यत् स्वाधिकस्य कस्यचित् तत्त्वस्य संरक्षणार्थं स्वार्थत्याग एवानुशासनमिति। विश्वविद्यालयाधिकृतेभ्यः सर्वेभ्योऽप्यधिको विश्वविद्यालयो नाम। अत एव यदिदं स्वार्थसिद्ध्यर्थं दलबन्धनं नाम विषं केषुचिद् विश्वविद्यालयेषु समनुप्रविष्टम्, तेन तेषां हानिरेव भवितुं शक्नोति, न कदापि कल्याणमित्यत्र कः सन्देहो भवितुमर्हति? दलहितसंस्थाहितयोर्विरोधे सति दलहितमेव कुर्युर्दलिन इति सर्वानुभवसिद्धमेतत्। प्रजातन्त्रे सिद्धान्तं कञ्चिदवलम्ब्य दलबन्धनमावश्यकं स्याद्राजनीतिक्षेत्रे। तत्रापि दलबन्धरहित-प्रजातन्त्रवादिनो बहवः सन्ति। विद्यासंस्थासु तु दलबन्धो नितरां हानिकर इत्यत्र नास्ति विप्रतिपत्तिः। दलबन्धरसिकाः स्वयं तस्य हेयत्वमभ्युपगच्छन्ति, स्वार्थप्रेरितास्तु तं न त्यजन्ति। विद्यासंस्थासु क्रियमाणं दलबन्धनं न विद्यासम्बन्धिसिद्धान्ताश्रितम्, किन्तु जाति-वर्गसंप्रदायाद्युपाध्यधीनमिति। तद्धि विद्याविकासप्रतिकूलं भवति। अतश्च तद् भृशमनुशासनविरोधि प्रसिद्ध्यति। तादृशमनुशासनविरोधि विद्याभिवृद्धिविरोधि च दलबन्धनं यथा न स्यात्तथा व्यवहरन्तु सर्वेऽपि विश्वविद्यालयाधिकृता विद्यार्थिनश्चेति।

# पाश्चात्त्य-दर्शन-दिग्दर्शनम्

— श्री डाक्टर सातकडि मुखोपाध्यायाः —

यत् किमपि वदन्तु निरङ्कुशा विहस्यमाना भारतीयदर्शनेष्वकृतपरिश्रमाः, दृढतरस्त्वस्माकं सम्प्रत्ययो यत्पाश्चात्त्यानां मतानि संस्कृतभाषाभिज्ञानां तत्परिचितभाषयोपपादितानि भवेयुश्चेत्, नूनं तेषामूहापोहसंविधाने तेऽलं भविष्यन्तीति। स्वर्गता अस्मद्गुरुवरा महामहोपाध्यायाः डाक्टर श्रीयोगेन्द्रनाथपूजनीयश्रीचरणाः पाश्चात्त्य-दार्शनिकमतानि तदुपष्टम्भकयुक्तिपरिबृंहितानि समाकर्ण्य क्षणं तूष्णीभूय तेषां हेयतोपादेयते क्रियासमभिहारेण प्रत्यपीपदन्। नहि विदुषां किञ्चिदगोचरो नाम। परन्तु पाश्चात्त्यानां मनीषिणां मतान्युत्तानदृष्टिप्रसूतानीति मतिरपि न श्रद्धातुमर्हा। विशेषतस्तु जडविज्ञानगवेषणयाविष्कृतानां तत्त्वानां समाकलनेन तेषां दार्शनिकी चिन्ता विषयबाहुल्येन मांसलीकृता न खलु केनचिदप्युपेक्षया खलीकर्तव्या, यथा खलु तैरपि प्राचीनानां सिद्धान्ताः। विषयाणां बाहुल्यात् तत इतो विप्रकीर्णानां केषाञ्चन मूलभूतानां प्रमेयाणां विचारः प्रस्तोष्यते। विविदिषूणां विविदिषोत्तम्भनार्थं एष संरम्भो मदीयो न बुद्धिव्युत्पत्तिमान्द्यकृतप्रतिपादनाकौशलेनावज्ञातव्यो विशेषव्युत्पित्सुभिः।

योनकदेशे दार्शनिकी चिन्ता इदम्प्रथमतया पाश्चात्त्यानां मध्ये प्रादुरभूत्। बहवः खलु मनीषिणो जगद्रहस्योद्भेदने व्याप्रियन्त। तेषु प्लेटोमहोदयेन स्वगुरु-साक्रेटिस्-नामकदार्शनिकानां मतानि संवादापदेशेन निबद्धानि। आङ्गलभाषायां तेषां छाया बहुशः सम्पादिताः, तेषां समीक्षा परीक्षा च आभीक्ष्ण्येन बहुभिराधुनिकैर्विद्वद्भिर्विहिता तन्मतव्युत्पत्तौ साहाय्यकमाचरति। प्लेटोमहाभागो जन्मान्तरवादमात्मनो नित्यतां च महता संरम्भेण प्रत्यपीपदत्। बहवः खलु विद्वांसोऽस्मिन् वादे भारतीयसिद्धान्तस्य प्रतिबिम्बनमुत्प्रेक्षन्ते। आत्मनोऽमरत्वप्रतिपादिका युक्तिरन्यादृशी योपन्यस्ता, सा प्राच्य-दार्शनिकानां विचारपदवीमधिरोढुमर्हति। तदनन्तरमरिष्टतल-महोदयेनापरैव विचारसरणिराविष्कृता। तदुपज्ञं तर्कशास्त्रमद्यापि विद्यार्थिनामध्येतव्यग्रन्थेषु प्राग्भारमाबिभर्ति। सोऽप्यात्मनोऽमरत्वमभ्युपैति। अनेके मनीषिणस्तेषां मतानामुपपादने चोपबृंहणे च प्रायतिषत। भूयांसो ग्रन्था विलोपं गताः। तथाप्येतेषां सिद्धान्तान् परम्परागतान् ख्रिष्टधर्मावलम्बिनः स्वधर्मानुकूल्येन व्याचचक्षिरे। अनन्तरं फरासिदेशे डेकार्त-नामा महादार्शनिकः प्रादुरासीत्। तस्य खलु मनीषिणो दार्शनिकी चिन्ता स्वातन्त्र्येण तत्त्वनिर्णयार्थं प्रवृत्ताभूत्। सर्वं खलु मतं संशयपदवीमानीय परीक्षितम्। यत्किमपि संशयविषयीभवति, विपक्षबाधकप्रमाणेन च निश्चेतुमशक्यं तदसत्यतया परिहातव्यम्। परन्तु सर्वं न सांशयिकं कर्तुं शक्यम्, अन्ततोगत्वा संशयस्य प्रामाणिकत्वोपगमात्। निश्चयं विना संशयः स्वाङ्गं धारयितुं नालं भवति। एवं संशयं पुरस्कृत्य दार्शनिकतत्त्वनिर्णयाय नवीनमार्गः प्राकाशि। अस्य मतस्य संवादो न्यायकुसुमाञ्जलावुपलभ्यते। किञ्च, संशयो विचारस्य प्राक्तनमङ्गमिति मीमांसकानां सिद्धान्तः—

> विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
> निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥

इति वाक्येनावदातीकृतः। यदसन्दिग्धं न तत्प्रेक्षावतां प्रतिपित्सागोचर इति भामती-निबन्धे प्रथममुपन्यस्तम्।

स्पिनोजा-नामकदार्शनिकस्य मतं भारतीयदर्शनेन बहुधा साम्यमाविष्करोति। लाइब्नीजनामकः शर्मण्य-देशवास्तव्यो महाविद्वान् गणितशास्त्रे दर्शने च तुल्य-वत्प्रगल्भमानो बहुजीववादं बाह्यार्थानामसद्भावं च प्राचकटत्। सांख्यदर्शनेन जैनदर्शनेन च साम्यं वैषम्यं च प्रदर्शयन्नयं दार्शनिकसिद्धान्तो विदुषामालोचन-मर्हति। इदं तु पाश्चात्त्यदार्शनिकानां लाघवाय गौरवाय वा समपद्यत यत्कस्यापि दार्शनिकस्य मतं शिष्यप्रशिष्यसम्प्रदायाविच्छेदेन परिपोषपराकाष्ठां नीतम्। प्रायेण स्वतन्त्रप्रज्ञाः पूर्वजानां मतखण्डने स्वबुद्धिवैभवमुपायुञ्जत। भारतवर्षे दार्शनिकप्रस्थानस्य गतिस्तु विलक्षणासीत्। सम्प्रदायाविच्छेदेन पूर्वा-चार्यमतं प्रतिवादिदूषणानि निरस्यद्भिराचार्यैर्दृढ-भूमिकायां संस्थापितम्। अनेन हेतुना न्यायादि-प्रस्थानानि परिपूर्णतां प्रापितान्यद्यापि विदुषां निवहैर्दीर्घकालनैरन्तर्यसत्कारैरासेव्यन्ते।

इङ्गलैण्डे बर्कले-नाम्ना दार्शनिकेन विज्ञानवादस्य प्रतिष्ठा समपादि। अनन्तरीया दार्शनिकास्तन्मत-खण्डने व्यापृता अभूवन्, न च तस्य सम्प्रदायः समजनि। यथा भारते वर्षे बौद्ध-विज्ञानवादिनां प्रस्थानं दृढीकृतं न तथा पाश्चात्त्ये। ह्यूस-नाम्ना दार्शनिकेन बौद्धविज्ञानवादस्य प्रतिबिम्बसदृशं मतं ससंरम्भं प्रतिपादितम्। तेन खलु कार्यकारणभाव-स्यायौक्तिकत्वं प्रत्यपादि, नित्यस्य स्थायिन आत्मनो-ऽस्तित्वमपाकृतम्, जगन्निर्मातुरीश्वरस्याप्रामाणिकत्वं चोदघोषि। अनुमानस्य प्रामाण्यं च व्याप्तिज्ञानस्या-संभवित्वमुपपाद्य निराकारि। बौद्धमतस्यावबोधने एतदीयं मतं हस्तालम्बं वितरति। सिद्धान्तानां संवादा मनुष्यबुद्धेः साजात्यं प्रमाणयन्ति, विसंवादाश्च पुरुषमतिवैश्वरूप्यमपि प्रदर्शयन्ति। आधुनिक-पाश्चात्त्यदार्शनिकमतस्य प्रजापतिरूपः कान्त-नामा शर्मण्यदार्शनिकः समेषां मनीषिणां पूजास्पदमिति न कोऽपि संशयः। यद्यपि तन्मतस्य दाढर्यसम्पादने प्रयासो विरलप्रायः पाश्चात्त्यदार्शनिकेषु दरीदृश्यते, तथापि तदीयचिन्ताया गाम्भीर्यमनपह्नवनीयमेव। यदि भारतीयपद्धतिमनुसृत्य तन्मतस्यावदातीकरणे प्रयत्न-परम्पराऽघटिष्यत तदास्य दार्शनिकस्य मतबोधने एतादृशं काठिन्यं नोपार्जनिष्यत। तदीया दुर्बोधा भाषा, विषमा प्रतिपादनशैली, दुरधिगमा उपपादन-पारिपाटी च तन्मतबोधे महान्तं प्रतिबन्धमाचरन्ति। यद्यपि तस्य व्याख्यातारः पञ्चषास्तन्मतव्युत्पादने प्रयासमङ्गीकुर्वाणा दृश्यन्ते, तथापि न तेषामेकवाक्यता दृष्टिगोचरीभवति।

कान्तमहोदयस्य मतं विज्ञानवादं विरुणद्धि, नाप्ययं सांशयिकानां मतमनुगृह्णाति। अथापि बाह्यं वस्तुजातं सद्रूपं मन्यमानोऽपि न प्रत्यक्षज्ञानगोचर-तामस्याभ्युपगच्छति। सामान्यं नित्यं च वस्तु, सम्बन्धश्च परस्परं प्रतीयमानोऽपि नैते ज्ञानस्य विषयाः, अपि तु विषयिणो ज्ञानस्य धर्मा एते। सर्वं बाह्यं वस्तुजातं देशाधिकरणं प्रतीयते। सर्वं चोत्पद्य-मानं कार्यं बहिरन्तश्च कालाश्रितत्वेनोपलब्धिगोचरो भवति। तथापि न देशकालौ ज्ञातृनिरपेक्षौ वस्तुसन्तौ संभवतः, तयोर्नित्यत्वात्, प्रतिस्वमेकव्यक्तित्वाच्च। अत्रास्य दार्शनिकस्य वैशेषिकमतात् प्रथीयान् भेदः। नित्यं विभु वस्तु न सांव्यावहारिकप्रत्ययस्य विषयो भवितुमर्हतीति दृढीयान् सम्प्रत्ययः। द्रव्यगुणादयः पदार्था ज्ञानस्य विषयावगाहने प्रकारीभूता विषयिणो धर्मा न विषयस्य। मतस्यास्य सौत्रान्तिकमतेन साम्यमुद्भटमिव प्रतिभाति। एतेऽपि बौद्धदार्शनिका द्रव्यादिपदार्थजातं कल्पनाप्रसूतमित्यातिष्ठन्ते।

क्षणभङ्गवादस्तु न कण्ठरवेण कुत्राप्यनेन प्रतिपादितः, तथापि नित्यपदार्थापह्नवसामर्थ्यात् शक्यावसायः। कार्यकारणभावोऽपि विकल्पमात्रप्रसूत इत्युच्यमानं धर्मकीर्तिमतेन साजात्यं प्रकटयति। निरङ्कुशया युक्त्येश्वरास्तित्वम्, पारलौकिकी जीवात्मनः स्थितिः, नित्यस्य जीवात्मनः सद्भावश्च न शक्योपपादनः। परन्तु शुभाशुभयोर्विवेकबुद्धिः सर्वाभिभाविन्यध्यात्मं स्फुरद्रूपा शुभाशुभफलदातारमन्तरेण न प्रतिपत्तुमित्यर्थापत्तिप्रमाणेन तानि साधयितुमयं प्रयतते। दुःखस्थानमेतद् यदस्य दार्शनिकस्य ग्रन्था न प्राचीनायां वाऽर्वाचीनायां वा भारतीयभाषायामनूदिताः। येऽपि पाश्चात्त्यदर्शनशास्त्राध्यापकवृत्तिमङ्गीकुर्वन्ति, तेऽपि समयाभावात् कार्यान्तरव्यासङ्गाद् वा तेषां ग्रन्थानां सुबोधतामापादयितुं न समीहन्ते।

प्रतीच्या दार्शनिकी चिन्ता वैज्ञानिकगवेषणाप्रकाशितानि तत्त्वान्यवलम्ब्य दृष्टान्तबाहुल्येन समृद्धिं प्रापिता। एतेषां दार्शनिकग्रन्थानामध्ययनाध्यापने यदि देववाण्यां प्रवर्तिते भवेताम्, आस्माकी चिन्ताऽपि तदा दृष्टान्तसम्पदा गरिमाणं बिभृयात्। न चैकदेशदर्शिताभिमानस्तत्त्वजिज्ञासुभिः परिपोषणीयः। यदि नाम पाश्चात्त्यदेशीया दार्शनिका भारतीयदर्शनस्य विचारप्रणालीं परिचिनुयुः, तदा तेषामपि चिन्ता समधिकबलाधानेन समेधिता भवेत्। अथएवे प्राच्यानां प्रतीच्यानां च परीक्षकाणां तदितराणां च मिथः सम्मेलनं सङ्घटतेतराम्। पुरा देशान्तरगमने महान् प्रतिबन्ध आसीत्, अधुना तु न सरित्समुद्रपर्वतादिकं प्रतिबन्धकायते। परस्परञ्च मानवानां भिन्नभिन्नभाषाभाषिणां भिन्नभिन्नाचारपरिपालकानामप्यन्तरिन्द्रियं नो तथा भिद्यते यथा बहिराकृतिः। सारस्वतसाधनञ्च सम्भूयसमुत्थान आनुकूल्यं विदधीत। न चात्रात्मोत्कर्षाभिमानेनापरापकर्षबुद्ध्या वा प्रत्यवस्थेयम्। मनुष्याणां वर्णाश्रमाचारादिव्यवस्थाभेदेन विलक्षणानामपि हार्दिकमैक्यं नाशक्यसम्पादनम्।

प्रमोदायैतद्भारतीयानां यत्तेषां वेदादिशास्त्राणामनुवादमुखेन प्रतीच्यविद्यामन्दिरेषु प्रचारणं कृतमासीत्। तेनैव चाभ्युपायेन प्रतीच्या विद्वांसो भारतीयान् सत्कारपूर्वकमसभाजयन्त। परन्तु न्यायादिशास्त्राणां प्रतीच्यभाषया प्रतिपादनं न पुष्कलतां बिभर्ति। अतो यथा वाणिज्ये परस्परद्रव्यविनिमयेन सर्वेषां समृद्धिः समपादि, तथा सारस्वतसम्पदां विनिमयः क्रियासमभिहारेण सम्पादनीयः।

यथा खलु भारतीयदर्शनप्रस्थानेषु भूतचैतन्यवादो लौकायतिकानाम्, जडचैतन्यभेदेन द्वैतवादः, सेश्वरदर्शनम्, निरीश्वरदर्शनम्, विशिष्टाद्वैतवादः, बौद्धप्रस्थानेषु क्षणिकविज्ञानवादः, क्षणभङ्गवादः, प्रत्यक्षबाह्यास्तित्ववादः, अनुमेयबाह्यास्तित्ववादः, एवमन्येऽपि दार्शनिकप्रवादा अहमहमिकया प्रादुर्बभुवुः, तथैव पाश्चात्त्यदार्शनिकानां प्रवादानां नानाप्रस्थानभेदाः प्रायेण भारतीयदर्शनप्रस्थानप्रतिरूपका दरीदृश्यन्ते। सर्वथा साम्यं यद्यपि न दृश्यते, तथाप्येतेषां मतभेदानां समुत्थानं तत्रत्यानामपि दार्शनिकचिन्तावैश्वरूप्यं तत्त्वजिज्ञासूनामेकतो विस्मयम्, अन्यतो विभ्रमं च जनयितुं प्रभवति। नाऽसौ मुनिर्यस्य मतं न भिन्नम् इत्याभाणकस्तत्रापि सुप्रयोजः।

पाश्चात्त्यदार्शनिकचिन्ताप्रवाहेऽयं खलु स्थवीयान् प्रतिविशेषो भारतीयदार्शनिकचिन्ताप्रवाहादुपलक्ष्यतेतराम्। मनोविज्ञानम्, (Psychology), नीतिविज्ञानम् (Ethics) तथा समाजतत्त्वविज्ञानं

(Sociology) पृथक्पृथक्प्रस्थानतया तत्राविर्भूतानि। मनोविज्ञाने वैज्ञानिकीं शैलीमवलम्ब्योच्चावचानि तत्त्वानि प्रादुष्कृतानि दृश्यन्ते। नीतिविज्ञाने च नैकविधानि मतानि समुत्थापितानि। किं तावत्कर्तव्यम्? किं वा कर्तव्यताप्रयोजकम्? को वा पुरुषार्थः कस्य वा आचारस्य सन्नीतिप्रभवत्वम्? कस्य वा तदितरत्वम्? किं वा पापम्? किं वा पुण्यम्? किं वा तयोस्तत्त्वे विनिगमकं प्रमाणम्? इत्यादयो विषयाः प्रतीच्यनीतिशास्त्रेषु विचार्यन्ते। एतेषु शास्त्रेष्वस्मदीयानां प्राचीनविद्यापरम्परापरिपालनपरायणानामिमे विचारभेदास्तथा सिद्धान्तभेदा यदि परिचायिता भवेयुः, तदास्माकं मनीषा चतुरस्रतां गमिष्यतीत्युत्प्रेक्षामहे।

प्रमाणशास्त्रे (Epistemology) अपि पाश्चात्यविदुषां नानाविधा विचाराः प्राच्यदर्शननिष्णातानां विदुषां नापरिशीलनीयाः। तत्रापि केवलं परिभाषाभेदेन स्वतःप्रामाण्यं परतःप्रामाण्यमित्यादिविषयजातमधिकृत्य मतभेदाः परिस्फुरद्रूपा आविरभूवन्। प्राच्यमतैः साकं तेषां साम्यं वैषम्यं च यद्यनुशीलितं स्यात् तदैतदुभयेषामपि बुद्धिसम्पदं परिपुष्णीयादित्यपि निवेदयन्न जिह्रेमि। पुनश्च पाश्चात्त्यानां राजधर्ममधिकृत्य राष्ट्राभ्युदयमुद्दिश्य जनानां च कल्याणं वार्तमानिकमायतिकं च कथङ्कारं सौष्ठवेन सम्पादनीयम्? कीदृशो वा धनिकश्रमिकाणां स्वार्थसमन्वयः शक्यसम्पादनः? इत्यादि विषयजातं महता संरम्भेण प्रतीच्यैर्विचारितम्। एतत्प्रमेयजातमिदानीन्तनीं भाविनीं च सामाजिकव्यवस्थां समाकलय्य समाजकल्याणं सम्पिपादयिषुभिः प्रेक्षणीयं संवृत्तम्।

अद्यत्वे रूस-चीनादिदेशेषु साम्यवादच्छद्मना लोकायतसिद्धान्ता युक्तिभेदैः सत्तर्कैः कुतर्कैश्च जनतायाः कल्याणसाधन एकमेवाद्वितीयं साधनमिति राष्ट्राधिकारिभिर्महता कण्ठगर्जनेन जोघुष्यते। एतन्मतावलम्बिनो जन्मान्तरं नाभ्युपयन्ति, परलोकास्तित्वमुपहासेन निराकुर्वन्ति, ईश्वरास्तित्वं धर्मकञ्चुकानां विप्रलम्भकानां स्वकपोलकल्पितमिति विपुलेनाडम्बरेण प्रतिपादयन्ति। धनिकानामुच्छेदसाधनेनैव दरिद्राणां दारिद्र्यावसानं शक्यक्रियमिति मतं सर्वत्र दरिद्रेभ्यो रोचतेतराम्। हिंसैव एतेषां प्रधानतयोपजीव्या, बलात्कारेण सर्वेषां धर्माणामवसादनं कर्तव्यमिति हि तेषामप्रच्यावनीयो राद्धान्तः। आशङ्कास्पदमेतदतितरां समापन्नं स्वधर्मपरायणानां भारतीयानां यदनेके पण्डितमानिन एतन्मतस्य प्रचारणाय बद्धपरिकरा भारतीयसंस्थासु। एतेषां पुण्यभूमी रूसदेशो वा चीनदेशो वा, मातृभूमिं प्रति सजातीयान् प्रति वा न समादरलेशोऽपि। अस्मिन् सङ्कटबहुले काले भारतीयचिन्तापरम्परायाः सदाचारपरम्परायाश्च समुत्सादने सर्वसन्दोहेन प्रयतमाना यदि दृढतरसत्तर्कोपबृंहितप्रमाणैर्नोपाक्रियेरन् तदा सर्वे भस्मसाद्भविष्यन्ति। अथ च एतेषां मतानि सूक्ष्मेक्षिकया पर्यालोच्य निरसितुं शक्यन्ते। आपातमधुरधनसाम्यवादमाश्राव्य विद्यार्थिनां मनांसि समावर्जयन्त्येते। ब्रूमहे यद् बहवः खलु विद्यालयेष्वध्यापकपदमधितिष्ठन्तः शास्त्राध्यापनव्याजेनैतन्मतस्योपादेयतां प्रतिपादयन्ति, छात्राश्च छात्र्यश्च व्यामोहिता भवन्ति। उत्तानबुद्धिनां विभ्रमकरं मतमेतद् यदि समूलकाषं न कषितं भवेत्तदास्माकमुदर्कः सुतराममङ्गलबहुलो भविष्यति। विशेषतस्तु प्राचीनशास्त्राध्यापकाः सुरभारतीसेवापरायणा एतेषामप्रशमनीयप्रकोपस्य विषयभूता न जात्वपि मर्षणीया भवेयुः। रोगस्य निदानं परमार्थतोऽजानन् कथं तत्प्रतीकाराय अलं भवेत्। अत एवैतेषां धर्मविद्वेषिणां साम्प्रतिकस्वार्थमात्रसम्पादनपरायणानां विद्यायमानानां युक्तिजालं समुच्छिद्य स्वमतस्य प्रतिष्ठापनं कर्तव्यम्।

# गीता-जयन्ती-सप्ताहस्य विराडायोजनम्

## विदुषां भाषणानि : भारतविजयाय अनुष्ठानञ्च

काशी। विगत-दिसम्बरमासीय-प्रथमदिनाङ्कतः सप्तमदिनाङ्के यावत् अखिल-भारतीयविराट्-धर्म-संस्थारूपस्य श्रीभारतधर्ममहामण्डलस्य नवनिर्मिते भव्ये श्रीब्रह्मर्षिगायत्रीमन्दिरे उपदेशकमहाविद्यालयद्वारा श्रीगीताजयन्तीसप्ताहः समायोजितोऽभूत्। समारोहस्यास्य संयोजनं मण्डलस्य प्रधानमन्त्रिभिः श्रीदेवीनारायण-एडवोकेट-महोदयैः कृतम्। आयोजनमिदं परमपूज्यानां श्रीविद्यादेवीमहोदयानां संरक्षकत्वे समभूत्।

आयोजनेऽस्मिन् भारतराष्ट्रोपरि प्रचलतः चीनदेशीयाक्रमणस्य निराकरणार्थं स्वराष्ट्रविजयाय च वेदोक्त-शान्तिपाठस्य भगवन्नामसङ्कीर्तनस्य च विशिष्टा योजना कृतासीत्, यत्र काशिका विशिष्टा विद्वांसो भावुका भक्ताश्च सम्मिलिता आसन्।

ततः परं भगवतो वेदव्यासस्य, भगवत्या गीतादेव्याः सविधि पूजनं सम्पन्नम्। पश्चात् प्रतिदिनं सायं ६ वादनतः विदुषां गीताविषयमनुसृत्य भाषणानि समभवन्।

सप्ताहेऽस्मिन् प्रधानवक्तार इमे आसन्—आयुर्वेदरत्नाकराः श्रीब्रजमोहनदीक्षिताः, हिन्दूविश्वविद्यालयप्राध्यापकाः श्रीसुब्रह्मण्यशास्त्रिणः, वाराणसेय-संस्कृतविश्वविद्यालयीयवेदान्तविभागाध्यक्षाः श्रीरघुनाथशर्माणः, प्राध्यापकाः श्रीनीलमेघाचार्याः, वाराणसेयसंस्कृत-विश्वविद्यालयीय-भूतपूर्वपुराणेतिहासविभागाध्यक्षाः श्रीमदनन्तशास्त्रिफडकेमहोदयाः, वाराणसेयसंस्कृतविश्वविद्यालय-प्रत्नतत्त्व-महोदयाः श्रीरामनरेशमिश्राः। अन्येषामपि बहूनां विदुषां गीताविषयमनुसृत्य भाषणान्यभूवन्।

### श्रीविद्यादेवीनामुपदेशः

परमपूज्याभिः श्रीविद्यादेवीमहोदयाभिः स्वीये समारोपभाषणे उक्तं यत् गीता नाम भारतीयानां कामधेनुः। महाभारत-रणाङ्गणे पार्थाय वत्साय गोपालदारकेण अनन्तकोटिब्रह्माण्डनायकेन सर्वोपनिषत्सारभूतमिदं पयः पायितम्। तेन च स नितरां सुपुष्टः सन् अष्टादशाक्षौहिणीसमन्वितं कौरवपक्षं नामशेषतां नीतवान्। अद्यापि तादृशी परिस्थितिः समापतिता। सर्वत्र मित्रभावमहिंसाव्रतं शान्तिनिष्ठां च धारयतो भारतस्य उपरि चीनदेशेन महता सैन्येन यदाक्रमणं कृतम्, तस्य निरोधाय गीतैव नः शरण्या भवेत्। सा स्पष्टं वदति—'मामनुस्मर युद्ध्य च।' अर्थात् भगवत्स्मरणपूर्वकं युद्धोद्योगेन नूनं नः साफल्यं भवेत्। यतो हि तेनैव देवकीनन्दनेन उपसंहारे गीतायामुक्तम्—'यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः। तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥' इति। अतोऽस्माभिः सविशेषं स भगवान् भारतविजयाय समुपास्यः। सहैव भारतीयशासनेन एतदर्थं ये उपाया अनुष्ठीयन्ते, तत्रास्माभिः सर्वैर्भारतीयैः प्राणपदेन सहयोगो विधेयः। अयमेव गीतायाः गीताजयन्तिसप्ताहस्य चैषम उपदेशः। मन्ये, सर्वे भारतीया उपदेशममुं कृतौ परिणमय्य गीताजयन्ति-सप्ताहमञ्जसा सफलयिष्यन्तीति।

— —

# भारत-शासनतः प्रतियोगिता-समायोजनम्

## उज्जयिन्यां कालिदासजयन्ति-सप्ताहावसरे—
## —उत्तर-प्रदेशेन चलविजयोपहारो जितः

उज्जयिनी। गते नवम्बरे मासि सप्ताहं यावत् प्रचरतः कविकुलगुरु-कालिदासदिवस-समारोहस्यावसरे चतुर्दशदिनाङ्के भारतशासनीय-शिक्षासचिवालयसमादेशेन अखिलभारतीय-संस्कृतपाठशालाछात्राणां कृते विभिन्नेषु विषयेषु अनेकाः प्रतियोगिताः समायोज्यन्त। तत्र वेदान्तं मीमांसां न्यायं साङ्ख्यं व्याकरणं साहित्यं च समाश्रित्य षड् भाषणप्रतियोगिता अजायन्त। एतासु क्रमशः इमे विषया भाषणीया अभवन्—१—ब्रह्मसूत्राणां निर्विशेषब्रह्माद्वैते वा विशिष्टाद्वैते वा अन्यत्र वा तात्पर्यम्? २—विधि-नियम-परिसंख्यानां यथायथमालोचनम्। ३—शरीरातिरिक्तात्मसिद्धिः। ४—सत्कार्यवादः। ५—'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते' इत्यस्याः महाभाष्यपङ्क्तेराशयः। ६—मम्मटकृत-काव्यलक्षणस्यालोचनम्।

इमे विषयाः प्रतियोगितासु भागं गृह्णानेभ्यः छात्रेभ्यस्तदा असूच्यन्त, यदा प्रतियोगितारम्भे केवलं चतुर्विंशतिर्होरा अवशिष्यन्ते स्म। अन्त्याक्षरादिपद्यपाठाहवः समस्यापूर्तिस्पर्धा चायोज्येताम्। समस्यापूर्तिस्पर्धायाम् इमे द्वे समस्ये आस्ताम्—

१—चीनांशुकं त्यज्यताम्।

२—न केनचिद् दृष्टमिदं श्रुतं वा।

> उत्तरप्रदेशेन चलविजयोपहारलब्धौ येन वाराणसेय-संस्कृत-विश्वविद्यालयीयच्छात्रेण सफल्यं प्रयतितं तन्नाम श्रीजनार्दन गङ्गाधरशास्त्री रटाटे वर्तते। अनेन साहित्यशास्त्रार्थे समस्यापूर्तौ च प्रथमौ पुरस्कारौ मीमांसाशास्त्रार्थे च द्वितीयः पुरस्कारो जितः। असौ तत्र विश्वविद्यालये श्री बटुकनाथशास्त्री खिस्तेमहोदयानां सविधे साहित्याचार्य-द्वितीयवर्षेऽधीते। द्वितीयश्छात्रः श्रीयोगानन्दः वेदान्तशास्त्रार्थे जितवान्।

आसु प्रतियोगितासु दक्षिणापथाद् विहारतो राजस्थानाद् उत्तरप्रदेशाद् मध्यप्रदेशाच्च बहवश्छात्रा भागमगृह्णन्। इमे पञ्च विद्वांसः सर्वासु प्रतियोगितासु निर्णायका अभवन्—

१—'टिल्लु' इत्युपाह्वाः श्रीविनायकशास्त्रिणः, इन्दौरवास्तव्याः।

२—अन्नामलाइ-विश्वविद्यालये संस्कृतविभागाध्यक्षाः श्रीवेङ्कटेशमहोदयाः।

३—श्री. सी. पी. शास्त्रिणः।

४—वाराणसेयसंस्कृतविश्वविद्यालय-प्राध्यापकाः श्रीबटुकनाथशास्त्रिखिस्ते-महाभागाः।

५—विक्रमविश्वविद्यालये संस्कृतविभागाध्यक्षाः श्रीवेङ्कटाचलमहोदयाः।

अखिलभारतीयसंस्कृतसाहित्य-सम्मेलन-सञ्चालित-संस्कृतविद्यापीठ-प्राचार्याः संस्कृत-रत्नाकर-सम्पादकाः म. म. परमेश्वरानन्दशास्त्रिण आसु प्रतियोगितासु आध्यक्ष्यमकुर्वन्।

आसु प्रतियोगितासु प्रथमं स्थानमधिगतवान् प्रत्येकं छात्रः अशीत्युत्तरशतरूप्यकमूल्येन शुद्धस्वर्णपदकेन रूप्यकशतकसनाथितेन पुरस्क्रियते स्म। द्वितीयं स्थानमधिगतवांश्च प्रत्येकं छात्रः शुद्धरजत-पदकेन पञ्चाशतरूप्यकैः सहितेन परितोष्यते स्म।

यस्य प्रान्तस्य च्छात्रा अधिकान् अङ्कान् लभेयुः, स प्रान्तश्चलविजयोपहारं प्राप्नुयादिति। एतदुपहारप्राप्तिसौभाग्यम् उत्तरप्रदेशस्याभूत्। अतः उत्तरप्रदेशस्य प्रतिनिधिभूता वाराणसेयसंस्कृतविश्व-विद्यालस्य प्राध्यापकाः श्रीबटुकनाथशास्त्रिखिस्तेमहाभागाः छात्रैः सह इममुपहारमगृह्णन्।

## पञ्चमो दीक्षान्त-समारोहः

### वाराणसेय-संस्कृत-विश्वविद्यालयस्य

काशी । विगते दिसम्बरमासीय-षोडशदिनाङ्के वाराणसेय-संस्कृत-विश्वविद्यालयस्य पञ्चमो दीक्षान्त-समारोहः समजनि । समारोहस्यास्य मनोनीताः सभापतयः विश्वविद्यालयस्यास्य कुलपतयः उत्तर-प्रदेशराज्यपालाः श्रीविश्वनाथदासमहोदया अकस्मात् ज्वराक्रान्ताः सन्तोऽत्र न सम्मिलिताः । अतः प्रतिकुलपतिभिः काशिराज-श्रीविभूतिनारायण सिंह, एम० ए० महोदयैः समारोहस्यास्याध्यक्षं कृतम् । १९६२ ईशवीयसंवत्सरे परीक्षोत्तीर्णेभ्यः ५५० स्नातकेभ्य उपाधिवितरणं सम्पन्नम् । तद्विवरणञ्चेत्थम्—आचार्याः १६१, शास्त्रिणः ३५५, शिक्षाशास्त्रिणः ३४ । अन्ते श्री को० अ० सुब्रह्मण्य अय्यरमहोदयानां दीक्षान्त-भाषणं सम्पन्नम् । राष्ट्रसङ्कटमनुलक्ष्य उद्यानगोष्ठ्याः, अभिनयस्य चायोजनं वर्षेऽस्मिन् स्थगितमासीत् । इतः पूर्वम् एकादशदिनाङ्कतश्चतुर्दशदिनाङ्कं यावत् दर्शनपरिषदः तृतीयमधिवेशनं कविसम्मेलनञ्च उल्लेखनीये अभूताम् ।

## लोकतन्त्रं विजयताम् !

### श्रीगाडगिळमहोदयानां भाषणम्

दिल्ली । अखिलभारतीय - संस्कृतसाहित्य सम्मेलनस्य - कार्यसमितेरधिवेशनावसरे अत्रस्थे संस्कृतविद्यापीठे 'अस्मिश्चीनाक्रमणे संस्कृतविदुषां कर्तव्यम्' इत्युद्दिश्य एको महान् समारोहः समायोज्यत । अनेकेषां विदुषां भाषणानि विषयेऽत्र सम्पन्नानि । सम्मेलनस्यास्य कार्यवाहकसभापतीनां भूतपूर्व-पञ्जनद-प्रान्तराज्यपालानां श्रीनरहरविष्णुगाडगिळमहोदयानां भाषणं विशेषतः समुल्लेख्यं वर्तते । तैरुक्तम्—

"संस्कृतज्ञा अद्यापि धर्मोपदेशकत्वेन जनतायां बह्वाद्रियन्ते । संस्कृतज्ञैर्विद्वद्भिरेतस्मिश्चीनाक्रमण-सङ्कटे जनशक्तिसङ्घटनाय विशिष्य प्रयतितव्यम् । शासनाय च स्वकीयः पूर्णः सहयोगो दातव्यः । नायं समयः शासनत्रुटिप्रदर्शनस्य, न वा तदालोचनायाः । अस्मिन् समये सर्वान् विरोधान् विस्मृत्य देशरक्षामेवैका-मभिलक्ष्य सर्वैर्बद्धपरिकरैर्भवितव्यम् । 'लोकतन्त्रं विजयताम्' इत्येतदर्थं सर्वे वयं दृढप्रतिज्ञाः स्मः, सर्वविधमपि बलिदानं कर्तुं सन्नद्धाः स्मः ।

"स्वभूमिं रक्षतामस्माकं प्रहारैर्यदि काचन हिंसा जन्यते, सापि अहिंसारक्षायैव जायमाना अहिंसैव । स्मर्यतां प्राचीनमभियुक्तानां वचः—'आततायिनमायान्तं हन्यादेवाविचारयन्', इति । देशस्यैक्यमुत्साहं साहसं च प्रतिष्ठापयितुमस्माभिरस्य लुण्टाकचीनस्य शिलोच्चयदृढतया साम्मुख्यं करणीयमस्ति । वयं निश्चितं विजेष्यामहे । 'सत्यमेव जयते, नानृतमि'ति साक्षात्कृतधर्माणाम् ऋषीणामुद्घोषः" इति ।

## वृत्त-सारः

—दिसम्बरमासस्य षष्ठदिनाङ्के नवदिल्लीस्थे भारतीयविद्याभवने श्रीमुंशीमहोदयानामाध्यक्ष्ये संस्कृत-विदुषां विचारगोष्ठी समभवत्, यस्यां चीनाक्रमणस्य निन्दा सर्वैः कृता ।

—दिसम्बरमासस्य पञ्चदशदिनाङ्के राजधानीस्थे संस्कृतविद्यापीठे दरभंगा-संस्कृतविश्वविद्या-लयोपकुलपतीनां डा० उमेशमिश्राणां स्वागतं समजनि । मिश्रमहोदयैरुक्तम्—राष्ट्ररक्षायै ऋषिभिरपि शस्त्राणि धारितानि । परशुराम-विश्वामित्रप्रभृतय ऋषयः शास्त्रज्ञानप्रदानेन सार्धं राष्ट्रस्य सङ्कटापन्नपरिस्थितिषु शस्त्रग्रहणमकुर्वन् । छात्राः स्वपूर्वजवीरताशौर्यं स्मरन्तु, शरीरमनःशक्तिशालित्वञ्च प्राप्नुयुरिति ।

—दिसम्बरमासीयाष्टमे दिनाङ्के दिल्लीस्थदीवानहाल - आर्यसमाजमन्दिरस्य वार्षिकोत्सवप्रसङ्गे डा० श्री मण्डनमिश्रमहोदयानामाध्यक्ष्ये विशालं संस्कृतसम्मेलनं सम्पन्नम् । अत्रापि संस्कृतज्ञाः राष्ट्ररक्षाकार्ये नेतृत्वाय प्रचोदिताः ।

---

# श्रीभारतधर्म महामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशितपुस्तकानि

## श्रीस्वामि दयानन्द महाराजद्वारा रचितानि

| | |
|---|---|
| १—धर्मकल्पद्रुम प्र० ख० | २) |
| २—धर्मकल्पद्रुम द्वि० ख० | १॥) |
| ३—धर्मकल्पद्रुम तृ० ख० | २) |
| ४—धर्मकल्पद्रुम च० ख० | २) |
| ५—धर्मकल्पद्रुम प० ख० | २) |
| ६—धर्मकल्पद्रुम ष० ख० | ३॥ |
| ७—धर्मकल्पद्रुम स० ख० | २) |
| ८—धर्मकल्पद्रुम अ० ख० | ३॥) |
| ९—धर्मकल्पद्रुम, प्रथम द्वितीय खण्ड एक साथ रायल एडी० | ५) |
| १०—प्रवीण दृष्टिमें नवीन भारत प्र० ख० | २) |
| ११—प्रवीण दृष्टिमें नवीन भारत द्वि० ख० | २) |
| १२—नवीन दृष्टिमें प्रवीण भारत | १) |
| १३—साधनचन्द्रिका | १।।।) |
| १४—शास्त्रचन्द्रिका | १॥) |
| १५—धर्मचन्द्रिका | १।) |
| १६—आर्यगौरव | ॥) |
| १७—नीतिचन्द्रिका | ॥) |
| १८—धर्मप्रश्नोत्तरी | ।) |
| १९—चतुर्दशश्लोक-रहस्य | ।) |
| २०—गीतार्थचन्द्रिका सजिल्द ३) अजिल्द | २॥) |
| २१—सनातनधर्मदीपिका | ।।।) |
| २२—धर्मविज्ञान प्र० ख० | ५) |
| २३—धर्मविज्ञान द्वि० ख० | ४) |
| २४—धर्मविज्ञान तृ० ख० | ४) |
| २५—सती चरित्रचन्द्रिका | २) |
| २६—नित्यकर्म-चन्द्रिका | ।) |
| २७—धर्मसोपान | ।) |
| २८—धर्मकर्म-दीपिका | ।) |
| २९—सदाचार-सोपान | –) |
| ३०—कन्याशिक्षा-सोपान | –) |
| ३१—ब्रह्मचर्य-सोपान | ।) |
| ३२—साधन-सोपान | ॥) |
| ३३—शास्त्र-सोपान | ।) |
| ३४—उपदेशपारिजात | ॥) |
| ३५—कल्किपुराण | १॥) |
| ३६—पातञ्जलयोगदर्शन | ३) |
| ३७—महामंडल-रहस्य | १॥) |
| ३८—मन्त्रयोगसंहिता | १) |
| ३९—हठयोगसंहिता | ॥) |
| ४०—तत्त्वबोध | =) |
| ४१—स्तोत्र-कुसुमाञ्जलि | ।) |
| ४२—भगवद्गीता प्रथम खंड | १) |
| ४३—विष्णुगीता | १) |
| ४४—सूर्यगीता | ॥) |
| ४५—शक्तिगीता | १) |
| ४६—धीशगीता | ।।।) |
| ४७—शंभुगीता | १) |
| ४८—संन्यासगीता | १) |
| ४९—गुरुगीता | ।) |
| ५०—कर्ममीमांसादर्शन प्र० ख० | १॥) |
| ५१—कर्ममीमांसादर्शन द्वि० ख० | २) |
| ५२—कर्ममीमांसादर्शन तृ० ख० | ५) |
| ५३—कर्ममीमांसादर्शनम् ( संस्कृत ) | २) |
| ५४—रामगीता | २॥) |
| ५५—कहावत रत्नाकर साधा० रायल | १०) |
| ५६—रामायण तुलसीकृत | १॥) |
| ५७—दैवीमीमांसादर्शन प्र० भा० | ३॥) |
| ५८—दैवीमीमांसादर्शन द्वि० भा० | ५) |
| ५९—त्रिवेदी सन्ध्या | ।=) |
| ६०—गोव्रत-तीर्थमहिमा | ॥) |
| ६१—मार्कण्डेय पुराण प्र० ख० | १) |
| ६२—मार्कण्डेय पुराण द्वि० ख० | १) |
| ६३—मार्कण्डेय पुराण तृ० ख० | १) |
| ६४—ऋजुपाणिनीयम् | ।।।) |
| ६५—संगीत-सुधाकर | ।) |
| ६६—पुराणरहस्य | १॥) |
| ६७—संन्यासधर्मपद्धति | १॥) |

सम्पादक: प्रकाशकश्च—गोविन्द नरहरि वैजापुरकर, श्रीभारतधर्ममहामण्डल, जगतगंज, वाराणसी कैन्ट।
मुद्रक:—विश्वनाथ भार्गव, मनोहर प्रेस, जतनबर, वाराणसी।






# सूर्योदयः

( श्रीभारतधर्ममहामण्डलस्य त्रैभाषिकं त्रैमासिकञ्च मुखपत्रम् )

( वार्षिकं मूल्यम् अग्रिमं मुद्रात्रयम् )

## ❋ श्रीसरस्वती-सप्तकम् ❋

विहसन्ती वरवदने ! रतिमतिमेधां च सुधां च विकिरन्ती ।
अज्ञानावृतगात्रं स्वकृपापात्रं विधेहि मामीशे ॥ १ ॥
वितरन्ती शं, वादं वाचि, विषादं विनाशय चज्ञानम् ।
वितरापूर्वाह्लादं, जहि मतिसादं प्रसीद वागीशे ! ॥ २ ॥
कलयन्ती हृदि हारं हीरकसारं प्रभां प्रवर्षन्ती ।
रचय स्वीयविहारागारं हृदयं मदीयमयि धीशे ! ॥ ३ ॥
दीनोद्धारं कारं मातः ! पारं नयाशु विनतोऽहम् ।
दुर्वृत्तीनां कदनं कुरु मे वदनं सदा स्वकं सदनम् ॥ ४ ॥
अर्पय सदयां दृष्टिं सपदि समर्पय च शास्त्रसंबोधम् ।
सन्तर्पय मम चान्तर्वरदे ! वरदेवि ! पाहि दासस्ते ॥ ५ ॥
सार्तस्वराणां त्वमु चेन्न मातः ! कार्तस्वराब्जासनसन्निविष्टे ! ।
अज्ञाननाशं कुरुषे स्वकानां, का नाम वामा न पुनश्च शक्तिः ॥ ६ ॥
मातस्त्वदीयपदपङ्कजकल्पिताशो,
दासोऽस्मि ते च जगतो नितरां निराशः ।
सद्यः प्रसीद शरणे तव बद्धपाशः
क्रन्दामि मेऽपि तनुतां हृदि सत्प्रकाशम् ॥ ७ ॥

—रामकृपालु द्विवेद साहित्याचार्यस्य ।

# श्रीभारतधर्ममहामण्डल उपदेशक महाविद्यालय वाराणसी

की

# वार्षिकपरीक्षामें उत्तीर्ण छात्रोंकी नामावली

सम्वत् २०१६ वि० तदनुसार सन् १९५९

| क्रमांक | छात्र नाम | | | श्रेणी |
|---|---|---|---|---|
| | **उपदेशक प्रथम वर्ष** | | | |
| १. | पं० गणेश शुक्ल | ... | ... | प्रथम |
| २. | श्री गौरीशंकर एम० ए० | ... | ... | द्वितीय |
| | **उपदेशक द्वितीय वर्ष** | | | |
| १. | पं० सन्तदास श्रीवैष्णव | ... | ... | प्रथम |
| २. | पं० अभिरामदास श्रीवैष्णव | ... | ... | द्वितीय |
| | **महोपदेशक प्रथम वर्ष** | | | |
| १. | पं० आर्येश्वर शर्मा ब्रह्मचारी | ... | ... | द्वितीय |
| २. | पं० रामानुज पाण्डेय | ... | ... | द्वितीय |
| | **महोपदेशक द्वितीय वर्ष** | | | |
| १. | पं० श्रीरुद्रनाथ त्रिपाठी | ... | ... | प्रथम |

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य त्रैमासिकं त्रैमासिकञ्च पत्रम् ।

( वार्षिकं मूल्यम् अग्रिमं मुद्रात्रयम् )

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,<br>
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।<br>
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन् ,<br>
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

२५ तमे वर्षे चतुर्थ-पञ्चम-षष्ठ संख्याः ] मीन-मेष-वृष-संक्रान्तयः २०१६ वैक्रमाब्दः [ अप्रैल-मई-जून १९५९


## सम्पादकीया अभिप्रायाः

### राष्ट्रपति 'राजेन्द्रवंशप्रशस्ति' समीक्षणम् ।

नवनवतिपत्रात्मकेऽस्मिन् ग्रन्थे राष्ट्रपतेः श्रीराजेन्द्रप्रसादस्य भ्रातृसहितस्य पितामहस्य, पित्रोः ज्येष्ठभ्रातुर्महेन्द्रप्रसादस्य, भगिनीनां च संक्षिप्तं जीवनमुपवर्णितम् । धर्मपत्न्या राजवंशीदेव्याश्च चरितं वर्णितम् । राजेन्द्रप्रसादस्य बाल्यात् तारुण्यपर्यन्तं कार्यजातं निपुणमभिवर्ण्य तस्य बुद्धिवैलक्षण्यं सर्वतोमुखी प्रतिभा च सुविशदं प्रतिपादिता । बाल्य एव श्रीराजेन्द्रप्रसादेन उर्दूपारसीकसंस्कृताङ्ग्लादिभाषादिप्रावीण्यमर्जयित्वोत्तरोत्तरभाव्यमानासु सर्वासु परीक्षासु सर्वप्राथम्येनोत्तीर्य स्वीया लोकोत्तरप्रतिभा चरित्रं च प्रतिष्ठापितम् । जीवनक्षेत्रे प्रविविक्षुरसौ प्रथमं प्राध्यापकपदमलंकृत्य पश्चात् कलिकातायां पाटलिपुत्रे च प्राड्विवाकव्यवसायेनोच्चन्यायालयस्थान् न्यायाधिपतीन् संतोष्य महतीं ख्यातिमवाप । अनन्तरं महात्मगान्धिसंपर्कमवाप्य सर्वविधभोगैषणाभिः सर्वथा विरम्य राष्ट्रहितकर्मणि स्वात्मानं नियुज्य मनोवाक्कायैरहर्निशं राष्ट्रहिताया-चेष्टत । मौलाना मजहरुलहकमहाशयस्य सुदृढस्कन्धयोः कुलपतित्वं संप्रधार्य छात्रेषु भारतीयसंस्कृत्यनुकूलां शिक्षां ग्राहयितुं राष्ट्रियमहाविद्यालयस्य संस्थापनमकरोत् । तत्र स्वीयप्राचार्यत्वे पाठ्यक्रमादिनिर्धारणेन पाटलिपुत्रस्थ विद्यालयेभ्यो विशिष्टच्छात्रान् समाकर्षयामास । राष्ट्रियविचारप्रसाराय "सर्च लाइट, "देश", नामकयोः पत्रयोः प्रकाशने नीतिनिर्धारणे च यत्नं विधाय पाटलिपुत्रनगरस्य नगरपालिकाध्यक्षपदमपि समलञ्चकार । कस्यचित् विवादस्य निर्णयार्थमस्य प्रशस्तिकाव्यस्य चरितनायको राजेन्द्रप्रसादो लन्दननगरं जगाम । तत्र च स्वीयवाग्मितया विचारपतीन् चमत्कृत्य यशसा श्रिया च संमानितोऽभूत् । इत्थं समासव्यासरूपेण

माननीयराष्ट्रपतिश्रीराजेन्द्रप्रसादस्य लोकोत्तरचरित्रं बुद्धिप्रागल्भ्यं देशहितहुतसर्वस्वंजनप्रियत्वादिगुणगणं निपुणं व्याख्यातप्रायम्। मध्ये त्रिपञ्चाशद्व्यक्तीनां बालगङ्गाधरतिलक मदनमोहनमालवीयादिनेतॄणां चरित्रं च राष्ट्रपतिराजेन्द्रप्रसादस्य हितैषितया समुपवर्णितम्। अतः परं पुनः राष्ट्रपति राजेन्द्रतनयानां पौत्राणां पौत्रीणां च वर्णनं विहितं विद्यते। प्रसङ्गसङ्गत्या राजेन्द्रमातृभूमेर्विहारप्रदेशस्य मुनिभूमित्वं प्रतिपादितम्। राष्ट्रपतेर्भारतीयसंस्कृत्यनुगुणशीलाचारादिना भारतीयगणतन्त्रस्य राष्ट्रपतित्वं युक्तियुक्तमित्यपि समर्थितम्।

ग्रन्थान्ते ग्रन्थकर्तुः कविप्रवरस्य श्रीमतो-विष्णुकान्त-झा महोदयस्य वंशपरिचयोऽपि दत्तो विद्यते। एवं ग्रन्थस्यास्य संक्षिप्तवर्ण्यविषयः समुदाहृतः। यद्यपि राष्ट्रपतिराजेन्द्रवंशप्रशस्तिरित्याख्ये ग्रन्थे मध्योदाहृतानां त्रिपञ्चाशन्नेतॄणामुपवर्णनं स्फुटं न किमप्यौचित्यं पुष्णाति तथापि प्रोक्तनेतृमण्डलमुपजीव्य भविष्णूनां गीर्वाणवाणीप्रणयिनां संस्कृतकवीनां कृते प्रभूतं काव्यक्षेत्रं पुरःस्थितं वर्तत इति कवेर्गूढसंकेताशयत्वं कल्पयितुं युज्यते। साम्प्रतिकजगति राष्ट्रोन्नयनचर्चा प्रतिजनं प्रतिदिशं समुल्लसति। भारतेऽपि संस्कृतगिरा राष्ट्रस्य राष्ट्रोन्नायकनेतृवर्गस्य प्रसादगुणगुम्फितं यथार्थाख्यानोपबृंहितमपि राष्ट्रियभावविशेषप्रवणं जीवनेतिवृत्तवर्णनं प्रशस्तिकाव्यप्रणयनं वा नितरामपेक्षितम्। अस्याभावस्य पूर्तये भावुकैः सहृदयहृदयैः संस्कृतकविपुङ्गवैस्तत्तद्देशकालप्रदेशव्यक्तित्ववैचित्र्यादिप्रेमग्रहिलैः प्रयतितव्यमित्यपि नाम प्रतिभाजुषः कवेः प्रैषः संभवेत्।

एष ग्रन्थो राष्ट्रियप्रेमप्रवणैर्जनैः सकृदवश्यमध्येतव्यः, जनतया शासनेन चैतादृशग्रन्थस्य भूयान् प्रचारः कर्त्तव्यः, समादरप्रदर्शनेन च राष्ट्रियभावजागर्तये संस्कृतकवयः प्रोत्साहयितव्याः। प्रकृतप्रशस्तिकाव्यप्रणयनद्वारा ज्यौतिषरत्नज्यौतिषाचार्यादिविविधोपाधिविभूषितैः पण्डितश्रीविष्णुकान्तझामहाशयैर्देशस्य यावानुपकारःकृतस्तदर्थं तेभ्यो धन्यवादसाधुवादसहस्राण्यपि अल्पीयांस्येव।

आशास्यते संस्कृतानुरागिजनता तत्तद्प्रदेशशासनं केन्द्रीयशासनं च झामहोदयस्य काव्यप्रतिभासमादरेण साकं तेषां श्लाघ्यप्रयत्नस्य कृते समुचितां प्रोत्साहनव्यवस्थां विधास्यन्तीतिशम्।

पुस्तकमिदं पण्डित श्रीविष्णुकान्त झा, चौहट्टा, बाँकीपुर, पटना-४ इति संकेतेन लभ्यते। मूल्यम् ५)

---

# वाराणसेय संस्कृतविश्वविद्यालयः

( पं० श्रीकृष्णमणि त्रिपाठी, सरस्वतीभवन, वाराणसी )

सर्वभाषाजनन्याः सुरगिरः समुन्नयनेन सह दुष्प्राप्यसंस्कृतग्रन्थानां सङ्ग्रहार्थं तदध्ययनाध्यापनद्वारा संस्कृतवाङ्मयस्य संरक्षणार्थञ्च लार्डकार्नवालिसमहोदयस्याज्ञया तात्कालिक वाराणसीरेजीडेन्ट जोनाथनमहोदयेन सोत्साहं १७९१ ईशवीये वर्षे ज्ञानप्रकाशिकायां काशिकायामेका संस्कृतपाठशाला स्थापिता। या शनैः शनैः समेधमाना १८४४ ईशवीये वर्षे गवर्नमेन्टसंस्कृत-कालेज इति नाम्ना परिणता। अत्र डा० थीबो-वेल्टाइन-

बेनिस प्रभृतयः संस्कृतानुरागिणः पाश्चात्या महामहोपाध्याय पं० गङ्गानाथझा महामहोपाध्याय पं० गोपीनाथ कविराजप्रभृतयो भारतीयाश्च विद्वांसः प्रधानाचार्यपदे आसीना अनेकानि उल्लेखनीयानि कार्याणि कृतवन्तः। एभिर्महानुभावैर्बहूनि बहुमूल्यानि पुस्तकानि प्रकाशितानि, अध्यापनार्थं विश्वविश्रुतयशसः भारतविभूतयो महर्षिकल्पा विद्वन्मूर्धन्या अध्यापकपदे प्रतिष्ठापिताः। येषां प्रगाढपाण्डित्येन संस्कृतजगतो महानुपकारो जातः। एवं संस्कृतशिक्षाया अनुसंधानस्य च केन्द्रभूतोऽयं राजकीयसंस्कृतमहाविद्यालयः समस्ताभ्यः शिक्षासंस्थाभ्य आदर्शमयीं सांस्कृतिकीं प्रेरणां वितरन् समस्ते विश्वे महतीं ख्यातिमुपगतः। अस्य ख्यातनामानः, असंख्याकाः स्नातकाः समस्ते भारते उच्चावचेषु पदेषु प्रतिष्ठिताः सन्तो भारतस्य गौरवं वर्द्धयन्ति।

भारतस्य स्वातन्त्र्येऽस्य महाविद्यालयस्यापि भाग्योदयो जातः। शिक्षापद्धतौ परिवर्तनेन सहास्य परीक्षापाठ्यक्रमे सामाजिकानां लोकोपयोगिनां संस्कृतविषयाणामपि समावेशो जातः। येनास्याः अपि परीक्षाया महती मान्यता जाता। उत्तरप्रदेशीय सर्वकारेण १९४६-४७ वर्षत एवान्यविश्वविद्यालयवद् अस्यापि वार्षिकोपाधिवितरणोत्सवव्यवस्था प्रचालिता। प्रथमदीक्षान्तसमारोहावसरे तात्कालिकप्रधानमन्त्रिणा माननीय पं० गोविन्दवल्लभपन्तमहोदयेन उद्घोषितं यदिमं राजकीयसंस्कृतमहाविद्यालयमुत्तरप्रदेशीयसर्वकारो नातिचिरं संस्कृतविश्वविद्यालयत्वेन परिणेतुमभिलषति। ततः संस्कृतविश्वविद्यालयस्य रूपरेखा प्रस्तुता। वर्तमान **मुख्यमन्त्रिणां** श्रद्धेय **डा० सम्पूर्णानन्दमहोदयानां** सत्प्रयत्नेन ११।१।४६ दिनांके उत्तरप्रदेशीयविधानसभायां संस्कृतविश्वविद्यालयस्याधिनियमो निर्विरोधं पारितः। तदनुसारं चैत्रशुक्लद्वितीयायां (२२।३।५७) दिवा द्विवादने शिक्षासचिवानां **पं० कमलापतित्रिपाठिमहाभागानां** साभापत्ये वेदघोषपुरस्सरं काशीनरेशस्य, काशी प्रयाग लखनऊ गोरखपुरालीगढ़ रुड़की विश्वविद्यालयकुलपतीनां च शुभकामनया सह श्रीसम्पूर्णानन्दमहोदयेन सोल्लासं राजकीयसंस्कृतमहाविद्यालयस्य वाराणसेय संस्कृतविश्वविद्यालयत्वेन परिणतिमुद्घोष्य महतोऽभावस्य पूर्तिः कृता।

अपरमपि हर्षास्पदमिदं यदखिलायामिलायामस्य प्रथमसंस्कृतविश्वविद्यालयस्य प्रभाते प्रभाते प्रसुप्तानुद्बोधयितुमादित्य इव **श्रीमानादित्यनाथ झा आई० सी० एस० महोदयः** राज्यसंमानानर्हतयोपेक्षितं संस्कृजगज्जागरितुं बुद्धिमता सर्वकारेण प्रथम उपकुलपति निर्वाचितः, यः शासने लब्धकीर्तिः, प्रबन्धे प्रवीणः, शिक्षायां च ख्यातनामा संस्कृतानुरागी विद्वानस्ति। यस्य परमेणोत्साहेनापूर्वेणौदार्येण अद्भुतेन कार्यकौशलेन चायं संस्कृतविश्वविद्यालयोद्रुतगत्या सर्वतोमुखीं समुन्नतिं विदधानः समेधमानश्चाहर्निशं संस्कृतसंसारं सततं समुत्साहयति। सोत्साहं सञ्चालितस्यास्य वाराणसेय-संस्कृतविश्वविद्यालयस्य प्रथमं वर्षं व्यतीतम्। तत्रानेकविधानि महत्त्वपूर्णानि कार्याणि सम्पन्नानि सम्पत्स्यन्ते चाग्रेऽपीति दृढं विश्वसिमि।

प्रथमं जुलाईमासस्य २२ दिवसे उच्चकोटिकविश्वविद्यालयानुरूप एवास्यापि संस्कृतविश्वविद्यालयस्य प्रस्तोतुः प्राध्यापकानामनुसन्धानसञ्चालकस्य ग्रन्थाध्यक्षस्येतरेषां च कर्मचारिणां वेतनक्रमो निर्धारितः। येन संस्कृतसंसारे अपूर्व आनन्दसागरः समुद्वेलितः। सितम्बरमासस्य ६ दिवसे वाचनालयकक्षस्य संग्रहालयस्य विशिष्टव्याख्यानमालायाश्च उद्घाटनं जातम्। जनवरीमासस्य १५ दिवसे अन्ताराष्ट्रिय-भ्रातृपरिषत्स्थापिता। फरवरीमासस्य २ दिवसे महता समारो-

हेणोपाधिवितरणोत्सवः सानन्दं सम्पन्नः। फरवरी मासस्य २२ दिवसे पुष्पप्रदर्शिनी जाता। मार्चमासस्य १० दिवसे स्थापनादिवसमहोत्सवः सञ्जातः।

द्वितीय पंचवर्षीययोजनायां संस्कृतस्योन्नतये उत्तरप्रदेशीयसर्वकारेण ५३ लक्षरूप्यकाणि स्वीकृतानि। तत्र संस्कृतविश्वविद्यालयार्थं ३२८००००) सरस्वती भवन पुस्तकालयस्य विकाशार्थं ६५७०७७) संस्कृत-पाठशालानामुन्नतये १२२५०००) संस्कृतग्रन्थानां प्रकाशनाय ५००००) हस्तलिखितपुस्तकसंग्रहार्थं च ५०००) रूप्यकाणां व्ययो निर्धारितोऽस्ति।

इदानीं संस्कृतविश्वविद्यालये ३० प्राध्यापकाः, ५०० छात्राश्च सन्ति। वेद-व्याकरण-साहित्य न्यायवेदान्त-सांख्ययोगमीमांसाऽऽगमपुराणेतिहास ज्यौतिष-धर्मशास्त्र - बौद्धदर्शनजैनदर्शन - राजशास्त्राऽर्थशास्त्राणां संस्कृतप्राधान्येन प्राचीनार्वाचीनदृष्ट्या समन्वयात्मकमध्यापनं भवति। न केवलं संस्कृतवाङ्मयस्याध्ययनं भवति अपितु तत्तद्देशभाषया नवीनविषयाणामपि अध्ययनं प्रचलति। भारतीयपाश्चात्यभाषाणां तुलनात्मकाध्ययनार्थमत्र चीनी-तिब्बती जापानी रासयन फ्रेञ्च अँग्रेजी हिन्दीप्रभृतीनां भाषाणामपि अध्यापनं प्रचलति। एवमस्मिन् विश्वविद्यालयेऽखिलाया भारतीयसंस्कृतेः साङ्गोपाङ्गमध्ययनार्थं प्रयत्यते। अद्य यावत्संस्कृतविश्वविद्यालये निम्नांकिताः विभागाः स्थापिताः। यत्र विशिष्टा विद्वांसः योग्यतमाः कर्मचारिणश्च तत्परतया कार्यं निर्वहन्ति।

(१) अध्यापनविभागः, (२) प्रशिक्षणविभागः, (३) अनुसन्धानविभागः, (४) पुस्तकालयविभागः, (५) वैदेशिकच्छात्रविभागः, (६) संग्रहालयविभागः, (७) छात्रकल्याणविभागः, (८) ललितकलाविभागः, (९) सांस्कृतिकयोजनविभागः, (१०) पञ्चाङ्गविभागः, (११) परीक्षाविभागः, (१२) अर्थविभागः, (१३) सामान्यविभागश्च।

(१) तत्राध्यापनविभागे न्याय, वेदान्त, वेद, व्याकरण, साहित्य, ज्यौतिष, पुराणेतिहासेषु सप्तसु विषयेषु योग्यतमाः प्रविभागाध्यक्षाः प्रतिष्ठिताः सन्ति। येषां प्राधान्येऽध्ययनाध्यापनकार्यं सम्पद्यते। वेदे-विधिवदध्ययनपूर्वकं श्रौतगृह्यसूत्रानुसारं यज्ञस्य क्रियात्मकाध्ययनार्थमतिशीघ्रमेकस्या यज्ञशालाया निर्माणं भविष्यति। व्याकरणे-प्राचीनपद्धत्याऽध्ययनातिरिक्तं तुलनात्मकभाषाविज्ञानाध्ययनेन सह शास्त्रार्थपरम्परया अपि कौशलं प्रदर्श्यते। साहित्ये-काव्यानामैतिहासिकाध्ययनेन सह मौलिकरचनाया महत्त्वं प्रदीयते। न्याये-नव्यप्राचीन-न्यायाभ्यां बौद्धजैनदर्शनयोस्तुलनात्मकाध्ययनार्थं शास्त्रार्थपरम्परया अपि कौशलं प्रदर्श्यते। ज्यौतिषे-प्राचीनगणितफलिताभ्यामाधुनिकगणितस्याध्ययनं भवति। अत्र नातिचिरमेकस्याः सुसज्जिताया विशालाया वेधशालायाः स्थापनोपक्रमः क्रियते। एवं वेदान्तपुराणेतिहासधर्मशास्त्रादिविषयेष्वपि नवयोजनानुसारमध्यापनादिकार्यं क्रियते।

(२) वैज्ञानिकविधिना शिक्षणार्थं **पं० कुबेरनाथ सुकुल** महोदयस्याध्यक्षतायां प्रशिक्षणविभागस्यापि व्यवस्था कृताऽस्ति। यत्र वर्षपर्यन्तं निःशुल्कंशिक्षा दीयते। स्नातकेभ्यश्च पुष्कलाश्छात्रवृत्तयो दीयन्ते। अत्र सैद्धान्तिकशिक्षणेन सह प्रयोगिकाभ्यासस्यापि प्रबन्धः कृतोऽस्ति।

(३) अनुसन्धानविभागे प्रकाशनस्य कोशनिर्माणस्य च महती योजना प्रस्तुताऽस्ति। तदर्थं लब्धप्रतिष्ठस्य विद्यावयोवृद्धस्य **श्रीक्षेत्रेशचन्द्र चट्टोपाध्याय महोदयस्या**ऽनुसन्धानसञ्चालकपदे निर्वाचनं जातमस्ति। तत्सहायकाश्च चत्वारः तत्तच्छास्त्रविदो

विशिष्टा विद्वांसो नियोजिता उत्साहेनानुसन्धानकार्यं सम्पादयन्ति ।

अस्यैव विभागस्य तत्त्वावधाने पी-एच० डी० समविद्यावारिध्युपाधिलब्धये प्रथमश्रेण्यामाचार्यपरीक्षोत्तीर्णाय प्रतिविषयमेकैकस्मै छात्राय ५०), डी० लिट् तुल्यवाचस्पतिपदवीप्राप्तये च १००) मासिकं दातुं निश्चयः कृतोऽस्ति । इत एव सारस्वतीसुषमायां विश्वविद्यालयस्याधिकारिणां प्राध्यापकानामनुसन्धानपूर्णगवेषणात्मका लेखा दुर्लभा ग्रन्था अंग्रेजी-हिन्दी-संस्कृतभाषासु मौलिकग्रन्था महत्त्वपूर्णाः टीकाश्च प्रकाशयिष्यन्ते ।

भारतीयपाश्चात्यदर्शनानां समन्वयात्मकपरिशीलनपरम्परायाः प्रचारार्थं श्रीसम्पूर्णानन्दद्वारा स्थापिताया दर्शनपरिषदो विभिन्नगोष्ठीषु पठितानां निबन्धानां संग्रहः संस्कृतविश्वविद्यालयपत्रिकायाः सारस्वती-सुषमाया दर्शनाङ्के प्रकाशितप्राय एव अस्ति ।

(४) साम्प्रतं सरस्वतीभवनपुस्तकालयोऽन्ताराष्ट्रियगौरवं बिभर्त्ति । अत्र षष्ठिसहस्राणि मुद्रितपुस्तकानि अशीतिसहस्राणि च हस्तलिखितानि पुस्तकानि संगृहीतानि सन्ति । हस्तलिखितपुस्तकेषु बहूनि अमूल्यानि पुस्तकानि सन्ति । मन्ये एवंविधोऽन्यः पुस्तकालयो भारते कश्चिन्नास्ति । इतो देशीया विदेशीयाश्च विद्वांसः सततं लाभान्विता भवन्ति ।

अत्र माइक्रोफिल्म यन्त्रद्वारा अद्य यावत् ४८ दुर्लभग्रन्थानां छायाचित्राणि गृहीतानि सन्ति । हस्तलिखितवेदोपनिषत्कर्मकाण्डधर्मशास्त्रपुराणेतिहासस्तोत्र-तन्त्रपुस्तकानां विवरणात्मिकासूची अष्टसु खण्डेषु प्रकाशितास्ति । पुस्तकालयभवनविस्तारार्थं भूमिसर्वेक्षणमपि जातमस्ति । सरस्वतीभवनपुस्तकालयस्य सर्वाङ्गीणविकासार्थं संस्कृतविद्यालयो निरन्तरमीहते । अस्य ग्रन्थाध्यक्षोऽनेकभाषाविद् **डा० सुभद्रझा महोदयः** पुस्तकालयस्याभिवृद्ध्यर्थं सततं चेष्टते ।

(५) पुरा भारते यथा विक्रमशिलोदन्ती तक्षशिला-नालन्दादिविश्वविद्यालयेषु संस्कृतपालीवाङ्मयस्य सम्यग्ज्ञानार्थं दूराद्दूरतरादेत्य वैदेशिका अधीयन्ते स्म तथैवात्रापि प्रबन्धोऽस्ति । तामेव प्राचीनां सांस्कृतिकीं परम्परां पुनरुज्जीवितुं संस्कृतविश्वविद्यालये एको वैदेशिकच्छात्रविभागः स्थापितोऽस्ति । यत्र कोरिया, मंगोलिया, कम्बोडिया, थाईलैण्ड, लाओस, वर्मा, सिलोन, लद्दाख, नेपाल किन्नरादिदेशेभ्यः समागत्य छात्रा निःशुल्कं शिक्षां गृह्णन्ति । तेभ्यो योग्यतानुसारं पर्याप्ताश्छात्रवृत्तयोऽपि प्रदीयन्ते । तेषां प्रारम्भिक संस्कृतज्ञानाय वर्षद्वयस्य एकः पृथक् पाठ्यक्रमो निर्धारितोऽस्ति । तदध्यापनाय च स्वतन्त्राश्चत्वारः शिक्षका नियुक्ताः सन्ति । तदर्थं नवीनैरुपकरणैः सुसज्जित एकोऽन्ताराष्ट्रियछात्रावासो वाचनकक्षश्चास्ति । यत्र पालीभाषया निबद्धस्य बौद्धधर्मसाहित्यस्य विविधग्रन्थानां पत्रपत्रिकाणाञ्च संग्रहोऽस्ति । उपाध्यायो-वेदान्ताचार्यः **पं० जगन्नाथो** बौद्धनाथ इवास्य विभागस्य सोत्साहं सर्वविधं सैविध्यं साधयति ।

( ६ ) प्राचीनकला-संस्कृत्योरध्ययनहेतवे अक्टूबरमासस्य ६ दिवसे वर्तमान राज्यपाल **वि० वि० गिरिधर्मपत्न्या सरस्वतीदेव्याः** करकमलाभ्यां विश्वविद्यालये एकः संग्रहालयः उद्घाटितः । यत्र प्राचीनकलावशिष्टा मूर्तयो मुद्राः भग्नावशिष्टानि प्रस्तराणि पात्राणि चित्राणि च संगृह्यन्ते ।

( ७ ) छात्रकल्याणविभागे **साहित्याचार्य एम० ए० पं० रामनरेशमिश्र** श्छात्र-संरक्षकपदे नियुक्तः ।

छात्राणामावश्यकपूर्तये पथप्रदर्शनाय च सततं प्रयतते, प्रतिभाशालिनां सच्चरित्राणां छात्राणां विशेष-प्रोत्साहनञ्च प्रदत्ते ।

छात्राणां निवासाय एको विशालश्छात्रावासो निर्मितप्राय एवास्ति । इदानीं यावच्छात्राः प्राचीन एव छात्रावासे निवसन्ति । मध्यमपरीक्षायां १२) शास्त्रि-परीक्षायां १५) आचार्यपरीक्षायाञ्च २०) रूप्यकाणि छात्रवृत्तयो दीयन्ते ।

अध्ययनेन साकं छात्राणां स्वास्थ्यलाभाय विश्व-विद्यालये विभिन्नखेलानां भारतीयव्यायामस्य च प्रबन्धः कृतोऽस्ति । छात्राणां स्वास्थ्यनिरीक्षणाय रुग्णावस्थायामौषधोपचारार्थं च प्राच्यप्रतीच्यचिकित्सा-कुशलौ द्वौ चिकित्सकौ नियुक्तौ स्तः । छात्रेषु साहित्यकीं सांस्कृतिकीं च चेतनां समुद्भावयितुं 'साहित्यपरिषद्' स्थापिताऽस्ति । यत्र समये समये साहित्यिकनिबन्ध-प्रतियोगिता भाषणप्रतियोगिता च प्रचलति । अत्रत्यै-श्छात्रैः वर्षेऽस्मिन् जयपुरे जातायामखिलभारतीय-संस्कृतभाषणप्रतियोगितायां लक्ष्मणपुर-गोरखपुर विश्वविद्यालययोरन्तर्विश्वविद्यालयसंस्कृतभाषणप्रतियो-गितायाञ्च प्रथमं स्थानं प्राप्तं विजयचिह्नञ्च गृहीतम् । आकाशवाणीप्रतियोगितायामपि इहस्थैः श्छात्रैरवसरो-लब्धः । छात्राणामभिनयकलायां प्रोत्साहनार्थमेको-रमणीयः स्थायी रङ्गमञ्चो निर्मीयते । आवश्यकज्ञान-वृद्धये प्रतिद्वादशि व्याख्यानमाला प्रचलति । यत्रैकः प्रौढः प्राध्यापको नियतविषये प्रवचनं प्रदाय छात्राणां जिज्ञासां पूरयति । एवमधीतविषयेण सहान्यविषयाणा-मपि परिचयो जायते । छात्रसंगठनाय विश्वविद्यालये एकाछात्रपरिषदपि प्रचलति । यस्या अध्यक्षमन्त्रिणौ निर्वाचनपद्धत्या निर्वाच्येते ।

( ८ ) ललितकलात्रिभागे—वाद्यसङ्गीतकण्ठसङ्गीत कलाकुशलौ सङ्गीतविशारदौ द्वौ सङ्गीतशिक्षकौ नियुक्तौ-स्तः । तत्र सङ्गीतप्रियाबालका बालिकाश्च यथारुचि भागं गृह्णन्ति ।

( ९ ) एशियामहाद्वीपस्यैकतास्थापनाय जनवरी मासस्य १५ दिवसे **श्रीमतः काशीनरेशस्य** समक्षे मुख्यमन्त्रिणो डा० सम्पूर्णानन्दमहोदयस्याध्यक्षताया-मन्तारांष्ट्रियभ्रातृपरिषत् स्थापिता । यत्र विभिन्नदेश-प्रतिनिधीनां शुभकामनया सह सौहार्दपूर्णं स्वागतं भतं च विदुषां भाषणमजायत । अस्मिन्नेवावसरे वैदेशिक छात्राणां समुत्साहेन एका विभिन्नदेशवस्तुप्रदर्शिनी वैदेशिकछात्राणामभिनयो नेपालीलोकनृत्यञ्चाजायत ।

मौलिकविचारोपस्थापनार्थं संस्कृतस्य प्रौढपाण्ड-त्यस्य च रक्षणार्थं अक्टूबरमासस्य ६ दिवसे उत्तर-प्रदेशीय राज्यपालमहामहिम वि० वि० गिरिद्वारा एकस्या विशिष्टव्याख्यानमालायाः शुभारम्भो जातः । तत्रास्मिन्वर्षे ( १ ) वेदस्वरूपम् ( २ ) वैदिकदेवता ( ३ ) वैदिकयज्ञश्चेतिविषयेषु **म० म० पं० गिरिधर-शर्मचतुर्वेदिमहाभागैः** त्रीणि व्याख्यानानि प्रस्तुतानि, येषां प्रकाशनं सारस्वतीसुषमायां भविष्यति । सांस्कृति-कायोजनकार्यकुशलस्य विशिष्टविदुषो न्यायविभागाध्य-क्षस्य **न्यायवेदान्ताचार्य एम० ए० पं० बदरीनाथ शुक्लमहाभागस्य** संरक्षणे एका सांस्कृतिकायोजनस-मितिः स्थापिता, यैवंविधसमारोहव्यवस्थां विदधाति ।

(१०) दृश्यगणितमाश्रित्य समारब्धं श्रीबापूदेवशा-स्त्रिपञ्चाङ्गं संस्कृतविश्वविद्यालयेन प्रायः कार्तिकमासे प्रकाश्यते । पञ्चाङ्गकार्यसम्पादनाय त्रयः सुयोग्याज्योति-र्विदो नियुक्ताः सन्ति । ये तत्परतयाऽनवरतं पञ्चाङ्गकार्यं सम्पादयन्ति ।

(११) अत्रत्यपरीक्षागौरवं समस्ते जगति अद्विती-यमस्ति । अत्रत्यासु परीक्षासु न केवलं भारतवर्षस्य विद्यार्थिनः समुपतिष्ठन्ते, किन्तु नेपालवर्मा-लंका पाकिस्तान प्रभृति देशानामपि बहवश्छात्राः सम्मिलन्ति ।

साम्प्रतमुत्तरप्रदेशस्य १०३४ विद्यालया अन्यप्रदेशाना-ञ्च २९३ विद्यालयाः अनया परीक्षया सम्बद्धाः सन्ति। उत्तरप्रदेशे ५७ अन्यप्रदेशेषु च २१ परीक्षाकेन्द्राणि सन्ति। प्रतिवर्षं प्रथमापूर्वोत्तरमध्यमाशास्त्र्याचार्यपरीक्षासु प्रायः १८००० छात्राः सम्मिलन्ति। नवीनयोजनायामांशिकपूरकपरीक्षयोरपि व्यवस्था कृताऽस्ति वैदेशिकछात्राणाङ् कृते एका स्वतन्त्रपरीक्षा स्थापिता। या वर्षद्वयेन सम्पत्स्यते, तामुत्तीर्यैव वैदेशिका विभिन्न-विषयेषुशास्त्रिपरीक्षायां प्रवेष्टुमर्हन्ति। सहायकप्रस्तोता **साहित्याचार्य एम०ए० पं० रामचन्द्रमालवीयो** महामना मालवीय इवौदार्येण व्यवहरन् कुशलतया परीक्षाकार्यं सम्पादयति।

(१२,१३) अर्थविभागः, सामान्यविभागश्च स्वकीयं कर्तव्यं सम्यक्पालयन्तौ सर्वविधमुत्तरदायित्वकार्यं निर्वहतः। एवं त्रयोदशसु विभागेषु विभक्तस्य वाराणसेय संस्कृतविश्वविद्यालयस्य सर्वविभागकार्याणि प्राच्यप्रतीच्योभयविद्याविशारदः कुबेर इव सर्वेषामाश्रयभूतः सौम्यमूर्तिः **प्रस्तोता एम० ए० व्याकरणाचार्यः पं० कुबेरनाथशुक्लमहोदयः** परमौदार्येण सञ्चालयन् अस्य सर्वविधसमुन्नतयेऽहर्निशं प्रयतते।

गाथिकपद्धत्या निर्मिते हृदयाकर्षके गगनचुम्बिनि-प्रस्तरमये विशाले विश्वविद्यालयभवने सर्वतः शोभनैरक्षरैरङ्कितं "श्रुतं मे गोपाय" इतिविश्वविद्यालयशीर्षवाक्यं संस्कृतानुरागितां व्यञ्जयति संस्कृते समेषां हृदयानि च समाकर्षति विश्वविद्यालयचतुर्दिक्षु नवपद्धत्या निर्मिते-रमणीये विस्तृतपरिधौ कलापूर्णं चित्रणं चत्वारि च विशालानिद्वाराणि निर्मीयन्ते। संस्कृतविश्वविद्यालयोद्यानसिञ्चनार्थं विद्युच्चलितकूपं निर्माय इतस्तत अनेकाः कुल्याः प्रवाहिताः सन्ति। हरितया दूर्वया दर्शनीये सुविशाले विश्वविद्यालयप्राङ्गणे विविधैरभिनवैः प्रसूनतृणलतागुल्मादिभिः सुसज्जितमतिरमणीयमुद्यानं दर्शं दर्शं केषां सुचेतसां मनांसि नाकृष्टानि भवन्ति। जनवरीमासस्य २२ दिवसे विश्वविद्यालयप्राङ्गणे एका वाराणसेयी अत्यद्भुता पुष्पप्रदर्शिनी अजायत। यत्र विश्वविद्यालयोद्यानेन प्रथमः पुरस्कारः प्राप्तः। उपकुलपतिभवननिर्माणं सम्पन्नमनुसन्धानभवनविस्तारो जातः। विशालं दर्शनीयं द्विप्रासादं भव्यं कार्यालयभवनं तु निर्मितप्राय एवास्ति। एवं मुपकुलपतिमहोदयस्य सर्वतोमुख्या प्रतिभया अनवरतेन श्रमेण अपूर्वेणोत्साहेन विविधाध्ययवसायेन च बृहत्तरभारतस्य संस्कृतेः संस्कृतवाङ्मयस्य चानुदिनं प्रचारं प्रसारं च विदधतोऽस्य वाराणसेयसंस्कृतविश्वविद्यालयस्य सर्वविधसमुन्नतये अघटितघटनापटीयांसं कर्तुमकर्तुमन्यथाकर्तुं सर्वथासमर्थं भगवन्तं श्रीविश्वेश्वरं प्रार्थयन् विरमामि।

---

# सपिण्डीकरणम्

पं० विश्वनाथमिश्र ज्यौतिषी कर्मकाण्डालङ्कार
पुरुषोत्तमशान्ति निकेतनाध्यक्षः, बेतिया, (चम्पारन)

लेखेऽत्र श्राद्धविषयकपद्धतिषु व्यतिक्रमसपिण्डनप्रयोग इति दर्शयिष्यामि। संप्रति बहूनां विदुषां मध्ये सपिण्डीकरणासनविषयकभ्रमउपस्थितो यद् विश्वेदेवपितॄणां मध्ये प्रेतासनं वा पितृभ्यः पूर्वदिशि। एतेनैव भ्रमनिवारणपूर्वकशास्त्रानुकूलसपिण्डीकरणप्रयोगः स्फुटीभविष्यति। एतद्विषये गोभिलगृह्यभाष्ये एककर्तृकैककालावच्छिन्नपार्वणैकोद्दिष्टोभयात्मकसपिण्डीकरणश्राद्धे पूर्वं पार्वणमेकोद्दिष्टं वेत्याशङ्क्य

समाहितं यदागतानां पूर्वमितिन्यायात्पूर्वं पार्वणं पश्चादेकोद्दिष्टं प्रेतस्यावाहनाभावात्।

## प्रयोगः

सपिण्डने क्रियाद्वयं वर्तते, एकमर्घ्यमेलनं द्वितीयम् पिण्डमेलनम्। अतः कैश्चिदाचार्यैः पिण्डमेलनं कैश्चिदर्घ्यमेलनं कैश्चिदुभयमितिसमानत्वेन प्रतिपादितम्। विश्वदेवपूर्वकपितामहादीनामासनादारभ्यार्घ्यपर्यन्तक्रियां संपाद्य प्रेतार्घ्यान्तक्रियां कुर्यात् ततोऽर्घ्यं मेलयेत्। पुनः विश्वेदेवपूर्वक पितॄणां पिण्डपूजनान्तक्रियां संपाद्य प्रेतस्य दक्षिणादानपर्यन्तक्रियां कुर्यात्। ततः पिण्डं मेलयेत्। ततः पार्वणस्यावशिष्टं कार्यं कृत्वा पितृविसर्जनं कुर्य्यादिति शास्त्रानुकूलः प्रयोगः। अत्रासनक्रमेण पूजनादिक्रिया भवति पूजनक्रमेणासनं स्यात्।

संप्रति प्राचीनासनक्रमभिन्नं पूजनं पद्धतौ वर्ततेऽतो नवीनस्य कथनं यत्पूजनक्रमेणासनं स्यादित्युभयोर्मध्ये भ्रमात्मको विवाद उपस्थितः। निम्नाङ्कितप्रमाणेन श्रीमद्भिर्विद्वद्भिर्निरपेक्षत्वेन विचारणीयः।

## तत्र प्रमाणं श्राद्धकल्पे

श्राद्धद्वयमुपाक्रम्य कुर्वीत सहपिण्डताम्।
तयोः पार्वणवत्पूर्वमेकोद्दिष्टमथापरम्॥ १॥

## गरुडपुराणे

अतः स्नात्वा मृतस्थाने गोमयेनोपलेपिते।
शास्त्रोक्तेन विधानेन सपिण्डीं कारयेत्सुतः॥ २॥
पाद्यार्घ्याचमनीयाद्यै विश्वेदेवाँश्च पूजयेत्।
कुपित्रे विकरं दत्त्वा पुनश्चाप उपस्पृशेत्॥ ३॥
दद्यात्पितामहादीनां त्रीन्पिण्डाँश्च यथाक्रमम्।
वसुरुद्रार्करूपाणां चतुर्थं मृतकस्य च॥ ४॥
चन्दनैः तुलसीपत्रैः धूपै र्दीपैः सुभोजनैः।
मुखवासैः सुवस्त्रैश्च दक्षिणाभिश्च पूजयेत्॥ ५॥
प्रेतपिण्डं त्रिधा कृत्वा सुवर्णस्य शलाकया।
पितामहादिपिण्डेषु मेलयेत्तं पृथक् पृथक्॥ ६॥

## बृहत्पराशरस्मृतौ

सपिण्डीकरणे काले श्राद्धद्वयमुपस्थितम्।
दैवाद्यं प्रथमं कुर्यात् प्रेतस्य तदन्तरम्॥ ७
दैवाद्यं पार्वणं प्रोक्तं प्रेतस्य तदनन्तरम्।
एकत्वं तु ततः पश्चात्कृत्वा विप्रांश्च भोजयेत्॥
पितॄणामर्घ्यपात्राणि प्रेतपात्रमथापरम्।
प्रेतपात्रं तु तत्कृत्वा पितृपात्रेषु योजयेत्॥ ८॥

## औशनसस्मृतौ

सपिण्डीकरणं श्राद्धं देवपूर्वं विधीयते।
पितृनावाहयेत्तत्र पुनः प्रेतञ्च निर्दिशेत्॥१०॥

## ब्रह्मपुराणे

तिलगन्धोदकैर्युक्तं तत्र पात्रचतुष्टयम्।
कुर्यात्पितॄणां त्रितयमेकं प्रेतस्य च द्विज॥११॥
तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च स्वयमाचरेत्।
प्रेतविप्रस्य हस्तेषु चतुर्भागं जलं क्षिपेत्॥१२॥
ततः पितामहादिभ्यः तन्मन्त्रैश्च पृथक् पृथक्।
ये समाना इतिद्वाभ्यां तज्जलं तु समर्पयेत्॥१३॥

## गोभिलगृह्यसूत्रे

तदहः चत्वार्य्युदकपात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य।

एतेनैव पिण्डो व्याख्यातो व्याख्यातः॥२॥

प्रेतश्राद्धमेकोद्दिष्ट विधिना भवति तत्र विश्वेदेवानामभावः पार्वणं देवपूर्वं स्यादेकोद्दिष्टं सुरैर्विना इति ब्रह्मपुराणे गोभिलगृह्यसूत्रे—नावाहनम् १ नाग्नौकरणम् १ नात्र विश्वेदेवाः ३ न तृप्तिप्रश्नः ४ न विसर्गः ५ स्वधा स्थाने उपतिष्ठताम् ६ इतिप्रेतश्राद्धनिषेधसूत्राणि सपिण्डीकरणेऽपि प्रेतक्रिया एकोद्दिष्टविधिना भवति यथा—

सपिण्डीकरणं विप्र शृणुध्वं वदतो मम।
तच्चापि देवरहितमेकार्घ्यैकपवित्रकम् ॥१४॥

तैरेव पद्धतिकारैः पार्वणप्रयोगे विश्वेदेवपितॄणां संमिलिता क्रियोक्ता सपिण्डने देवकाण्डं समाप्य प्रेतक्रिया ततः पितृक्रिया तदसंगतमित्येतेनैव भ्रम उपस्थितः। एवं विचार्य शास्त्रानुकूलश्राद्धप्रयोगो लिखितः। पूर्वाचार्याणां प्रयोगे मीमांसा या कृता तदर्थं क्षमाप्रार्थी विश्वनाथमिश्रः।

पण्डितसुरेन्द्रमोहनभट्टाचार्येण प्रणीते पुरोहितदर्पणग्रन्थे वंगभाषायां यजुर्वेदीयसपिण्डनप्रयोगे विश्वेदेव-पितृप्रेतक्रमेण आसनपूजनपिण्डदानादिकं लिखितम् कर्मकाण्डपरीक्षायां च वंगे वर्तते।

---

# विदुरचरितावली

प्रणेता—वेदव्याकरणसाहित्यधर्मशास्त्राचार्य पं० चन्द्रदेवशर्मा, पुराणतीर्थः साहित्यरत्नम् प्रधानाध्यापकः
राजकीयसंस्कृतविद्यालयस्य, बेतिया, चम्पारन।

**( क्रमागता )**

दैवादनिष्टं दमिनां दुरासदा
आसादयन्तोऽपि कदाचिदुल्बणम्।
आकस्मिकं तद्भवतीह नो बुधा
निसर्ग एवाहितनित्यदृष्टयः॥ ३३॥

स्तेनाः सुखेनाधिबलं बलिष्ठा
वित्तं विचित्याक्षतताधिवित्तम्।
भवन्तमस्माद्भवदिङ्गितैस्तै
र्दूतैः प्रधावद्भिरितं वनं तत्॥ ३४॥

यत्रैष नित्यं तपतां वरेण्यो
ब्रह्मान्वितः सिद्धिमितो महात्मा।
निलीय तत्रैव तु तस्करैस्तैः
शङ्काङ्कितो निग्रहणेऽर्पितोऽयम्॥ ३५॥

अतः परं चारुचरित्रभासुरः
सुरौघसन्तापनिषूदनोद्धुरः।
धुरीणतां सत्प्रतिपत्तये भवान्
भवाय लोकस्य दधातु माचिरम्॥ ३६॥

इतिप्रतीयाखिलतत्त्वसंविदाम्
वचोविबोधैकपरं मनस्विनाम्।
नृपोत्तमोऽद्यूयतदोषशङ्कया
सतामपध्यानकलङ्किताङ्कया॥ ३७॥

समिद्धबोधप्रसरप्रभावता-
मशेषभावोपरतान्तरात्मनाम्।
अनामयब्रह्मविभूतिमीयुषां
प्रतीपमाधाय शिवं स्थितो नु कः॥ ३८॥

अपार्थताऽऽमर्शकलङ्किताङ्कना-
न्निवार्यमार्योचितचर्चयाऽचितम्।
विधातुमद्धा नृपजीवितं क्षमं
सतामसद्भ्यः परिरक्षणं विदुः॥ ३९॥

अहं स्वसन्दात्मतया मनस्विनां
तपोविधौ विघ्नमलं न्ययूयुजम्।
न वेद्मि कामापदमाप्तुमीश्वरो
मुनिः स मामद्य रुषा नियोक्ष्यति॥ ४०॥

मनो न मे किन्तु सतां विषादने
प्रवर्तते प्रत्युत तत्प्रसादने ।
निसर्गसिद्धः क्रम एष एव मे
भवाय भव्यस्य विभाति भासुरः ॥ ४१ ॥

यदेष दोषोऽद्य दुरन्तदैवतो
दुरासदो दुःस्थितये समासदत् ।
न तत्र मेऽन्तःकरणं नु कारणम्
अजानता केन कृतं न दूषणम् ॥ ४२ ॥

इति प्रतीत्यात्मवतां वरो न मे
मुनिः प्रणाशाय मनः प्रणेष्यति ।
सतीह हेतावपि विक्रियां न ये
व्रजन्त्यहेतौ किमु ते रुषान्विताः ॥ ४३ ॥

विचिन्तयन्नित्यमनेकसंशय-
प्रचुम्बितान्तःकरणो जनेश्वरः ।
अशेषसङ्क्लेशविमुक्तमानसं
व्यमोचयत्तं मुनिवर्यमादरात् ॥ ४४ ॥

अथाभिवन्द्याखिलकल्मषापहं
तपस्विनं तूर्णमुरुप्रभाविणम् ।
विनम्रया प्रीतिपरीतया गिरा
क्षमापयामास निजं व्यतिक्रमम् ॥ ४५ ॥

ततोऽतिपूतप्रणयेन चेतसा
तपोनिधिस्तं निजपादपातिनम् ।
प्रतीतया प्रीतिपरीतया दृशा
द्रुतं समुत्थाप्य ददर्श निर्मलम् ॥ ४६ ॥

न तर्कये तन्वपि तेऽत्र भूपते
मतिं वितत्य स्खलितं कथञ्चन ।
न कस्यचित्कश्चिदलं प्रमाथने
जनोऽखिलः स्वं स्वमुपाश्नुते कृतम् ॥ ४७ ॥

निरस्य तन्मानसमात्मनस्ततं
महान्तमुत्तापमुपैहि शाश्वतम् ।
शिवं समासादय सद्म सत्वरं
विधेहि धर्मं मनसो न गत्वरम् ॥ ४८ ॥

इतिप्रबोध्य प्रतिपत्तिमातुरं
गरीयसीं लोकगतिं प्रदर्श्य च
व्यदापयत्तं नृपमाशिषाऽचर्यन्
मुनिः स्वयं सोऽपि शमं समासदत् ॥ ४९ ॥

इत्थं स्वकर्मकलनामवगत्य सिद्धः
स्वान्तं न तन्वपि तमः प्रवणं ततान
नैकान्तिकीमनुगता गतिमात्मतन्त्रा
द्वन्द्वे पतन्ति सुखदुःखमये कदापि ॥५०॥

इति विदुरचरितावल्याम् चान्द्रदैव्याम् प्रथमः सर्गः

—❀—

# कालिदासाष्टकम्

बल्लूनीत्युपाह्वो नारायणप्रसादः एम० ए० साहित्याचार्यः, वाराणसेय संस्कृतविश्वविद्यालयः
सरस्वतीभवनम् वाराणसी ।

—❀—

देवैः किन्नादिदेवैरुरग सहचरैः किन्नरैर्मर्त्यसंघैः
सिद्धैः साध्यैश्च साध्याविगतिविधिकृते सर्वदोपास्यमानाम् ।
माकन्दामन्दसूनप्रसररसभरस्पर्धिनीं काव्यशक्ति—
दातुं दिष्ट्यावतीर्णां नतजनसुलभां कालिकां राधयामि ॥ १ ॥

लोकेऽस्मिन्निगमागमेषु कुशला नारायणो भारवि—
र्दण्डी चाथ दिवाकरो गणपतिः श्रीहर्षमाघादयः ।
जाताः केऽपि सहस्रशः कविवराः के तस्य सर्वेऽपि ते
सिद्धा यस्य सरस्वती कविगुरोः श्रीकालिदासस्य सा ॥ २ ॥

न ज्ञायते स्थिरतया विबुधैरिदानीं देशोऽमुना कविवरेण विभूषितः कः ।
जातः कदा कविकुलाध्वनि जागरूको वैमत्यमत्र विदुषां परिदृश्यते नः ॥ ३ ॥

अज्ञातजन्माऽपि कवीश्वरोऽसौ सुज्ञातनामास्ति समस्तलोके ।
कवित्वमाधुर्यमधुस्पृशद्भिःपाश्चात्यभृङ्गैरपि गीयते यः ॥ ४ ॥

सालङ्कारगुणा मनोरमपदन्यासावलीलालिता
सद्वृत्ता मधुरध्वनिः सुललिता सद्भावसम्भाविता ।
वाणी यस्य सुधामयी सुमनसामुल्लासिनी मानसे
स श्रीमान् कवितावृतः स्वदयितः श्रीकालिदासः कविः ॥ ५ ॥

मनोज्ञमाधुर्यलसत्सदुक्तिभिर्विमोहयन्मानसमार्द्रचेतसाम्
प्रसृत्वरैः कीर्तिसुधांशुरश्मिभिर्निवारितं येन दिशां तमोऽखिलम् ॥ ६ ॥

खद्योतकल्पेन मया कथं स्यात् संवीक्षितुं शक्यमचिन्त्यशक्तेः ।
श्रीकालिदासस्य कवीश्वरस्य वाग्वैभवं वाक्पथपारवर्ति ॥ ७ ॥

यदवधि गगनेऽस्मिन् पुष्पितौ पुष्पवन्तौ यदवधि च धरित्री शेषमौलौ निषण्णा ।
तदवधि घनसारस्फारहारावदाता विलसतु भुवनेऽस्मिन्कालिदासस्य कीर्तिः ॥ ८ ॥

[ श्रूयते यदनेन कविकुलचूडामणिना महाकालीं समाराध्य समासादिताऽलौकिकी कवित्वशक्तिरितिकृत्वा प्रथमं तावत्पद्येनैकेन सैव भगवती समाराधितात्र ]

———

श्रीमतां मीमांसान्यायवेदान्तसांख्ययोगधर्मशास्त्रसाहित्यव्याकरणराजनीतिप्रभृतिविविधशास्त्रधुरन्धराणां धर्मप्राणश्रीलक्ष्मणशास्त्रिद्राविड़महोदयतनूजन्मनां 'पण्डितराज' पदवीविभूषितानां श्रीराजेश्वरशास्त्रिणां षष्ट्यब्दप्रवेशनिमित्तकमाङ्गलिकसमारोहोत्सवप्रसङ्गे

# मंगलाशंसनम्

नन्दनन्दन इहाखिलवन्द्यो वृन्दकाननविहारसमुत्कः ।
गोपवृन्दमहितः स मुकुन्दः सन्ततं दिशतु मङ्गलं तव ॥ १ ॥

गुरुकृपामृतपाकसमुद्भवं यमधिगम्य तु शारदवैभवम् ।
प्रकटतिस्म किलाखिलभारतद्विजमहोत्सवकाल इहाद्भुतम् ॥ २ ॥

आचार्याणामथ च विदुषां सर्वदेशस्थितानामत्रैतानां पुर इतभयः शास्त्रचर्चां व्यतानीत् ।
तेन प्रीताद्विबुधविसरात् पण्डितेन्द्राभिधानं त्रिंशद्वर्षो जगति विदितं प्रापदुच्छावदानम् ॥ ३ ॥

मीमांसाद्वयमांसलो नृपनयव्याख्यानवाचस्पति-
न्यायव्याकृतिसांख्ययोगविलसत्साहित्यसौहित्यभूः ।
सुब्रह्मण्यसुतासुतः कृतिवरश्रीलक्ष्मणात्मोद्भवः
श्रीमत्'पण्डितराज' मान्यपदभृद् राजेश्वरो द्योतते ॥ ४ ॥

सुब्रह्मण्यनिवेशितामलमतिः श्रीलक्ष्मणात्मा सुधीः—
श्रीरामाचरणप्रसादमहितश्रीशानुबद्धादरः ।
ऊनत्रिंशदवस्थयैव पुरजित्पुर्यां द्युनद्यास्तटे
रम्ये साङ्गपदादिवेदविलसद्विद्यालयप्राङ्गणे ॥ ५ ॥

सोऽयं शास्त्रमतिर्मुदा स्वजनकप्रेमप्रतिष्ठापिते
सोत्साहं मतिशालिशिष्यनिवहं प्राध्यापयन्निस्तुलम् ।
शास्त्रार्थावसरे निसर्गमधुरान् यच्छिष्यवक्त्रोद्गतान्
सत्तर्कान् विबुधा निशम्य परमं मोदं भजन्तेऽनिशम् ॥ ६ ॥

प्राचीनां भारतीयां श्रुतिविहितपथां राजनीतिं विलुप्त-
प्रायामुद्धार्य शिष्यान् सपदि धृतधृतिः पाठयन् द्योतते यः ।
विद्यावाप्त्या समृद्धोऽपि च विनयतया नम्रतामात्रपात्रं
सोयं राजेश्वराख्यो जगति विजयते षष्टिवर्षप्रवेशे ॥ ७ ॥

श्रुतिविहितमिदानीं दर्शयन् धर्ममार्गं स हि विबुधवरेन्द्रः सर्वविद्यानदीष्णः ।
शतमिह हि समानां शास्त्रिवर्यः प्रजीयात् जगति सहकुटुम्बः पुत्रपौत्रादियुक्तः ॥ ८ ॥

[ इदं मंगलाशंसनं भाद्रकृष्णप्रतिपदि शनौ २०१५ वैक्रमे श्रीमता पण्डितरामनाथजोशी ज्योतिषाचार्येण पठितं समर्पितञ्च—सम्पादकः ]।

—*—

# संस्कृतकी सर्वांगीण उन्नति कैसे हो ?


## श्री आदित्यनाथ झा आई. सी. एस. महोदयका भाषण

( कुलपति, वाराणसेय संस्कृतविश्वविद्यालय )




बिहार-संस्कृत-समितिके स्नातकोंके समक्ष उपस्थित हम सबका आज यह कर्तव्य है कि हम संस्कृत की वर्तमान समस्याओं और उनके समुचित समाधान पर विचार करें।

आज देशकी जनता यह सोचती है कि संस्कृतका अध्ययन क्यों किया जाय ? न तो यह जीविकार्जन में सहायक है, न आधुनिकतम ज्ञानार्जनका साधन है। विद्या वही है जिससे अर्थ, सुख, यश तथा नित्य नूतन ज्ञानकी उपलब्धि हो। किन्तु संस्कृतविद्या इनमें से किसी भी उद्देश्यकी पूर्ति नहीं करती। पहले संस्कृत को जनता और राजों-महाराजों दोनों का ही आश्रय प्राप्त था। किन्तु आज जनताका दृष्टिकोण बदल चुका है और संस्कृतभाषा नये दृष्टिकोणके लोगोंकी आवश्यकताओंकी पूर्तिमें असमर्थ है। अतएव उसको जनताका आश्रय मिलना असंभव है। रही राजों-महाराजोंकी बात, वे स्वयं ही समाप्त हो चुके हैं। इस प्रकार संस्कृतज्ञोंके अर्थोपार्जनके प्राचीन साधन नष्टप्राय हैं। इस समय केवल कुछ पाठशालाएँ ही उनकी जीविकाके क्षेत्र हैं। उनमें भी कुछ को छोड़कर शेष पाठशालाओं में अध्यापकको उतना वेतन भी नहीं मिलता जितना कि व्यवस्थित कार्यालयों में निम्न कोटिके कर्मचारियों को मिलता है। अर्थोपार्जन के अन्यक्षेत्रों में तो उनका प्रवेश नितान्त दुष्कर है ही। इस अर्थप्रधान युगमें अर्थके बिना मानव जीवन सर्वथा तिरस्कृत है। यशोलाभ से ही सन्तोष करने की बात भी व्यर्थ ही है क्योंकि आजका शिक्षित-समाज पण्डितोंका कुछ भी सम्मान नहीं करता। ऐसे अनेक कारणोंसे संस्कृतका अध्ययन आज जनता की दृष्टि में अनावश्यक-सा प्रतीत होता है।

## सामयिक तथा मौलिक प्रश्न

यह एक ऐसा सामयिक तथा मौलिक प्रश्न है जिसके समुचित समाधानके बिना संस्कृतके पठन पाठनका प्रचार तथा प्रसार असम्भव है। यदि व्यास के वचनके अनुसार—

ऊर्ध्वबाहुर्विरौम्येष न हि कश्चिच्छृणोति मे।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥

धर्मको ही समस्त पुरुषार्थों का मूल मान लिया जाय और धर्मका स्वरूप समझनेके लिए तथा उसमें जनता की अभिरुचि पैदा करनेके लिए ही संस्कृतके अध्ययन-अध्यापनकी आवश्यकता समझी जाय तो इससे भी वर्तमान धर्मनिरपेक्ष शासन-प्रणालीमें संस्कृतको किसी प्रकारका प्रोत्साहन मिलने की आशा करना व्यर्थ है। धर्मके आधारपर संस्कृतके पठन-पाठनको आगे बढ़ानेमें केवल वर्तमान शासन-प्रणाली ही बाधक नहीं है। वरन् आजका वैज्ञानिक युग भी बाधक है। आज मानवका दृष्टिकोण परिवर्तित हो चुका है। परलोककी कौन कहै, आजका मानव वर्तमान जीवनको भी आध्यात्मिक दृष्टिकोणसे नहीं देखता। वह तो केवल भौतिक साधनोंसे ही अपने

जीवनको सुखमय बनाना चाहता है। विज्ञान को ही आज समस्त समृद्धियोंका मूल समझा जाता है। ऐसा कौन होगा जो सुख एवं समृद्धिके प्रत्यक्ष साधन का तिरस्कार करके अप्रत्यक्ष धर्मकेलिए प्रयत्न करेगा? अतः स्पष्ट है कि केवल धर्मज्ञानके लिए संस्कृतके पठन-पाठनमें जनताकी प्रवृत्ति नहीं हो सकती।

## संस्कृतका भला दोष क्या?

आज देखा जाता है कि अपने जीवनका प्रमुख अंश व्यय करके आचार्य कक्षातक शिक्षा प्राप्त कर चुकनेके पश्चात भी संस्कृतके स्नातक जीवनकी साधारण आवश्कताओंकी पूर्ति करनेमें असमर्थ रहते हैं। पाश्चात्य शिक्षा-पद्धतिद्वारा शिक्षितवर्ग संस्कृतको प्रायः अशिक्षितके ही समान समझता है। समाजमें भी उसकी कोई प्रतिष्ठा नहीं होती और प्रशासन भी उसको उपेक्षाकी दृष्टिसे देखता है। इन्हीं कारणों से संस्कृतके अध्ययनमें कोई उत्साह के साथ प्रवृत्त नहीं होता। किन्तु यह विचारणीय है कि क्या इसका कारण संस्कृतका कोई स्वाभाविक न्यूनता है? क्या संस्कृत मूर्खकी भांति सदैव अक्षम, अपटु, निर्बल, निर्धन तथा उपेक्षित रहा है? क्या उसके सम्बन्धमें मनुका यह उद्‌घोष कभी सत्य नहीं हुआ है?–

सेनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति॥

## संस्कृत जब लोकभाषा थी

इतिहास साक्षी है, संकृतकी यह वर्तमान दुरवस्था स्वाभाविक नहीं है। संस्कृत पहले न केवल धर्म अथवा साहित्यकी भाषा थी वरन् बहुत समय तक लोकभाषा तथा राष्ट्रभाषा रही है। राजा भोज के समय लोकभाषा तथा राष्ट्रभाषा रही है। राजाभोजके समयका बोझा ढोनेवाला मजदूर भी कहता है—

'भारो न बाधते राजन्
यथा बाधति' बाधते।'

उस समय का जुलाहा भी कहता है—

काव्यं करोमि न हि चारुतरं करोमि,
यत्नात् करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ!
हे साहसांक! कवयामि? वयामि? यामि?

मण्डनमिश्रके गाँवकी पनिहारिनें भी उनके घरका मार्ग बतलाती हुई शंकराचार्य से कहती हैं—

**जगद् ध्रुवं वा जगदध्रुवं वा**
**कीराङ्गना यत्र गिरो गिरन्ति।**
**द्वारस्थनीडान्तरसन्निरुद्धा**
**अवेहि तन्मण्डनपण्डितौकः।**
**स्वतः प्रमाणं परतः प्रमाणं**
**कीरङ्गना यत्र गिरो गिरन्ति॥**
**द्वारस्थनीडान्तरसन्निरुद्धा**
**अवेहि तन्मण्डनपण्डितौकः।**

इसी प्रकार चाणक्य, माधव आदि ऐसे अनेक व्यक्ति हुए हैं जिन्होंने संस्कृतके उद्भट विद्वान् होनेके साथ राज्यसंचालकके दुर्वह उत्तरदायित्वको भी निपुणताके साथ निबाहा है। क्या यह संस्कृतके गौरवके लिए पर्याप्त नहीं है कि वह विदेशियोंकी सुदीर्घ शासनावधिमें सब भाँति उपेक्षित होती हुई भी न केवल किसी तरह जीती रही, अथवा अपने स्वाभाविक माधुर्यको बनाये रही वरन् वेदों,

**उपनिषदों, पुराणों तन्त्र, रामायण तथा महाभारत आदि इतिहास-ग्रन्थों दर्शनों और काव्योंके विषयगत महत्व, शैली-सौंदर्य तथा भाषाके आकर्षण द्वारा अपनी महिमाका विस्तार करती हुई सम्पूर्ण देशको एकताके सूत्रमें बांधे रही और आसान्तिक विनाशसे बचाती रही ?**

## संस्कृतको भूलना घातक

वैदेशिक शासनमें जब कि देशका प्रायः सब कुछ नष्ट हुआ, उस समय भी केवल संस्कृत ही सुरक्षित रह सकी। गत फरवरी मासमें दिल्लीके विज्ञान भवन में आजाद व्याख्यानमालाके क्रममें भाषण करते हुए प्रधान मन्त्री पण्डित नेहरूने यह यथार्थ ही कहा था कि संसारके जातीय इतिहासोंमें कदाचित् ही किसी भाषाने इतना महत्वपूर्ण कार्य किया है जितना कि संस्कृतभाषाने भारतवर्षमें किया है। संस्कृत न केवल उच्च विचारों की अभिव्यक्ति का तथा सर्वोत्तम साहित्यका माध्यम रही है, किन्तु राजनीतिक दृष्टिसे विभक्त भारतकी एकताकी रक्षाका महनीय साधन भी रही है। हजारों वर्षों से लाखों व्यक्तियों के जीवन क्रममें रामायण और महाभारत अनुस्यूत है। कभी-कभी यह विचार करते हुए मुझे महान् कष्टका अनुभव होता है कि यदि हमारी जाति बुद्धके उपदेशों, उपनिषदों तथा संस्कृतके महान् काव्योंको भूल जायगी तो उसका भविष्य कैसा होगा ? मेरी समझमें उस समय वह समूल नष्ट होकर अपने उन असाधारण गुणोंसे रहित हो जायगी जिनके द्वारा वह युगोंसे सम्मानितम होती आयी है। वस्तुतः संस्कृतको भूलकर 'भारत' भारत ही नहीं रह सकेगा।

## संस्कृत सर्वगुणसम्पन्न

इस प्रकार विचार करनेपर हम इस परिणामपर पहुँचते हैं कि आज संस्कृतमें जो कुछ न्यूनता प्रतीत हो रही है वह स्वाभाविक नहीं है। संस्कृत वाङ्मय सुसमृद्ध एवं सर्वगुणसम्पन्न है। संस्कृतभाषामें भावाभिव्यक्ति तथा नवनिर्माण की शक्ति आज भी अक्षुण्ण है। संस्कृतके माध्यमसे हमारे पूर्वजों ने समय-समय पर जो सन्देश दिये हैं, वे आज भी पूर्ववत् सत्य और शाश्वत है।

अतः यदि वैदेशिक शासनकी ही भांति स्वतन्त्र भारतमें भी संस्कृतकी उपेक्षा न की जाय और उसे समुचित स्थान दिया जाय, उसके शिक्षणका समुचित प्रबन्ध किया जाय तथा प्रशासनद्वारा संस्कृतज्ञोंको न्यायोचित स्थान दिया जाय तो कुछ ही समयमें संस्कृत न केवल पूर्ववत् समृद्धिशालिनी हो जायगी, अपितु युगानुरूप नवीनताके साथ और अधिक श्रीसम्पन्न हो सकेगी।

यदि यह कहा जाय कि यह विज्ञानका युग है, आज कोई भी धर्म और परलोक अन्धभक्त बनकर वर्तमान की उपेक्षा नहीं कर सकता, प्रत्येक वस्तुको मानव विज्ञानकी कसौटी पर कसना चाहता है यह सर्वथा सत्य है। किन्तु साथ ही यह भी सत्य है कि आज वैज्ञानिक आविष्कारों द्वारा देश और कालका अन्तर समाप्त हो चुका है, सुख और स्वास्थ्यके नये-नये साधनोंके आविर्भावसे मानव-जीवन अधिक सुविधा सम्पन्न है, यातायात और संचारके अभिनव आविष्कारोंसे हम एक दूसरेके अत्यन्त निकट हो गये हैं और विश्वबन्धुत्वका द्वार खुल गया है फिर भी हम पहले की भाँति सुख और शांन्तिका अनुभव नहीं करते। भय, अविश्वास, आतंक आदि दिनों दिन

बढ़ते जा रहे हैं। प्रभुत्वविस्तार की भावनासे आज सारा जगत् आक्रांत है। संघर्षकी अग्नि सर्वत्र ज्वलनोन्मुख है विश्व प्रतिक्षण प्रलयकी ओर जा रहा है। ऐसी दशामें धर्मकी उपेक्षा करते हुए आँख मुँदकर विज्ञानकी स्तुति करना सर्वथा बुद्धि-विरुद्ध और अन्धविश्वास है। विश्व के नेता और विद्वान् आज इसके लिए चिन्तित हैं कि इस अनर्थकारी संघर्ष को कैसे टाला जाय। वे यह अनुभव करते हैं कि यदि मानवकी दृष्टि भोगवाद पर ही केन्द्रित रही और उसके समक्ष कोई विशिष्ट लक्ष्य अथवा आदर्श न रहा तो विश्वके राष्ट्रोंका वर्तमान दृष्टिकोण बदलना असम्भव होगा। मानवधर्मकी जगह मात्स्यन्याय ही प्रलय होगा। बड़ी मछली छोटी मछली को अपना आहार ही समझती रहेगी। विश्व-बन्धुत्वका आदर्श कपोलकल्पनामात्र होगा और संहारास्त्रोंकी होड़ कभी बन्द न होगी।

## संस्कृतका प्रयोजन सुस्पष्ट

ऐसी परिस्थितिमें संस्कृतके अध्ययनका प्रयोजन स्वतः स्पष्ट हो जाता है, क्योंकि वह वाङ्मय संस्कृत-वाङ्मय ही है जिसके पद-पद में भारतीय तत्त्वचिन्तकों द्वारा यह तथ्य प्रतिपादित किया गया है कि केवल भौतिक समृद्धि और विषयनिष्ठासे मानव कदापि सन्तुष्ट नहीं रह सकता। वैदिक, जैन, बौद्ध आदि भारतकी सभी विचारधाराओंने निर्विरोध रूपसे यह स्वीकार किया है कि विषयमें अत्यधिक आसक्ति होना ही रागद्वेषकी उत्पत्ति और विश्व-संघर्ष का मूल कारण है। किन्तु इस दोषको तबतक दूर करना असम्भव है जबतक मानवका आत्मविषयक मिथ्या विश्वास दूर न हो जाय। इस मिथ्या विश्वास को दूर करने के लिए अपने वास्तविक स्वरूपका ज्ञान हो जाने पर भेद-भावकी दृष्टि अपने आप दूर हो जाती है। इसे ही गीता में सात्त्विक ज्ञान कहा गया है—

सर्वभूतेषु मामेकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्॥

इस प्रकार एकात्मदर्शन से ही समस्त अनर्थोंकी निवृत्तिकी जा सकती है। इसीलिए भारतकी नीति उपनिषदों के इस सिद्धांत को सर्वोपरि समझती है—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

## प्रोत्साहन और संवर्धन आवश्यक

विश्वमें भारतकी इस पुरातन विचारधाराके प्रसारके लिए संस्कृत शिक्षाका प्रोत्साहन एवं संप्रवर्तन अत्यन्त अपेक्षित है। स्वतन्त्र भारतकी जनता एवं प्रसाशनने इन तथ्यको स्वीकार करते हुए अखिल भारतीय संस्कृत आयोग की नियुक्ति की और आयोग-की रिपोर्टके आधारपर संस्कृतशिक्षाके व्यापक प्रचारका प्रयत्न किया जा रहा है। उत्तरप्रदेशके प्रशासनने वाराणसीमें एक संस्कृतविश्वविद्यालय की स्थापना की जिसने अपने प्रथम वर्षमें ही बहुमुखी प्रगति की है। संस्कृत वाङ्मयकी जिन शाखाओंके अध्ययनाध्यापनकी चिरकालसे उपेक्षा रही उनके पठन-पाठनके समुचित प्रबन्धके लिए विश्वविद्यालय-में नये विभाग खोले गये तथा अग्रिम वर्षोंमें नये और विभागोंके खोलनेकी व्यवस्था की गयी है। जिन वैदेशिक भाषाओंमें संस्कृतवाङ्मयसे सम्बद्ध महत्वपूर्ण कार्य हुए हैं और सम्प्रति हो रहे हैं उनके शिक्षणकी व्यवस्था भी विश्वविद्यालयमें की गयी है। वैदेशिक शासनकालमें संस्कृतकी प्राचीन शैली-के जिस अनुसन्धान कार्यकी सर्वथा उपेक्षा रही है

उसके पुनरुज्जीवनार्थ एक वृहत अनुसंधान संस्थान-का प्रतिष्ठापन किया गया है।

## मंगल सूचक

संस्कृत शिक्षाके लिए यह मंगल सूचक है कि इस वाराणसीमें संस्कृत-विश्वविद्यालयकी स्थापना के अनन्तर ही देशके अन्य राज्योंमें भी संस्कृत-विश्वविद्यालयोंकी स्थापनाकी चर्चा चल रही है। जहाँ तक मैं समझता हूँ, बिहारप्रान्तमें तो अग्रिम शिक्षा-सत्रसे ही विश्वविद्यालय अपना कार्य आरम्भ कर देगा। जो मिथिला आदिकालसे ही सभी विद्याओं, विशेषतः संस्कृतविद्याका केन्द्र और गौतम, याज्ञ-वल्क्य प्रभृति तत्त्वदर्शियोंकी साधना भूमि रही है, जिसके राजा राजर्षि जनकके ज्ञान और त्यागकी कीर्ति उपनिषदों में गायी गयी है, जहाँ सीता सदृश आदर्श नारियों ने जन्म लिया है, जहाँ गंगेश, वाच-स्पति, उदयन प्रभृति दार्शनिक और जयदेव, विद्यापति प्रभृति महाकवि पैदा हुए हैं, जहाँ की 'धौतपरीक्षा' आज भी सर्वविदित है, वहाँ संस्कृतविश्वविद्यालयके प्रतिष्ठापनमें विलम्ब होना उसके गौरवके सर्वथा प्रति-कूल है। अतः दरभंगा नरेशने अपना भव्य राजभवन तथा विशाल पुस्तकालयको समर्पित करके एक अनु-करणीय आदर्श उपस्थित किया है। देशका दृढ़ विश्वास है कि वाराणसी और विहारके संस्कृत विश्व-विद्यालय ज्ञान विज्ञानके पारस्परिक आदान प्रदान और संवर्धनद्वारा विश्वके कल्याणका मार्ग प्रशस्त करेंगे।

## कालिदासकी जन्मभूमि

संस्कृत शिक्षाकी इस नवजागरण बेलामें संस्कृत पण्डितों में भी अनुसन्धानकी प्रवृत्ति जाग्रत हो रही है। अतः इस समारोहमें एकत्र विद्वानोंके समक्ष मैं महाकवि कालिदासकी जन्मभूमि तथा शिक्षा प्राप्ति-के प्रामाणिक स्थानके सम्बन्धमें कुछ तथ्य विचारार्थ प्रस्तुत करना चाहूंगा।

**कालिदास की जन्मभूमि आदिके सम्बन्ध में विद्वानोंमें भारी मतभेद है। इन्हें कोई बंगाल, कोई मालव, कोई धारा, कोई उज्जयिनी तथा कोई कश्मीरका निवासी मानते हैं किंतु एक ऐसा प्रामाणिक लेख प्राप्त हुआ है जिसके बलपर कालिदासकी जन्मभूमि मिथिला सिद्ध होती है।**

दरभंगा जिलेमें 'बेनीपट्टी' के अन्तर्गत उच्चैठ (उच्चपीठ) गाँवमें एक प्राचीन नदीके पश्चिम तट पर भगवती दुर्गाकी एक प्राचीन मूर्ति है। इससे पूर्वदक्षिणकी ओर एक ऊँचा टीला है जो अत्यन्त प्राचीनकालसे कालिदासके विद्यापीठके नामसे प्रसिद्ध है। आज विद्यार्थीगण इस दुर्गामूर्तिकी उपा-सना विद्या वरदात्रीके रूपमें करते हैं। लेखपालोंके कागज पत्रोंमें यह भूमि 'कालिदासकी चौपड़ीके' नामसे अंकित है। पुराने कागज पत्रोंमें भी इस भूमिका अंकन कालिदासके ही नामसे है। परम्परा-गत जनश्रुतिके अनुसार कालिदासने यहीं विद्या प्राप्त की थी। इससे यह अनुमान किया जाता है कि कालि-दासकी जन्मभूमि भी कहीं इसी स्थानके पास-पड़ोस में रही होगी। यदि यह तथ्य परीक्षणोंसे प्रामाणिक सिद्ध होता है तो मिथिला एवं बिहारके लिए यह गौरवका विषय होगा!

आशा है, बिहारकी सरकार इस विषय पर विद्वानों-का निर्णय प्राप्त कर कालिदासकी विश्वविख्यात प्रतिष्ठा-के अनुरूप एक स्मारकके निर्माण की व्यवस्था करेगी।

